Kendriya Sanskrita Vidyapeetha Series No. 15

# NĀRADĪYA SAṀHITĀ

# नारदीयसंहिता

EDITED BY

RAGHAVA PRASĀDA CHAUDHARY

*Research Assistant, Kendriya Sanskrita Vidyapeetha, Tirupati.*



KENDRIYA SANSKRIT VIDYAPEETHA

TIRUPATI

1971

Kendriya Sanskrita Vidyapeetha Series No. 15

# NĀRADĪYA SAṀHITĀ

EDITED BY
RAGHAVA PRASADA CHAUDHARY, M.A.,
*Vyākaranāchārya, Dip. in. Ed.*
*Research Assistant*
*Kendriya Sanskrita Vidyapeetha, Tirupati.*



KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1971

केन्द्रियसंस्कृतविद्यापीठग्रन्थमाला–१५

# नारदीयसंहिता

केन्द्रियसंस्कृतविद्यापीठसंशोधनविभागसहायकेन
चौधर्युपाह्वेन राघवप्रसादेन
पाठभेदादिभिः संशोध्य संपादिता




केन्द्रियसंस्कृतविद्यापीठम्
तिरुपति
१९७१

## विषयव्यवस्थापनक्रमः

# उपोद्घातः

नारदीयसंहिता पाञ्चरात्रागमस्य अमुद्रितासु संहितासु अन्यतमा समालोचनात्मकसंस्करणरूपेण प्रथमतया अधुना एव मुद्रिता प्रकाशिता च भवति। यद्यपि नारदीयसंहिता इति नाम्ना बहवः संहिताग्रन्थाः ज्यौतिषधर्मशास्त्रभक्त्यादिविषयप्रतिपादनपराः उपलब्धाः सन्ति; तथापि ताः संहिताः पाञ्चरात्रीयनारदीयसंहितापेक्षया विवेच्यविषयदृष्ट्या सर्वथा भिन्नाः। ताः नारदीयसंहिताः तत्तच्छास्त्रीयान् विषयान् प्रतिपादयन्ति। पाञ्चरात्रागमस्थविषयैः सह तासां विषयाः केनापि प्रकारेण लेशतोऽपि संबन्धं न बिभ्रति।

अस्याः नारदीयसंहितायाः प्रथममत्र संक्षिप्तः परिचयः दीयते। इयं नारदीयसंहिता पाञ्चरात्रागमस्थपाद्मपारमेश्वरेश्वरादिसंहितावत् नातिविस्तृता, नापि च भार्गवानिरुद्धपराशरपुरुषोत्तमादिसंहितावत् अतिसंक्षिप्तैव। परिमाणेन विषयप्रतिपादनदृष्ट्या च इयं संहिता मध्यमं स्थानं वहति। त्रिंशदध्यायात्मिकायामस्यां संहितायां पूर्णाः श्लोकाः ३६८१ सन्ति। यद्यपि डा. एच. डेनियलस्मिथमहाभागेन 'नारदीय-संहिता एकत्रिंशदध्यायात्मिका' इति स्वीकृतम्,[1] तथापि तत्र न किमपि क्षोदक्षमं मानं पश्यामः। अस्याः संहितायाः उपलब्धासु सर्वास्वपि मातृकासु त्रिंशदेवाध्यायाः समुपलभ्यन्ते। ग्रन्थस्यावतारोपसंहारयोः पर्यालोचनमपि अस्याः संहितायाः त्रिंशदध्यायात्मकत्वमेव स्फुटयति। पाञ्चरात्रागमे अवश्यप्रतिपाद्याः प्रायः सर्वेऽपि अंशाः अस्यां संहितायाम् अवकाशं लभन्ते। मध्यमं पन्थानमवलम्ब्य सर्वे विषयाः प्रतिपाद्यन्ते। अस्मिन् विषये डा. स्मिथमहोदयोऽपि इत्थं स्वाभिप्रायं प्रकटयति-' अस्य ग्रन्थस्य आलोचनानन्तरं पाठकः एतत् संभावयितुं शक्नुयात् यत् मध्यमायसंपन्नानाम् आलयनिर्माणं श्रेयःप्रदमिति विश्वासेन भक्त्या च भावितान्तःकरणानां विस्तृतालयनिर्माणार्थपर्याप्तधनरहितानां

---

1. पाञ्चरात्रप्रासादप्रसाधनम्. पृ. 187.

भक्तानां कृते अस्य ग्रन्थस्योत्थितिः अभूदिति '[1]। अत एतद् वक्तुं युक्तं यत् अस्याः संहितायाः प्रयोजनं पाञ्चरात्रसंप्रदाये विद्यमानानां प्रायः सर्वेषां विषयाणां संक्षेपेणैव प्रतिपादनमिति ।

गौतमं प्रति देवर्षिणा नारदेनोक्तत्वात् अस्याः संहितायाः नाम नारदीयसंहिता इति प्रवक्तृनाम्ना प्रथिता। मूलतः नारदः इदं पाञ्चरात्राख्यं महच्छास्त्रं नारायणमुखाच्छ्रुतवान् । तदेव शास्त्रं संक्षेपरूपेण गौतमं प्रति उक्तवान् इत्ययं विषयः अस्याः आदौ अन्ते च वर्तमानस्य ग्रन्थावतारस्य ग्रन्थोपसंहारस्य च परामर्शेन सम्यगवधृतः भवति ।

भृगुः स्वाश्रमे मुनिभिः समावृतः सन् उपविष्टः आसीत् । तस्मिन्नेवावसरे अत्रिः तत्रागत्य विष्णुभक्तिपरं भागवतं ज्ञानं पप्रच्छ । अत्रिः भृग्वाश्रमं प्रति आगमनात् पूर्वं विमुक्त्यर्थं बहुसंवत्सरव्यापि महत्तपः चकार। ततः वैष्णव्या वाण्या प्रेरितः सन् वैष्णवज्ञान-प्राप्त्यर्थं भृग्वाश्रमं प्रति आजगाम। भृगुः स्वकीयं वैष्णवज्ञानप्राप्ति-वृत्तान्तमेवं वर्णयति—पुरा मुनिभिरावृतः गौतमः स्वाश्रमे उपविष्टः आसीत्। तस्मिन् काले दैवयोगात् ब्रह्मपुत्रः नारदः स्वर्गलोकात् तत्र आगतः। नारदं दृष्ट्वा विस्मयान्वितः गौतमः आसनादिभिः समुचितो-पचारैः नारदं पूजयामास। सन्तुष्टं नारदं गौतमः अकथयच्च 'पुरा तपस्यन्तौ नरनारायणौ मयाऽराधितौ। तौ च ऊचतुः 'अचिरादेव तवाश्रमे नारदात् त्वं ज्ञानसिद्धिं प्राप्स्यसीति'। ततः प्रभृति अहमत्र भवन्तं प्रतीक्षमाणः अस्मि। यदि भवान् तुष्टः तर्हि कृपया ज्ञान-मुपदिशतु" इति। तस्य वचः श्रुत्वा नारदः गौतमं प्रशस्य अस्य ज्ञानस्य

---

1. The conjecture which one is drawn to make after working with this text is that it might have been aimed at a "middle income" class of worshippers, a group who perhaps wished to erect temples as acts of piety and devotion but whose means did not permit them much extravagance or elaboration over basic building-needs."

(पाञ्चरात्रप्रासादप्रसाधनम्. पृ० 187-188 )

स्वीकारे तदीयम् अर्हत्वं चोक्त्वा पाञ्चरात्रज्ञानं प्रतिपादयितुं प्रतिजज्ञे। किन्तु गौतमस्य वैष्णवदीक्षारहितत्वात् पाञ्चरात्रज्ञानप्राप्तौ अनधिकारित्वं चोक्तवान्। गौतमश्च दीक्षास्वीकरणे व्यग्रः सन् नारदात् वैष्णवीं दीक्षामधिगम्य पाञ्चरात्रज्ञानं प्राप्तुं सम्पन्नाधिकारः अभूत्। तदा नारदः त्रिंशदध्यायेषु पाञ्चरात्रागमस्थान् प्रायः सर्वान् अपि विषयान् संक्षेपतः उक्त्वा अन्तर्दधौ। ततः प्रभृति गौतमः नारदोक्तप्रकारेण पूजादौ पाञ्चरात्रज्ञाने च बद्धादरः अभूत्। स च स्वशिष्यान् एतज्ज्ञानमध्यापयामास। ते च शिष्याः अनेन पथा अजमव्ययं विष्णुं पूजयामासुः; आत्यन्तिकं सुखं च प्रापुः। अमुं वृत्तं विनिवेद्य ऋषिवरः भृगुः दृष्ट्यगोचरतां जगाम। ततः प्रभृत्येव अत्रिः अव्यक्तं विष्णुमिष्ट्वा भूतं भव्यं भविष्यं सर्वं च ज्ञानं प्राप, इत्ययमेवास्याः नारदीयसंहितायाः अवतरणक्रमः। इत्थं नारायणोपज्ञं शास्त्रं नारदेन लोके प्रवर्तितमिति अस्याः संहितायाः उपदेष्टृक्रमः। अस्याश्च अवतरणक्रमः संक्षेपतः इत्थं सूच्यते—

वासुदेवः



नारदः



गौतमः



भृगुः



अत्रिः

इत्थं च वासुदेवात् प्रथमं नारदेन गृहीतत्वात् तेनैव प्रवर्तितत्वाच्चास्याः संहितायाः नारदीयसंहिता इति नाम।

यद्यपि अस्याः संहितायाः कासुचित् मातृकासु अध्यायान्तपुष्पिकासु 'नारदसंहिता' इति निर्दिश्यते, तथापि शिष्टासु सर्वासु मातृकासु, अध्यायान्तपुष्पिकासु, अन्येष्वपि च केषुचित् ग्रन्थेषु येषु अस्याः संहितायाः उद्धरणानि समुपलभ्यन्ते सर्वत्र तत्र 'नारदीयसंहिता' इति एतस्यैव नाम्नः दर्शनेन अस्मिन् संस्करणे 'नारदीयसंहिता' इत्येतदेव स्वीकृतम्, पुष्पिकासु च निर्दिष्टम्।

अस्यां संहितायाम् अध्यायक्रमानुसारं प्रतिपादिताः विषया इत्थं संगृह्यन्ते ।

प्रथमेऽध्याये – ग्रन्थावतारः, पाञ्चरात्रस्य सामान्यतः रूपवर्णनम्, शुद्धशुद्धेतरसृष्टिवर्णनक्रमः, पाञ्चरात्रशास्त्रस्य मायादूरीकरणे प्रभुत्वम् ।

द्वितीयेऽध्याये – भगवतः आराधनविधिनिरूपणक्रमे अर्चकदैनन्दिनकृत्यवर्णनम्, मिश्रार्चनस्वरूपम्, भगवतः आवाहनविसर्जनयोः शंकासमाधाने, भगवतः सामान्यस्वरूपादिकम्, अर्चने हविर्दानबलिदानक्रमनिर्देशः । अर्चनस्य कालसंख्याकृताः पञ्चभेदाश्च ।

तृतीयेऽध्याये – वासुदेवसङ्कर्षणाच्युतानिरुद्धानां चतुर्व्यूहमूर्तिमन्त्राणामुद्धारक्रमः । तेषामङ्गनिर्देशपुरस्सरं साधनप्रकारः तत्फलञ्च । विशिष्य वासुदेवमन्त्रस्य विस्तरेण वर्णनञ्च ।

चतुर्थेऽध्याये – विष्ण्वादिद्वादशमासाधिपानां मन्त्रस्वरूपं तेषां साधनप्रकारः फलादिकञ्च ।

पञ्चमेऽध्याये – मत्स्यादिप्रादुर्भावानामवतारादिमूर्तीनां च मन्त्रोद्धारक्रमः । तेषां मन्त्राणां फलादिवर्णनञ्च ।

षष्ठेऽध्याये – त्रिपञ्चाशत्संख्याकानां मुद्राणां स्वरूपकल्पनप्रकारज्ञापनपुरस्सरं तासां विनियोगादिकञ्च ।

सप्तमेऽध्याये – दीक्षाङ्गभूताग्निकार्ये अपेक्षितानामग्निकुण्डानां स्वरूपादिकं, प्रासङ्गिकानामन्येषां केषांचित् तत्संबद्धानां विषयाणां च वर्णनम् ।

अष्टमेऽध्याये – दीक्षायामवश्यं प्रयुज्यमानानां भद्रकादिमण्डलानां स्वरूपकल्पनादिप्रकारः ।

नवमेऽध्याये – अतिविस्तरेण दीक्षाप्रयोगः । तत्र तत्त्वादिशोधनक्रमे ब्रह्माण्डस्य, तत्र स्थितानां लोकादीनां च वर्णनं, अस्मिन् क्रमे वर्णाध्वादीनां निर्देशः, ब्रह्मणः स्वरूपम्, प्रकृतिपुरुषयोः स्वरूपसंबन्धादिवर्ण-

नञ्च। दीक्षाया: एव मोक्षोपायत्वं, दीक्षितस्य जीवन्मुक्तत्वम्, विस्तृतेऽस्मिन् अध्याये अनेकेषां भूगोलशास्त्रीयाणां खगोलशास्त्रीयाणां च विषयाणां वर्णनम्।

दशमेऽध्याये – संक्षिप्ततया दीक्षान्ताभिषेकविधिनिरूपणं, सप्तविधवैष्णवानां लक्षणं च। अभिषेकस्य प्रकार: वैष्णवानामाचारश्च।

एकादशेऽध्याये – समयाचार:, दीक्षितानां दैनन्दिनकृत्यम्। तत्र प्रात: शय्यात्यागानंतरं संपाद्यमानानां प्राय: सर्वेषां वैष्णवकृत्यानां संक्षिप्ततया वर्णनम्।

द्वादशेऽध्याये – भगवते अर्पणीयस्य हविष: वर्णनम्। हविष्कल्पनार्थं स्वीक्रियमाणानामन्नादीनां निर्देश:, विविधान्नकल्पनप्रकार:, हविष: भेदा: लक्षणानि च।

त्रयोदशेऽध्याये - प्रतिमाकल्पनप्रकार:, प्रतिमार्थं विभिन्नोपादानद्रव्याणां वर्णनम्, प्रतिमाया: साधारणासाधारणभेदमूलकानि स्वरूपाणि, तेषां कल्पनप्रकारश्च। अङ्गुलादिमानानां लक्षणादिकम्, बिम्बाङ्गप्रत्यङ्गमानादिकं च। वासुदेवादिदेवानां प्रतिमाकल्पनप्रकार: पीठकल्पनादिविषयाश्च। चलादिमूर्तीनां यानगतमूर्तेश्च लक्षणं कल्पनक्रमश्च। द्वादशमासाधिपानां प्रतिमाकल्पनप्रकार:। दशावतारमूर्तीनां परिवारदेवतानां च मूर्तिस्वरूपलक्षणम्। तन्त्रसङ्करनिषेध:।

चतुर्दशेऽध्याये – आलयकल्पनप्रकार:। प्रासादस्थलं तत्परीक्षणविधि:, भूमे: भेदा:, वास्तुपदकल्पनपूर्वकं तत्रस्थानां देवानां नामानि, तत्र क्रियमाणानां होमादीनां विधिनिरूपणम्, इष्टकान्यास:, गर्भन्यासक्रम:, आलयानां भेदबाहुल्यम्, आलयाङ्गानां वर्णनम्।

पञ्चदशेऽध्याये – प्रतिष्ठाविधि:, तत्र प्रशस्त: काल:, मण्डपादिकल्पनप्रकार:, प्रतिष्ठाया: भेदा: तेषां लक्षणानि च। विविधानां बिम्बानां स्थापने विशेषा:, आवरणादिदेवानां प्रतिष्ठाक्रम:, बिम्बस्य सजीवत्वप्रतिपादनं, केषांचित् सृष्ट्युत्पत्त्यादिपाञ्चरात्रीयतात्त्विकविषयाणां वर्णनम्।

षोडशेऽध्याये – शालामण्डपगोपुरादीनां प्रतिष्ठाक्रमः ।

सप्तदशेऽध्याये – जीर्णसंस्कारप्रक्रिया, तस्याः भेदादिकञ्च । बालालयविधिः । आलयादिजीर्णोद्धारप्रकारः । सिद्धादिकल्पितजीर्णबिम्बाद्युद्धारक्रमे विशेषः । अत्रानुक्तानां विषयाणां पाञ्चरात्रस्य संहितान्तरेभ्यः स्वीकरणानुमतिः ।

अष्टादशेऽध्याये – उत्सवाङ्गभूतस्य ध्वजारोहणस्य क्रमः । उत्सवशब्दार्थः, तस्य भेदाः । ध्वजस्तंभकल्पनादिप्रकारः, तस्य स्थापनादिकञ्च । ध्वजारोहणप्रयोगः तत्र जायमानदोषापनुत्तये प्रायश्चित्तक्रमश्च ।

एकोनविंशेऽध्याये – उत्सवाङ्गभूता एव विषयाः । अङ्कुरार्पणम्, तदाधारभूतानि पात्राणि, बलिविधिः, होमक्रमः, उत्सवव्याप्तिकालः, दिनदेवताः, आचार्यसंख्यादिः, महोत्सवप्रयोगः, पुष्पयागक्रमः ।

विंशेऽध्याये – स्नपनक्रमः । उत्तममध्यमाधमस्नपनानां स्वरूपनिर्देशपूर्वकं लक्षणादिप्रदर्शनं प्रयोगश्च । स्नपनपीठस्वरूपाणां स्नपनद्रव्याणाञ्च विस्तृतवर्णनम् ।

एकविंशेऽध्याये – भगवदर्पणार्हाणां पुष्पाणां फलानां हविषां च परिगणनादिकम् । तत्तद्द्रव्यसंग्रहणयोग्यपात्राणां च वर्णनम् ।

द्वाविंशेऽध्याये – स्नपनादिकर्मसु विहितानां वस्तूनामलाभे तत्प्रतिनिधिभूतानां वस्तूनां नामकीर्तनम् ।

त्रयोविंशेऽध्याये – पवित्रोत्सवविधिः । पवित्रोत्सवप्रयोजनम्, तस्य कालः, स्थानं, तदर्थं यागशालादिकल्पनक्रमः, पवित्रकल्पनविधिः, पवित्रोत्सवप्रयोगश्च ।

चतुर्विंशेऽध्याये – आराधनानुरूपं फलभेदनिरूपणं, कृष्णजयन्तीफलं, भगवते तत्तद्वस्तुनिवेदनफलम्, कार्तिकोत्सवफलम्, मार्गशीर्षैकादशीव्रतफलम् । अन्यमासेषु अनुष्ठातव्यानां विशिष्टपूजादीनां च फलम् ।

<u>पञ्चविंशेऽध्याये</u> – प्रायश्चित्तानां निरूपणम् । भगवदाराधनादिक्रमे ज्ञाताज्ञातरूपैः जायमानन्यूनाधिक्यैः प्रयुक्तानां दोषाणां निरसनार्थं प्रायश्चित्तविधानम् ।

<u>षड्विंशेऽध्याये</u> – भगवन्निवेदनार्थं महाहविर्विधानं, तदर्थं मण्डपादि-कल्पनप्रकारः, हविर्निवेदनाङ्गस्नपनक्रमः, महाहविर्निवेदनप्रकारश्च ।

<u>सप्तविंशेऽध्याये</u> – भगवदाराधनप्रसङ्गे प्रयुज्यमानानां स्रुक्स्रुवादीनां पात्राणां स्वरूपादिकम्, आहुत्यादौ विहितानां द्रव्याणां परिमाणादिकञ्च ।

<u>अष्टाविंशेऽध्याये</u> – स्वतन्त्रास्वतन्त्रविमानभेदौ । तयोः लक्षण-निर्देशः । अग्न्यादीनां तत्तद्देवानां स्वतन्त्रार्चनार्थमालयबिम्बादि-कल्पनप्रकारः । तेषां संक्षेपतः अर्चनक्रमनिर्देशश्च ।

<u>एकोनत्रिंशेऽध्याये</u> – वैष्णवानां निषेकादिश्मशानान्ताः संस्काराः ।

<u>त्रिंशेऽध्याये</u> – अभिगमनोपादानेज्यास्वाध्याययोगाख्यानां पञ्चका-लानां संग्रहेण स्वरूपवर्णनम् इति ।

इत्थं नारदीयसंहिता पाञ्चरात्रागमीयान् सर्वान् अपि विषयान् स्पष्टतया प्रतिपादयति । विषयप्रतिपादने सांकर्यमथवा अस्पष्टत्वं प्रायः नास्ति । एकैकस्मिन् अध्याये प्रायः एकः विषयः विषयद्वयं वा विविक्त-तया प्रतिपाद्यते । केचन विषयाः अध्यायद्वये ततोऽप्यधिकेषु वाध्यायेषु अनुवर्तन्ते । सर्वत्र क्रमपरिपालनं दृश्यते । सृष्टिक्रमः, मन्त्राणां स्वरूपादिकं, प्रादुर्भावावतारदेवानां चोत्पत्त्यादिक्रमः अन्ये च ईदृशाः विषयाः चतुर्व्यूहमवलम्ब्यैव विशदं वर्ण्यन्ते । यद्यपि सपरिकराणां मन्त्राणां वर्णनमित्येक एव विषयः तृतीयचतुर्थपञ्चमेषु अध्यायेषु अनुवर्तते तथापि अत्र विषयवर्णने काचित् समीचीना पद्धतिः अवलम्ब्यते । एकैकस्मिन् अध्याये समानप्रकृतिकाः मन्त्राः क्रमानुसारं वर्णिताः । वर्णने न कुत्रापि विषयान्तरसंस्पर्शः क्रमव्यतिक्रमो वा दृश्यते । मुद्राणां कल्पनप्रकारनिरूपणे अन्यत्र च एतादृशेषु स्थलेषु ग्रन्थः प्रायः सर्वत्र संदेहरहितः भवति । पाञ्चरात्रसंहितासु सामान्यतः हृदयाद्यङ्ग-

मुद्राः षट्संख्याकाः एव वर्णिताः सन्ति, अत्र तु द्वादशसंख्याकाः अङ्गमुद्राः वर्णिताः। दीक्षाविधिवर्णनक्रमे नवमेऽध्याये केचन भूगोलशास्त्रीयाः खगोलशास्त्रीयाश्च विषयाः महता विस्तरेण निरूपिताः। अत्र केषांचित् लोकानां नरकादीनां च वर्णनं वर्तते। भारतस्यापि वर्णनं सम्यक् कृतं दृश्यते। भुवनाध्ववर्णनम् अत्र यावता ग्रन्थबाहुल्येन दृश्यते प्रायः अन्यत्र कुत्रापि पाञ्चरात्रसंहितायां न तावता विस्तरेण दृष्टिगोचरतां गच्छति। परस्य ब्रह्मणः स्वरूपम्, अन्यानि कानिचित् दार्शनिकानि तत्त्वानि च अत्र स्पष्टतया प्रतिपादितानि। वैष्णवानामाचारः केषुचित् अध्यायेषु उपवर्णितः। तत्र दीक्षितानामाह्निककृत्येषु विशेषाचारप्रतिपादनमेकत्र वैष्णवानां गर्भाधानादिश्मशानान्तसंस्कारकलापः पृथक् वर्ण्यते। उभयोः पार्थक्यं स्पष्टत्वं च सम्यगवगन्तुं शक्यमेव। यदि एकेनैव वाक्येन अस्याः संहितायाः असाधारण्यं वक्तव्यं तर्हि अनतिविस्तरेण अनतिसंक्षिप्तेन च वर्त्मना अशेषस्य पाञ्चरात्रशास्त्रस्य अर्थसंकोचं विना प्रतिपादनमेवेति निर्विशंकं ब्रूमः।

## नारदीयसंहितायाः भाषा—

अस्यां संहितायाम् अवलम्बिता भाषा बहुपाणिनीयशब्दपूर्णा भवति। एतादृशी भाषा न केवलमस्यामेव संहितायां दृश्यते अपि तु अन्यास्वपि पाञ्चरात्रसंहितासु। अस्मिन् प्रसङ्गे स्थालीपुलाकन्यायेन केचन अपाणिनीयाः प्रयोगाः उपस्थाप्यन्ते—

1. परस्मैपदात्मनेपदप्रयोगविषये बहुशः व्यत्यासः—'जपते' ४.९; 'ज्वलते' १४.१०.
2. सन्धिप्रयोगे वैचित्र्यम्—'अग्रतोदितम्' २.५७.
3. कारकप्रयोगे व्यत्यासः—'मन्त्राभ्यां तु प्रसादतः' ५.४७.
4. कृत्प्रत्ययनियमोल्लङ्घनम्—'संश्लेषयित्वा' ६.१७; स्थाप्य ६.१७.
5. 'स्म' इत्यस्य अस्थाने प्रयोगः २५.१८१.
6. लिङ्गप्रयोगे विपर्यासः १५.१०६; १८.१०; १९.१५.
7. सुबन्तपदप्रयोगे अपाणिनीयं रूपम्—'स्थाल्ये' १५.६१.

8. अनन्वितप्रयोगः—'यदि नोपहतामर्चां समग्रावयवां यदि' १७.४९.

## नारदीयसंहितायाः कालः—

यद्‌वलम्ब्य अस्याः संहितायाः प्रणयनकालमधिकृत्य निश्चिततया यत्किञ्चित् वक्तुं प्रभवेम तादृशं किमपि आभ्यन्तरं प्रमाणमत्र ग्रन्थे नोपलभामहे। यद्यपि आर्षाणां ग्रन्थानां कालपरिच्छेद एव नास्ति इत्यभिप्रयतां प्राचीनपद्धतिमनुसरतां साम्प्रदायिकानां कालनिर्धारण-विषये नातीवादरः भवेत् तथापि आधुनिकविमर्शनमार्गे कृतपदैः अस्माभिः तद्विषये बाह्यं किंचित्प्रमाणं दृष्टवद्भिः यत्किञ्चित् वक्तुं प्रयत्यते—

तत्र तावत् श्रीमद्वेदान्तदेशिकैः नारदीयसंहितायाः[1] केचन श्लोकाः पाञ्चरात्ररक्षायां[2] प्रमाणत्वेनोपन्यस्ताः। अतः क्रिस्तोः १२६९-१३६९ वर्षेभ्यः प्रागेवास्याः संहितायाः प्रणयनमासीदिति निश्चप्रचम्। अन्येष्वपि पाञ्चरात्रग्रन्थेषु[3] अग्निपुराणे च कृतेषु पाञ्चरात्रसंहिता-नामपरिगणनेषु नारदीयसंहितायाः नाम कीर्त्यते। परन्तु एतेषामपि पाञ्चरात्रसंहिताग्रन्थानां कालनिर्णायकं किमपि प्रमाणं नोपलभ्यते। पाद्मसंहितायाः कालः क्रिस्तोः अष्टमशताब्द्याः पूर्वभावीत्यभिमन्यते श्री श्रेडरमहाशयः। अग्निपुराणस्य कालः अष्टमशताब्द्याः आरभ्य एकादशशताब्दीं यावत् मध्ये यत्र कुत्रचित् भवितुमर्हति इति श्री एस. डी. ज्ञानी महोदयानामाशयः। अत्र यदि श्रेडरमहाशयेन निर्णीतः पाद्मसंहितायाः कालः प्रमाणानुगृहीतः भवेत् तर्हि नारदीयसंहितायाः कालः अष्टमशताब्द्याः प्राग्भावीति वक्तुं पारयामः। अत्र नारदीय-संहितायां मन्त्रोद्धारावसरे, मुद्रावर्णनक्रमे, प्रतिमाकल्पनप्रकरणे च

---

1. नारदीयसंहिता. २.१२२, १२३; २५.७६, ७७, ७८, ७९, ८०.
2. पाञ्चरात्ररक्षा. अधिकारः 3.
3. (क) कपिञ्जलसंहिता. १.१५; (घ) मार्कण्डेय संहिता १.४२
   (ख) पाद्मसंहिता. ज्ञा. १.१००; (ङ) विश्वामित्रसंहिता २.१९
   (ग) पुरुषोत्तमसंहिता. १.३०; (च) हयशीर्षसंहिता. आदि. प.२.३.

बुद्धस्यावताराणामन्यतमत्वेन स्वीकृतत्वात् अस्याः संहितायाः रचनाकालः बुद्धकालादनन्तरकालिकः इति वक्तुं शक्यते ।

नारदीयसंहितायाः अस्य संस्करणस्य आधारतया स्वीकृताः मातृकाः अष्टौ । तत्र काश्चित् पूर्णाः काश्चिदपूर्णाश्च विविधलिपिषु लिखिताः । तासां सङ्केतप्रदर्शनपूर्वकं विवरणमधस्ताल्लिख्यते—

1. A. सङ्केतेन निर्दिष्टः अडयार्गवेषणाकेन्द्रस्थायाः (Adyar Research centere) T. R. 1114-1. मातृकायाः प्रतिलेखः (Transcript). पूर्णः । पाठः सामान्यतः समीचीनः ।

2. M. सङ्केतनिर्दिष्टः मद्रास्राजकीयप्राच्यमातृकागारस्थायाः (Madras Govt. Oriental Mss Library) R. N. 2503 मातृकायाः प्रतिलेखः । बहुशः अशुद्धः, बहुल ग्रन्थपातयुक्तश्च ।

3. My. सङ्केतेन निर्दिष्टः मैसूरराजकीयगवेषणसंस्थानस्थायाः (Govt. Research Institute Mysore) N. P. 4908 मातृकायाः 6, 7, 10, 11, 12 ; 14-19 ; 21-30 प्रतिलेखः । अयं प्रतिलेखः उपरि प्रदर्शितेन प्रकारेण विशकलितानेकाध्यायात्मकः (अपूर्णः)। अत्र प्रतिलेखे अनुपलब्धाः अध्यायाः के. सं. विद्यापीठीयपुस्तकागारे वर्तमानायां N. 595 मातृकायां दृष्टाः तत एव स्वीकृताः । इयं मातृका सामान्यतः अशुद्धिरहिता वर्तते ।

4. S. सङ्केतेन द्वयोः मातृकयोः निर्देशः । प्रथमा श्री-वेंकटेश्वर विश्वविद्यालयस्थमातृकागारस्था 3858-संख्याका, ग्रन्थाक्षरे लिखिता, कागदमयी । अस्याः परिमाणं ३२८ पुटानि । प्रतिपुटं २० पंक्तयः लिखिताः । आकारः 10"×7½" । पाठः अशुद्धिभूयिष्ठः, ग्रन्थपातोऽप्यधिकः । द्वितीया तु अस्याः एव प्रतिलेखरूपा । सा च श्री आ. श्रीनिवास—अय्यंगार्महानुभावेभ्यः प्राप्ता । इयं देव-

नागरीलिप्यां लिखिता इत्येतस्मादृते नास्ति किमपि वैशिष्ट्यं पूर्वापेक्षया ।

5. V. सङ्केतेन निर्दिष्टा मातृका तिरुपति - केन्द्रिय - संस्कृत-विद्यापीठपुस्तकालयस्था, तालपत्रात्मिका, ग्रन्थाक्षरैः लिखिता; N. 12; पूर्णा। अस्याः आकारः $17\frac{1}{2}'' \times - 1\frac{1}{2}''$, परिमाणं तु 100 पुटानि। प्रतिपुटं 9 पङ्क्तयः। सामान्यतः पाठः समीचीनः। लेखक-प्रमादाः दृश्यन्ते ।

6. N. सङ्केतेन स्वीकृता मातृका तिरुपति - केन्द्रिय - संस्कृत-विद्यापीठपुस्तकागारे वर्तमाना 'नाना संहिता-विषयोद्धारः' 43 संख्याका, तालपत्रात्मिका। इयं मातृका नानासंहितास्थानां पाञ्चरात्रविषयाणां संकलन-रूपा। अत्र नारदीयसंहितायाः 13, 15, 16, 17, 18, 27, 28. अध्यायाः उपलब्धाः सन्ति ।

7. P. इति सङ्केतेन स्वीकृतः कोषः श्री वैकुण्ठे स्थितेभ्यः पाञ्चरात्रविद्वद्वर्येभ्यः श्री A. V. पेरियतिरुवडी भट्टाचार्य-महोदयेभ्यः लब्धः। अस्मिन्नपि कोषे अनेकपाञ्चरात्र-संहितास्थाः विषयाः संकलिताः। तत्र नारदीय-संहितायाः 1, 2, 6, 8, 10, 15, 17, 18, 19, 20, 30 इत्येते अध्यायाः उपलभ्यन्ते। अत्रस्थः पाठः प्राय A. कोषस्थं पाठं संवदति ।

8. M. (u) सङ्केतेन निर्दिष्टः पाठः मद्रास्राजकीयप्राच्यमातृ-कागारस्थायाः R. 3286 उत्सवसङ्ग्रहाख्यायाः मातृ-कायाः समग्राहि। अत्र बहुभ्यः पाञ्चरात्रग्रन्थेभ्यः उत्सवप्रकरणं संकलय्य लिखितम्। तत्र नारदीय-संहितास्थः अपि कश्चिदुत्सवसंबन्धिविषयः स्वीकृतः।

यद्यपि एषु कोषेषु नैकोऽपि सर्वथा शुद्धपाठयुक्तः तथापि केषुचित् अशुद्धिबाहुल्यम् इतरेषु तदल्पत्वं च भवति । अस्य संस्करणस्य कृते

स्वीकृतान् कोषान् पाठगतं साम्यमाश्रित्य सामान्यतः त्रिषु विभागेषु अवस्थापयितुं शक्नुमः। तत्र S. इति द्वौ कोशौ, M. इत्येकः इति एते त्रयः कोषाः समानमूलकाः सन्ति। त्रिष्वप्येतेषु कोषेषु ग्रन्थपाते अशुद्धिबाहुल्ये च ऐक्यमेवावलोक्यते। त्रिष्वप्येषु त्रयोदशाध्याये केचन एव श्लोकाः उपलभ्यन्ते। प्रारंभः त्रयोदशाध्यायस्य समाप्तिस्तु चतुर्दशाध्यायस्य पुष्पिकया सह दृश्यते। उभयोः अपि अध्याययोः महता ग्रन्थभागेन अत्र लुप्तेन भाव्यम्। S. कोषः प्रायशः M. कोषस्य प्रतिलेख इव प्रतिभाति। A. My. कोषौ प्रायः समानमूलकौ इति पाठसाम्यादिना विभाव्यते। V. कोषः तृतीयविभागे अन्तर्भावमर्हति।

सम्पादनक्रम :—

ग्रन्थसम्पादनावसरे सर्वकोषस्थान् अपि पाठान् आलोच्य प्रकरणानुसारं समीचीनतरं पाठं स्वीकर्तुमत्र प्रयत्नः कृतः। मातृकासु वर्तमाने पाठे कुत्रापि परिवर्तनेन न भाव्यमित्यस्मिन् विषये संपादकः बद्धादरः। प्रतिपाद्यमानानां विषयाणां तत्र तत्र शीर्षकाणि तथा निवेशितानि यथा तानि अनायासेनैव पाठकानां विषयबोधाय कल्पेरन्। पाठान्तरप्रदर्शनावसरे एकैकस्य श्लोकस्य चतुर्णां पादानां क्रमशः a : b : c : d : रूपेण निर्देशः कृतः। यत्र ग्रन्थः सर्वथा अशुद्धः अतः भावाविष्करणे अक्षमः भवति तादृशं स्थलं प्रश्नचिह्नेन (?) प्रदर्शितम्। अन्ते पाञ्चरात्रागमविषये गवेषणकर्मणि कृतादरेभ्यः उपकाराय केचन अनुबन्धाः निवेशिताः। यद्यपि अस्यां संहितायां वर्णितानां वास्तुशास्त्रीयाणां, प्रतिमाकल्पनसंबन्धिनां तत्सदृशानाम् अन्येषां च केषांचित् व्यावहारिकविषयाणां प्रात्यक्ष्यं सम्पादयितुम् अत्र वर्तते चित्रकल्पनावसरः, तथापि ग्रन्थविस्तारभिया केषांचिदेव विशिष्टानां चित्राणामनुबन्धरूपेण ग्रन्थान्ते निवेशः अकारि। महत् प्रामादादिकं च प्रस्खलनं शुद्धिपत्रे परिहृतम्। ग्रन्थविस्तारभिया एव श्लोकानामकाराद्यनुक्रमणिका न निवेशिता।

अस्याः संहितायाः संपादने मार्गप्रदर्शनं कृतवद्भ्यः मातृकाप्रतिलेखादिप्राप्तौ सर्वविधसौविध्यप्रकल्पकेभ्यः तिरुपति केन्द्रियसंस्कृत-

विद्यापीठस्य भूतपूर्वनिदेशकवर्येभ्यः डॉ. श्री बी. आर्. शर्ममहाभागेभ्यः सादरं बहुमानं कार्तज्ञ्यं समर्पयामि । ग्रन्थस्य त्वरया प्रकाशने सर्वविधसौकर्यकल्पकेभ्यः विद्यापीठीयप्रधानाचार्यमहोदयेभ्यः श्री. वी. एस्. वेंकटराघवाचार्यमहानुभावेभ्यः, ग्रन्थसंपादनादिक्रमे साहाय्यं दत्तवद्भ्यः गवेषणाविभागप्रधानेभ्यः डॉ. श्री एम. डी. बालसुब्रह्मण्यमहोदयेभ्यः, व्याख्यातृपदमलङ्कुर्वद्भ्यः श्री वी. स्वामिनाथमहानुभावेभ्यश्च कृतज्ञतां ज्ञापयामि । उदारहृदयाः आसुरी श्रीनिवास अय्यंगार्महाभागाः अन्ये च मातृकादातारः उपरिनिर्दिष्टाः संस्थाविशेषाश्च धन्यवादार्हाः सन्ति । तेभ्यः सर्वेभ्यः कार्तज्ञं प्रकटयामि । ग्रन्थे प्रदर्शितानां चित्राणां निर्मातृभ्यः श्री. एस्. सुब्बयामहाभागेभ्यः मदीयाः धन्यवादाः दीयन्ते कार्तज्ञ्यं च ज्ञाप्यते । अस्मिन् कर्मणि ज्ञाताज्ञातरूपेण सहाय्यं संपादितवतामस्माकं मित्राणामपि आधमर्ण्यं वहाम्येव । ग्रन्थस्य समीचीनं शुद्धं च मुद्रणादिकं संपादयितुं बद्धादराः मद्रनगरीयकबीरप्रिंटिङ् वर्क्स् संचालकाः कार्यसंपादकाश्च धन्यवादार्हाः । इति शम् ।

केन्द्रियसंस्कृतविद्यापीठम्.<br>तिरुपति.<br>भाद्रपद १९, शक-संवत १८९३.<br>(१०-९-१९७१ ई०)

राघव प्रसाद चौधरी.

# विषयानुक्रमणिका

ॐ

# नारदीयसंहिता

## प्रथमोऽध्यायः

### [प्रस्तावनादिनिरूपणाध्यायः]

(भृग्वाश्रमं प्रति अत्रेरागमनम्)

आश्रमे स्वस्थमासीनं भृगुं मुनिवरैर्वृतम् ।
विष्णुभक्तिपरं शान्तं वासुदेवैकयाजिनम् ॥ १ ॥
अत्रिरागत्य पप्रच्छ ज्ञानं भागवतं शुभम् ।

(वैष्णव्या वाण्या प्रेरितेन अत्रिणा स्वागमनवृत्तान्तनिवेदनम्)

अत्रिरुवाच—

तपसा महतोग्रेण तप्तोऽहं नैमिषेऽनिशम् ॥ २ ॥
बहून्यब्दसहस्राणि भवबन्धविमुक्तये ।
तदा तत्राभवद्वाणी वैष्णवी सत्यवादिनी ॥ ३ ॥
तपसानेन चोग्रेण किं यज्ञैस्तीर्थसेवया ।
तपोज्ञाने परे तत्त्वे वासुदेवे परो भव ॥ ४ ॥
पाञ्चरात्रविधानेन सात्विकेन तु कर्मणा ।
भृगुं हि गत्वा पृच्छ त्वं ज्ञानं भागवतं शुभम् ॥ ५ ॥

---

१. a : S. स्वे स० for स्वस्थ०.
b : My. युतम् for वृतम्.
c : S. ०वरैः for परम्.

२. a : A. आगम्य for आगत्य;
b : A. ज्ञातं for ज्ञानम्.

४. c : A. ज्ञान० for ज्ञाने, S. My. A. वरे for परे.

५. b : S. M. My. सार्थकेन for सात्विकेन.
c : S. My. च for हि.

(नारदीयसंहितावतारप्रसङ्गे गौतमनारदसम्मेलनवृत्तान्तः)

भृगुरुवाच—

गौतमेन पुरा पृष्टो नारदो मुनिपुङ्गवः ।
संहिता दुर्लभा या तु भुक्तिमुक्तिफलप्रदा ॥ ६ ॥

मुनीनामाश्रमासीने गौतमे मुनिभिर्वृते ।
कालेऽस्मिन्नारदः स्वर्गात् ब्रह्मपुत्रो महामुनिः ॥ ७ ॥

नियोगाद्देवदेवस्य विष्णोरद्भुतकर्मणः ।
आजगामाश्रमपदं गौतमस्य महात्मनः ॥ ८ ॥

तं दृष्ट्वा परमप्रीतो गौतमो विस्मयं गतः ।
नमस्कृत्य यथान्यायं पूजयित्वासनादिभिः ॥ ९ ॥

उवाचेदं वचो ज्ञात्वा प्रीतोऽयमिति नारदः ।

गौतम उवाच—

कृतकृत्योऽस्मि भगवन् क्रिया मेऽद्य फलान्विता ॥ 10 ॥

आराधितौ मया पूर्वं भगवज्ज्ञानसिद्धये ।
तपस्यन्तौ महात्मानौ नरनारायणौ परौ ॥ ११ ॥

ऊचतुः स्म भवन्तौ तौ तपस्यभिरतौ सदा ।
नारदाज्ज्ञानसिद्धिस्ते भविष्यत्यचिराच्छुभा ॥ १२ ॥

विष्णुवाण्योदितावासं गच्छाश्रमपदमृषेः ।
एवमुक्तस्ततस्ताभ्याम् इदानीमागतो मुने ॥ १३ ॥

वक्तुमर्हसि तत्पूर्वं यदि तुष्टोऽसि मे प्रभो ।
त्वं गतिः सर्वभूतानां वैष्णवानां विशेषतः ॥ १४ ॥

---

६. d : S. My. शक्ति for भुक्ति.
७. a : M. आवासे for आसीने.
८. c : My. om पदम्.
११. d : S. उभौ M. पुरा for परौ.
१३. a : S. वाक्यो० for वाण्यो०; S. om वासम्.

अनवाप्तो भयोग्रेण गतिर्देवमुने मम ।

(गौतमप्रशंसनपूर्वकं नारदस्य पाञ्चरात्रज्ञानकथनप्रतिज्ञा)

नारदः—

त्वदन्यं न च पश्यामि पात्रं ज्ञानस्य सुव्रत ॥ १५ ॥

वैष्णवोऽसि महाभाग त्वयाप्तं च ततं परम् ।
एवमेव महाविष्णोः भवतो ज्ञानसिद्धये ॥ १६ ॥

तस्माद्वदामि ते ज्ञानं पाञ्चरात्राख्यमुत्तमम् ।

(पाञ्चरात्रस्य स्थूलं स्वरूपम्)

दिव्यमन्त्रक्रियोपेतं वेदगम्यं च शाश्वतम् ॥ १७ ॥

(वासुदेवात् पाञ्चरात्रस्य प्राप्तिकथनम्)

लब्धं पुरा मया विष्णोः वासुदेवात् सनातनात् ।

(अदीक्षिताय पाञ्चरात्रस्यानाख्येयत्वम्)

अनाख्येयमिदं ज्ञानं यस्य दीक्षा न विद्यते ॥ १८ ॥

(गौतमद्वारा वैष्णवदीक्षाग्रहणम्)

गौतम उवाच—

आचक्ष्व मम देवर्षे दीक्षां तां वैष्णवीं पराम् ।
यस्यां कृतायां ज्ञानेऽस्मिन्नधिकारश्च जायते ॥ १९ ॥

गौतमेनैवमुक्तस्तु नारदो मुनिपुङ्गवः ।
ततो विधाय विधिना दीक्षां पापप्रणाशिनीम् ॥ २० ॥

---

१५. a : S. अनत्वं मत्वद्, A...त्वम्मयाश्रेण त्वद्, My. अनवात्वं मयाश्रेण, p. अनया त्वं भयाग्रेण.

१६. b : S. ०न्तं च ततः for ०प्तं च ततम्.

१७. d : S. गर्भं for गम्यं.

१८. a : S. मया पुरा for पुरा मया.

२०. a : A. S. एवमुक्तस्तु भगवान्.

पूजितो विधिना तेन वक्तुं समुपचक्रमे ।

(पाञ्चरात्रमहिम्नः तस्य साररूपस्य च वर्णनम्)

शृणु गौतम वक्ष्यामि ज्ञानं परममुत्तमम् ॥ २१ ॥
ज्ञानकर्मसमायुक्तं कैवल्यैकफलं महत् ।
त्रैवर्गिकसमायुक्तं वर्णाश्रमसमन्वितम् ॥ २२ ॥
अनेकसिद्धिसंयुक्तं परमार्थविनिर्णयम् ।
संहारसृष्टिसंयुक्तं यागभेदसमन्वितम् ॥ २३ ॥
इदं तन्त्रमशेषेण श्रोतुं वक्तुं न शक्यते ।
तस्मात् सारमुपाहृत्य वक्ष्यामि हितकाम्यया ॥ २४ ॥
श्रोतव्यं यतचित्तेन विधिना तत्त्वयाधुना ।

(सृष्टेः पूर्वस्थितिः)

महत्येव जगत्यस्मिन् निरालोकेऽतिगह्वरे ॥ २५ ॥
निर्मर्यादे निराभासे निष्प्रपञ्चे निरालये ।
नष्टार्कचन्द्रकिरणे ग्रहनक्षत्रवर्जिते ॥ २६ ॥
अपक्षिगणसन्ताने जगत्यस्मिन् चराचरे ।
न च देवाः न राष्ट्रं च न ब्रह्मान्ये च जन्तवः ॥ २७ ॥

(सृष्टेः पूर्वं स्थितस्यैकाकिनः वासुदेवस्य स्वरूपम्)

भगवान् एक एवासीत् वासुदेवः सनातनः ।
परमात्मा निराभासः तत्त्वातीतः परः शिवः ॥ २८ ॥
ज्ञानशक्तिसमोपेतः स ज्ञेयः पुरुषोत्तमः ।

---

२२. c : My. om.
२४. c : V. उपादधृत्य for उपाहृत्य.
२५. b : S. ०त्व सा for त्वया.
d : M. विपरे for गह्वरे.
२८. c : My. ०तीतः for ०भासः.

(वासुदेवस्य क्रीडार्थं विग्रहोत्पत्तिः, सत्त्वस्य वैशिष्ट्यञ्च)

तस्य साराभिभूतस्य क्रीडार्थं विमलात्मनः ॥ २९ ॥

विग्रहश्च समुत्पन्नो भोगार्थं विमलात्मनः ।
ततः सत्त्वं समास्थाय द्विधा देहोद्भवः स्वयम् ॥ ३० ॥

सत्त्वस्थस्य सुखं दिव्यं सत्त्वस्थस्य परं पदम् ।
सत्त्वेन विधिना सिद्धिः सत्त्वं त्वमृतमाहितम् ॥ ३१ ॥

सत्त्वमृद्धिर्द्युतिर्मेधा तेजोधीर्महिमा तथा ।
तस्मात्सद्वैष्णवः सत्त्वमाश्रयेन्न रजस्तमः ॥ ३२ ॥

(विष्णोः स्वरूपम्)

शुक्लस्तेजोमयः सूक्ष्मः सूर्यकोट्ययुतप्रभः ।

(वासुदेवप्रादुर्भावक्रमः तस्य स्वरूपम्)

तस्माद्विष्णोर्विनिष्क्रान्तः भित्त्वा सर्वं तमोमयम् ॥ ३३ ॥

स्थिरः सर्वमिदं प्राप्य नयज्ञः परमेश्वरः ।
स वासुदेवो भगवान् श्वेतवर्णश्चतुष्कलः ॥ ३४ ॥

चतुर्बाहुः स्वयं भूत्वा

---

३०. a : A. विग्रहेच्छा for विग्रहश्च ; S. ०न्ना for ०न्नो.

३१. a : S. नित्यं for दिव्यम्.
c : S. My. A. विविधा for विधिना.
d : My. सत्त्वश्चेन्द्र for सत्त्वं त्वमृ०.

३२. a : My. शुद्धिः for ऋद्धिः, A. च्युतिर्मेया for द्युतिर्मेधा ; M. द्वेधा for मेधा.
b : S. ओजो for तेजो.
c : My. स for सद्०.

३३. a : My. शुद्धः for शुक्लः.
b : S. प्रदः for प्रभः.

३४. b : S. सयज्ञः for नयज्ञः.

(सङ्कर्षणस्य प्रादुर्भावक्रमः, सङ्कर्षणशब्दनिर्वचनञ्च)

संक्षिप्यात्मतनुं पुनः ।
आकृष्य तु स्वकाद्देहात् सङ्कर्षणमजीजनत् ॥ ३५ ॥
स संकृष्टशरीरत्वात् सङ्कर्षण इति स्मृतः ।

(सङ्कर्षणस्य स्वरूपम्)

पुरुषो रक्तवर्णश्च सङ्कर्षाख्यश्चतुष्कलः ॥ ३६ ॥

(प्रद्युम्नस्य सृष्टिः, तस्य स्वरूपम्)

स च सङ्कर्षणः श्रीमान् भूष्णुर्मूलतनुः स्मृतः ।
तं वासुदेवमाश्रित्य तपस्तप्त्वातिभीषणम् ॥ ३७ ॥
प्रद्युम्नमसृजत्सोऽपि तद्ब्रह्मेति प्रकीर्तितम् ।
तृतीया प्रद्युम्नमूर्तिः पुरुषश्च सनातनः ॥ ३८ ॥
शङ्खचक्रगदापाणिः विश्वात्मा भुवनेश्वरः ।

(अनिरुद्धसृष्टिः, तस्य स्वरूपम्)

तस्य प्रद्युम्ननाथस्य सृष्टं मूर्त्यन्तरं ततः ॥ ३९ ॥
यत्नस्तदा महानासीत् तपसे निश्चितात्मनः ।
तपसोऽन्ते च देहार्धादनिरुद्धमथासृजत् ॥ ४० ॥
अनिरुद्धश्चतुर्बाहुः सर्वलोकेश्वरः प्रभुः ।
सोऽपि योगीश्वरो योगी तपसा महता युतः ॥ ४१ ॥
क्षीरोदशायी भगवान् नागपर्यङ्कगः प्रभुः ।
महेन्द्रनीलसङ्काशो द्विपञ्चरविभास्वरः ॥ ४२ ॥

---

३६. a : A. संकृष्ण for संकृष्ट.
३७. b : My. जिष्णुर्मलितनुस्मृतः.
३८. b : My. वीतब्रह्मेति कीर्तितम् ;
d : My. पुरुषस्य for पुरुषश्च.
४०. d : My. ब्रुवन् for सृजत्.
४२. d : A. भास्करः for भास्वरः.

सा चतुर्थी भवेन्मूर्तिः हंसमाहुर्मनीषिणः ।

(चतुर्मूर्तीनां नामान्तरकथनम्)

हंसो नादस्तथा व्योम परमहंसस्तथापरः ॥ ४३ ॥

चत्वारो गोचराः ह्येते मूर्तीनां परमास्थिताः ।

हंसोऽनिरुद्धो भगवान् प्रद्युम्नो नादगोचरः ॥ ४४ ॥

व्योम सङ्कर्षणो देवः परमहंसस्तथापरः ।

पुरुषो वासुदेवो हि सत्यः सङ्कर्षणस्तथा ॥ ४५ ॥

प्रद्युम्नश्चाच्युतः प्रोक्तः देवो विश्वेश्वरः प्रभुः ।

नारायणोऽनिरुद्धस्तु लोकनाथो जगत्पतिः ॥ ४६ ॥

(चतुर्मूर्तीनां वासुदेवात्मकत्वम्)

चतस्रो मूर्तयस्त्वेताः वासुदेवात्मिका मताः ।

(चतुर्मूर्तिप्रतिष्ठाधिकारिवर्णनम्)

चतस्रो मूर्तयस्त्वेताः प्रतिष्ठाप्याः पृथक् पृथक् ॥ ४७ ॥

स्थानके चासने चैव शयने यानकर्मणि ।

एकैकशः प्रकुर्वीत यथोद्दिष्टक्रमेण तु ॥ ४८ ॥

ब्राह्मणेन प्रतिष्ठाप्या त्वादिमूर्तिस्तु पौरुषी ।

द्वितीया क्षत्रियेणाथ तृतीया वैश्यजन्मना ॥ ४९ ॥

शूद्रेणाथ चतुर्थी तु वर्णानां परिकीर्तिता ।

(चतुर्मूर्तिस्थापने युगविवेकः)

आदिमूर्तिः प्रतिष्ठाप्या नित्यमेव कृते युगे ॥ ५० ॥

---

४३. c : M. तदा for तथा.
d : M. तदा for तथा.

४४. b : A. ०र्शिताः for स्थिताः.

४६. d : My. A. M. ०स्वामो for नाथो.

४७. d : M. प्रतिपाद्याः for प्रतिष्ठाप्याः.

५०. a : A. एव for अथ.
b : A. वर्णतः for वर्णानां.

त्रेतायां च द्वितीया तु तृतीया द्वापरे युगे।
कलौ युगे चतुर्थी तु प्रतिष्ठाप्या पृथक् पृथक् ॥ ५१ ॥

(चतुर्मूर्तिसंबन्धिनीनां शान्त्यादिदेवीनां निर्देशः)

एतासामथ मूर्तीनां देव्यः शृणु यथाक्रमम्।
अव्यक्ता या परा सूक्ष्मा शान्तिराद्या निरञ्जना ॥ ५२ ॥

तस्याः समुत्थिता देवी श्रीस्तु सङ्कर्षणे सदा।
शब्दब्रह्ममयी देवी प्रद्युम्नस्य सरस्वती ॥ ५३ ॥

सा तु योगीश्वरी शक्तिः निर्वाणपदगामिनी।
उत्कर्षा संभवा देवी रतिरानन्ददा परा ॥ ५४ ॥

अनिरुद्धस्य विज्ञेया चन्द्रबिम्बनिभानना।

(मासाधिपानामुत्पत्तिक्रमः)

केशवाद्यास्तु संजाताः चतुर्मूर्तिषु ते क्रमात् ॥ ५५ ॥

ये विष्णवाद्यास्तु सम्प्रोक्ताः मासाधिपतयः सुराः।
ते वासुदेवादुद्भूताः भुक्तिमुक्तिफलप्रदाः ॥ ५६ ॥

(मत्स्याद्यवताराणामुद्भवक्रमः)

मत्स्यकूर्मौ द्विजश्रेष्ठ ज्ञेयौ सङ्कर्षणांशकौ।
वराहश्चानिरुद्धांशः सर्वविद्येश्वरः प्रभुः ॥ ५७ ॥

---

५२. a : S. अत्र for अथ.
५३. a : M. समर्थतां for समुत्थिता.
५४. a : A. M. My. V. नु for तु;
b : S. पथ for पद.
५५. d : My. कूर्म for चतुर्.
५६. a : M. आख्याः for आद्याः.
d : S. भक्ति for भुक्ति.
५७. a : My. A. M. V. मत्स्यः कूर्मो for मत्स्यकूर्मौ.
b : My. A. M. V. ज्ञेयः सङ्कर्षणांशके.

अनिरुद्धांशजः श्रीमान् नृसिंहोऽसुरसूदनः ।
वासुदेवांशको देवो वामनः सकलेश्वरः ॥ ५८ ॥
तथा परशुरामश्च रामो दाशरथिस्तथा ।
सङ्कर्षणांशादुद्भूतौ क्षत्ररक्षौ विरोधिनौ ॥ ५९ ॥
वसुदेवसुतः कृष्णः वासुदेवांशजः स्मृतः ।
प्रद्युम्नांशात्समुद्भूतो बुद्धो मुनिवरो वशी ॥ ६० ॥
कल्की सङ्कर्षणांशस्तु देवदेवो जगद्गुरुः ।

(विष्ण्वादीनाम् अवस्थानक्रमः)

विष्ण्वाद्याः कल्किपर्यन्ताः देवता देवमूर्तयः ॥ ६१ ॥
आसने स्थानके याने संस्थाप्य शयने तथा ।
पद्मनाभाभिधानस्य शयनं वा प्रकल्पयेत् ॥ ६२ ॥

(अनिरुद्धात् चराचरविश्वोत्पत्तिः)

अनिरुद्धात्समुद्भूतमेतद्विश्वं चराचरम् ।
तथाहं ते प्रवक्ष्यामि श‍ृणुष्वैकमना मुने ॥ ६३ ॥

(अनिरुद्धनाभौ कमलसृष्टिः, पद्मनाभशब्दनिर्वचनादिकम्)

अनिरुद्धस्तु भगवान् योगनिद्रागतस्ततः ।
नाभौ ससर्ज कमलं सनालं तु सितप्रभम् ॥ ६४ ॥
सहस्रदलसंयुक्तम् अन्तः केशरमण्डितम् ।
मध्ये कर्णिकया दीप्तं बीजसंयुक्तया शुभम् ॥ ६५ ॥
तस्य नालं तु वैडूर्यं शातकुम्भं तु कर्णिका ।
पद्ममित्थमभून्नाभेः आद्यं विश्वस्य कारणम् ॥ ६६ ॥

---

५९. a : My. A. अथो for तथा.
d : A. रक्षो for रक्षौ.
६०. d : M. वर for वशी.
६३. c : S. तत्राहं ते My. तथाभूते for तथाहं ते.
६५. b : A. ततः My. ततम् for अन्तः.
६६. a : S. मूर्धं for वैडूर्यं.

नाभौ पद्ममभूद्यस्मात् पद्मनाभ इति स्मृतः ।
देवानामपि सर्वेषामाद्यं पद्ममभूद्यतः ॥ ६७ ॥

तस्मात्तु सर्वदेवानां पद्ममेवासनं भवेत् ।

(हिरण्यगर्भसृष्टिक्रमः)

तस्य मध्यात्तु संस्थाप्य अण्डं पद्माद्धिरण्मयम् ॥ ६८ ॥

तस्माद्धिरण्यगर्भोऽभूत् अण्डात् सर्वपुरातनः ।
विद्यया सहितोऽजस्रं महाशक्तिसमन्वितः ॥ ६९ ॥

(पद्मयोनिब्रह्मणा कृतः पञ्चभूतसृष्टिक्रमः)

सोऽसृजत् पञ्चभूतानि भुवनानि महान्ति च ।
व्यस्तैर्भूतैः समस्तैश्च जङ्गमानि स्थिराणि च ॥ ७० ॥

एवं सृष्टमिदं तेन ब्रह्मणा पद्मयोनिना ।
एवं सृष्टिरिति ख्याता

(संहृतिक्रमः, सृष्टिसंहारयोः वासुदेवक्रीडारूपत्वम्)

विपरीतेन संहृतिः ॥ ७१ ॥

एवं सृष्ट्वा च संहृत्य बालवत्क्रीडयन् प्रभुः ।
वासुदेवः परो देवो मायया मोहितं जगत् ॥ ७२ ॥

(मायादूरीकरणोपायविषयकः प्रश्नः)

गौतमः—

ययाऽसौ मोहितो जन्तुर्न जानाति हितं मुने ।
दूरं गच्छति मायेयं कर्मणा केन तद्वद ॥ ७३ ॥

---

६७. b : My. संस्थितः A. संस्मृतः for स्मृतः.
६८. b : S. आननम् for आसनम्.
६९. b : S. स चतुराननः for सर्वपुरातनः,
c : M. विद्याद्या संहिताजस्र.
७२. a : S. सृष्टांश्च for सृष्ट्वा च.
७३. a : S. जातो जन्तुर्न जानाति.
b : S. नित्य आराधनं मुने.

(पाञ्चरात्रविधानस्य दैवीमायानिरसने उपायत्वम्)

नारद :—

पञ्चरात्रविधानेन यो यजेत् भक्तितो हरिम् ।
मायेयं वैष्णवी पुंसो दूरतस्तस्य गच्छति ॥ ७४ ॥

इदमेव महाज्ञानं सर्वशास्त्रेषु निश्चितम् ।
कर्म वेदोदितं यद्वै ततश्शुद्धं किलाभवत् ॥ ७५ ॥

ततः परमिदं ज्ञानं विष्णुना भाषितं हितम् ।
पञ्चरात्रमिति ख्यातं भुक्तिमुक्तिफलप्रदम् ॥ ७६ ॥

देवयागस्तु विप्रेन्द्र कुत्रचित् संप्रदृश्यते ।
तिरोहितं भगवता पुरस्तात्तेन दृश्यते ॥ ७७ ॥

यस्य प्रसादं कुरुते तस्यास्मिन् जायते मतिः ।
विष्णवाख्ये परमे ज्ञाने यथेष्टफलदायिनि ॥ ७८ ॥

पुष्पैरेव हि विप्रेन्द्र पञ्चरात्रविधौ स्थितः ।
यो यजेद्देवदेवेशं वासुदेवमनामयम् ॥ ७९ ॥

स संसिद्धिमवाप्नोति पातकी यद्यपि ध्रुवम् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
प्रस्तावनाध्यायो नाम प्रथमोऽध्यायः ॥

---

७९. c : M. जयेत् for यजेत्.

# द्वितीयोऽध्यायः

## [देवाराधनक्रमनिरूपणाध्यायः]

(आराधनविषयप्रतिपादनार्थं नारदं प्रति गौतमस्याभ्यर्थना)

**गौतम :—**

आराधनं सुरेशस्य वासुदेवस्य मे वद ।
तथान्येषां च देवानां काम्यानां च समासतः ॥ १ ॥

(नारदद्वारा आराधनप्रकारप्रतिपादनप्रतिज्ञा)

**नारद :—**

येन सिद्धिं व्रजेन्मन्त्री दीक्षितो वैष्णवो नरः ।
आराधनं प्रवक्ष्यामि निःसन्दिग्धमविस्तृतम् ॥ २ ॥
अधिकारित्वमापन्नो दीक्षासमयपूर्वकम् ।
नित्यमाराधयेद्येन विधिना तं निबोध मे ॥ ३ ॥
स्नानाद्यं यजनं यस्मात् पूर्वं तत् कथयामि ते ।

(स्नानार्थं मृदादिसंग्रहणादिविधिः)

मृत्तिकां गोमयं सोष्णं तिलपुष्पकुशाक्षतान् ॥ ४ ॥
यथालाभं तु संगृह्य व्रजेद्धुस्नादिकं तथा ।

(स्नानार्थमनुमतं स्थानं मृदादिप्रक्षेपस्थानं च)

कूपस्नानं न कुर्वीत नद्यादौ स्नानमाचरेत् ॥ ५ ॥

---

१. b : My. देवदेवस्य for वासुदेवस्य.
   d : S. समन्ततः for समासतः.
२. d : M. अपि स्मृतम् for अविस्तृतम्.
३. a : A. अधिकारत्व for अधिकारित्व.
४. a : M. पूर्वयजनं for यजनं यस्मात्.
   c : M. मृत्सिक्तां for मृत्तिकां, S गृह्णन् for सोष्णं.
५. b : M. तदा for तथा.

नद्यादावसमर्थश्चेत् तस्मात्तोयैः समुद्धृतैः ।
स्नानं कुर्वीत तप्तैर्वा ज्ञात्वा धातुबलाबलम् ॥ ६ ॥

गत्वोदकसमीपं तु शुचौ देशे मनोरमे ।
तीर्थे प्रक्षालिते तोयैः मृदादीनि विनिक्षिपेत् ॥ ७ ॥

(जलनिमज्जनादिक्रमः)

नमस्कृत्य जलं पूर्वं निमज्जेदोमित्युदाहरन् ।
ततस्तीर्थं समाश्रित्य समाचम्य यथाविधि ॥ ८ ॥

प्राणायामत्रयं कुर्यात् ध्यायन् विष्णुं हृदन्तरे ।
यथेष्टं विमृशेदङ्गं गोमयेन विचक्षणः ॥ ९ ॥

तस्माद्भागेन शुद्धेन 'गन्धद्वार' मिति ब्रुवन् ।
निमज्जेत् क्षालयित्वाङ्गं तीर्थमासाद्य संस्पृशेत् ॥ १० ॥

(मृत्सु मन्त्रन्यासक्रमः)

स्नानं कृत्वा यथान्यायं 'मूल'मन्त्रेण मन्त्रवित् ।
प्राणायामत्रयं कृत्वा वामपाणितले क्रमात् ॥ ११ ॥

त्रिधा कृत्वा मृदं पश्चात् तासु मन्त्रान्न्यसेत् क्रमात् ।
प्रथमायां न्यसे'दस्त्र'मन्यायां देववाचकम् ॥ १२ ॥

प्रणवं तु तृतीयायां मृत्तिकायां समाहितः ।

---

७. c : A. तीरे for तीर्थे.
८. b : My. मध्ये ओं for निमज्जेदोम्.
   c : V. समागत्य for समाश्रित्य
   d : S. A. तिलं पूर्वं My. तिलं पुष्पं M. तिलं सर्वं for समाचम्य.
९. c : My. विमृजेत् for विमृशेत्.
१०. a : S. My. A. M. तं मृद्भागेन for तस्माद्भागेन.
   b : S. My. A. M. इतीत्यृचा for इति ब्रुवन्.
   c : My. A. M. निमज्जन् for निमज्जेत्.
११. a : V. न्यासं for स्नानं.
१२. a : M. त्रेधा for त्रिधा.
   c : My. V. मध्यमायां for प्रथमायाम्.

(मृदा दिग्बन्धादिक्रमः)

मृदा'स्त्र'युक्तया कुर्यात् दिक्षु दिग्बन्धमात्मनः ॥ १३ ॥
तीर्थं द्वितीयया कल्प्यं देहमालिप्य चान्यया ।

(देहसम्मार्जनादिप्रकारः)

साङ्गेन 'मूल'मन्त्रेण देहं सम्मार्जयेद्बुधः ॥ १४ ॥
तेनाभिषिञ्चेत् स्वतनूं गोशृङ्गान्तस्थवारिणा ।
तेनैवाञ्जलिना देहमभिषिञ्चेत्ततो वशी ॥ १५ ॥

(आकाशे विष्णुध्यानादिः मूलमन्त्रजपक्रमश्च)

ध्यात्वाकाशे परं विष्णुं वासुदेवं सनातनम् ।
अर्घ्यं पाद्यं तथाचामं दत्त्वा तेनैव वारिणा ॥ १६ ॥
तत्पादाम्बुजनिर्मुक्तां धारां ध्यात्वा स्वमूर्धनि ।
'मूल'मन्त्रं जपेन्मग्नो जले ध्यायन् सदा हरिम् ॥ १७ ॥
यावच्छ्वासविनिर्मुक्तिस्तावद्बुद्ध्वा समाहितः ।

(वस्त्रधारणं सूर्यस्थविष्णोः आराधनादिकञ्च)

ततस्तीरं समासाद्य वाससी परिधाय च ॥ १८ ॥
आचम्य च यथान्यायं प्रणवेन समाहितः ।
दक्षिणानामिकामूले न्यस्य दार्भं पवित्रकम् ॥ १९ ॥

---

१४. a : My. A. M. कल्प्य for कल्प्यं.
d : S. My. सम्मर्दयेत् for सम्मार्जयेत्.
१५. d : M. दश for वशी.
१६. b : S. My. A. M. अनामयम् for सनातनम्.
d : M. दद्यात् for दत्त्वा.
१७. b : S. धृत्वा for ध्यात्वा.
१८. a : S. V. ध्यान for श्वास, M. मुक्तः for मुक्तिः.
१९. d : S. A. My. दद्यात् for न्यस्य.

मूर्ध्नि सिञ्चेज्जलैः साङ्गं जपन्'मूलं' कुशान्वितैः ।
'मूले'नोदाञ्जलिं दत्त्वा सूर्यसंस्थाय विष्णवे ॥ २० ॥
एवं दत्त्वा त्रिधा चार्घ्यं प्रदक्षिणमथाचरेत् ।
ऊर्ध्वबाहुस्ततो भूत्वा पश्यन् सूर्यस्थितं हरिम् ॥ २१ ॥
विष्णुसूक्तं ततो जप्त्वा ध्यायेद्विष्णुं समाहितः ।
दर्भपाणिः समासीनो दर्भेषु प्राङ्मुखो जपेत् ॥ २२ ॥
'मूल'मन्त्रं सहस्रं वा शतं वाष्टोत्तरं ततः ।

(देवादितर्पणम्, देवालयगमनञ्च)

तर्पयेद्दर्भपूताभिरद्भिर्देवान् ऋषींस्ततः ॥ २३ ॥
सतिलाभिः पितॄन् पश्चात् तर्पयित्वा समाहितः ।
सपुष्पं साक्षतं तोयमादायाञ्जलिना ततः ॥ २४ ॥
मण्डलान्तःस्थितं विष्णुं ध्यात्वा वै विष्णुमव्ययम् ।
स्नानवस्त्रं विनिष्पीडय तत आचम्य वाग्यतः ॥ २५ ॥
संहृत्या स्त्रा'दिकान् मन्त्रान् हृदये देशिकोत्तमः ।
ततो देवगृहं यायात् मौनी ध्यानपरो वशी । २६ ॥

(अर्चकस्यालयप्रवेशविधिः, बिम्बशोधनक्रमश्च)

प्रक्षाल्य पाणिपादं तु समाचम्य यथाविधि ।
अलङ्कृत्य शिरः पश्चात् पुष्पदूर्वाक्षतादिभिः ॥ २७ ॥

---

२०. a : M. स्वाङ्गं for साङ्गं.
२१. c : A. M. V. तथा for ततो.
२३. c : My. युक्ताभिः A. वृत्ताभिः for पूताभिः.
 d : My. तथा for ततः.
२४. a : S. सतिलाम्भः for सतिलाभिः.
 b : S. My. A. M. कल्पयित्वा for तर्पयित्वा.
२५. b : S. My. A. च for वै.
 c : A. स्रु० for वि०.
 d : S. My. A. M. ततस्त्वाचम्य for तत आचम्य,
२६. b : S. न्यासयेत् M. नानयेत् for हृदये.

प्रासादद्वारमासाद्य न्यासं कृत्वा यथाविधि ।
आलयं 'मूल'मन्त्रेण गन्धपुष्पाक्षतादिना ॥ २८ ।

द्वारपालान्नमस्कृत्य हस्ततालं त्रिराचरेत् ।
ततः प्रविश्य गेहान्तं देवस्याभिमुखं स्थितः ॥ २९ ॥

प्रणम्य 'मूल'मन्त्रेण कुर्याद्देवप्रदक्षिणम् ।
उदङ्मुखः प्राङ्मुखो वा समासीतासने शुभे ॥ ३० ॥

पीठस्थं पत्रपुष्पाद्यं पाणिनाहृत्य मन्त्रवित् ।
कुशैः सम्मार्ज्य बिम्बं च शुद्धिं कृत्वा विधानतः ॥ ३१ ॥

(स्थानशुद्धिप्रकारः)

स्थानशुद्धिं ततः कुर्यात् ध्यानजेन तु वह्निना ।
पक्वां ध्यात्वा क्षितिं सर्वां मृण्मयं तु घटं यथा ॥ ३२ ॥

सेचयेदमृतेनैव स्थानं हेममयं स्मरेत् ।

(देहशुद्धिप्रकारः)

ततः प्राकारवद्ध्यायेत् वह्नि'नास्त्रे'ण मन्त्रवित् ॥ ३३ ॥

प्राणायामत्रयेणैव धारणागणमाचरेत् ।
यं बीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ॥ ३४ ॥

विश्लेषयेदशेषं तु ध्यायेत्कायं त्वकल्मषम् ।
रं हृत्पङ्कजमध्यस्थं बीजं चाग्निनिभं स्मरेत् ॥ ३५ ॥

---

२८. d : M. अक्षतादिकाः for अक्षतादिना.
२९. a : A. My. S. V. द्वारपालार्चनं कृत्वा,
c : S. गेहं तं My. गर्भान्तं for गेहान्तं.
३१. b : My. वस्त्रेण for पाणिना.
३४. d : A. धूम्रं चण्डानिलार्ककम्.
३५. a : S. निश्शेषं तज्जमरुता, My. विशेषितं तु तेनैव, A. M. विशेषं तज्जमरुता.
b : S. ध्यायेद्देहं तु काल्मषम्, A. M. ध्यायेद्देहककल्मषम्.
c : S. इदृक् for रंहृत्.

अथोर्ध्वतिर्यगाभिश्च ज्वालाभिः कल्मषं दहेत् ।
सं शशाङ्काकृतिं ध्यात्वा अम्बरस्थं सुधाम्बुभिः ॥ ३६ ॥

हृत्पद्मव्यापिभिर्देहं स्वकमाह्लादयेत्सुधीः ।
क्रमात् क्ष्मादीनि भूतानि तन्मन्त्रा-
(न्मात्रा?)त्मनि संहरेत् ॥ ३७ ॥

ततस्संहारमार्गेण परमात्मनि साधकः ।
तत्र स्थित्वा दहेत्पिण्डं पार्थिवं मन्त्रवर्जितम् ॥ ३८ ॥

सम्भाव्य पश्चात्तद्भस्म ध्यात्वा क्षीरार्णवं ततः ।
तन्मध्ये पङ्कजं ध्यायेत् प्रणवेनैव मन्त्रवित् ॥ ३९ ॥

मूर्तिं च कर्णिकामध्ये सिसृक्षाशक्तिसंयुताम् ।
तस्मात् सृष्टिक्रमेणैव पुनरुत्पाद्य विग्रहम् ॥ ४० ॥

तन्मात्रकसमायुक्तं सूक्ष्मं यत्पाञ्चभौतिकम् ।
हृदम्बुजगुहावासं सर्वव्यापिनमीश्वरम् ॥ ४१ ॥

स्वात्मना चिन्तयेद्देवम् अभेदेन हि तत्त्ववित् ।
खस्थितां निर्गतेनैव स्वमन्त्रादमृतांभसा ॥ ४२ ॥

विग्रहं सेचयेत्तस्मिन् ततस्तत्त्वानि विन्यसेत् ।
एवं संशोध्य देहं तु मन्त्रन्यासं समाचरेत् ॥ ४३ ॥

---

३६. a : A. M. अधो for अथो०.
c : A. M. शशाङ्काकृतिवत् for सं शशाङ्काकृतिं.
d : A. M. अम्बधः for अम्बुभिः.
३७. a : My. व्यापिनं देवं A. ०व्यापिनं देहं for व्यापिभिर्देहम्.
d : My. A. आत्मसु for आत्मनि, M. तन्मन्त्रात्मतनुं स्मरेत्.
३९. a : S. संप्लाव्य for संभाव्य, A. भासं for भस्म.
४१. b : My. असूक्ष्मं for सूक्ष्मं, M. तत् for यत्.
c : S. गृहासीनं for गुहावासं.
४२. c : S. खस्थिाता निर्गता सैव.
d : S. V. स्वतन्त्राम् M. स्वतंत्रात् for स्वमन्त्राद०.

(मन्त्रन्यासप्रकारः)

'अस्त्रे'ण हस्तौ सम्मृज्य त्रिधा चैव परस्परम् ।
चिन्तये'न्मूल'मन्त्रं तु व्यापकं विन्यसेत्ततः ॥ ४४ ॥

दक्षिणाङ्गुष्ठमारभ्य यावद्वामतलं क्रमात् ।
न्यसे'दङ्गा'नि मन्त्रस्य 'हृदया'दीनि मन्त्रवित् ॥ ४५ ॥

आपाद'मूल'मन्त्रं तु करे च व्यापकं न्यसेत् ।
स्वस्थानस्थानं कुर्वीत हृदयादीनि विग्रहे ॥ ४६ ॥

लाजपुष्पैः समभ्यर्च्य मन्त्रान् सर्वान् यथाक्रमम् ।
एवं देवमयो भूत्वा योगपीठं प्रकल्पयेत् ॥ ४७ ॥

(योगपीठकल्पनप्रकारः)

वृत्तं वा चतुरस्रं वा सुविस्तीर्णं समं शुभम् ।
कारयित्वा विधानेन पादांस्तत्र विचिन्तयेत् ॥ ४८ ॥

धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ।
अग्निरक्षोमरुच्छर्वदिक्षु पादान् यथाक्रमम् ॥ ४९ ॥

अधर्मादीनि गात्राणि पूर्वादिक्रमयोगतः ।
पीठाकारमनन्तं च गात्रमध्येऽस्य विन्यसेत् ॥ ५० ॥

तस्योपरि ततो ध्यायेत् कमलं द्वादशच्छदम् ।
सूर्यबिम्बं दलगतं स्वमन्त्रेणैव विन्यसेत् ॥ ५१ ॥

---

४४. a : S. My. A. M. हस्तेन for अस्त्रेण.
c : V. हस्तयोः for चिन्तयेत्.
४५. d : M. हृदयानि तु for हृदयादीनि.
४८. d : M. पादं for पादान्.
४९. c : My. A. सर्व for शर्व.
d : S. My. A. M. क्रमात् for यथा.
५०. c : S. My. A. M. तु for च.
५१. c : My. च तन्मध्ये A. M. दलान् मध्ये for दलगतम्.

चन्द्रं केसरपुञ्जस्थं कर्णिकायां हुताशनम् ।
ततः सम्पूजयेत्सर्वान् नत्यन्तैस्तु स्वनामभिः ॥ ५२॥
तन्मध्ये कौतुकं स्थाप्य वैष्णवं चिह्नमेव वा ।

(पूजाद्रव्यविनिवेशस्थाननिर्देशः)

ततः सम्भृतसम्भारैः त्वर्चयेदच्युतं बुधः ॥ ५३ ॥
वामे तु वर्धनीं न्यस्य पूरितां गालितोदकैः ।
शेषं दक्षिणपार्श्वे तु पूजाद्रव्यं समस्तकम् ॥ ५४ ॥
आत्मनो वामभागेऽर्घ्यं दक्षिणे पाद्यमेव च ।
अर्घ्यस्य निकटे पश्चादाचामस्तदनन्तरम् ॥ ५५ ॥
पाद्यपात्रसमीपे तु स्नानार्थं वारि विन्यसेत् ।
देशाभावे यथाकामं पुष्पाद्यं विनिवेशयेत् ॥ ५६ ॥

(उपचारार्पणप्रकारः)

दहनाप्यायनं कुर्यात् भोगानां त्वग्रतोदितम् ।
सूर्यचन्द्रात्मना पश्चात् पवित्रीकृत्य चाम्भसा ॥ ५७॥
सर्वत्र प्रणवेनैव कीर्तितो मुनिसत्तम ।
ऋचा प्रथमयावाह्य पुंसूक्तस्य यथाक्रमम् ॥ ५८ ॥

---

५२. b : S. कार्णकान्तं My. A. M. कर्णिकास्थं for कर्णिकायाम्.
५५. d : S. My. A. M. न्यसेदाचमनं सुधीः.
५६. a : S. My. A. M. पाद्यस्य निकटे पश्चात्.
b : इत्यस्यानन्तरं A. कोशे एका पङ्क्तिः अधिका दृश्यते सा च इत्थम्—'तासां मध्ये द्वितीयार्घ्यं तत्तद्द्रव्याणि निक्षिपेत्'।
५७. b : S. अमृत for अग्रत.
d : A. कृत सा० for कृत्य चा०, M. अथवा for अम्भसा.
५८. c : S. My. A. M. यद्वा for ऋचा.
d : S. My. M. वधि for यथा.

शेषैः ऋग्भिः ततो दद्यात् आसनं चार्घ्यपाद्यके ।
आचामं स्नानवस्त्रं च सोपवीतानुलेपनम् ॥ ५९ ॥
स्रग्धूपदीपनैवेद्यप्रणामं सप्रदक्षिणम् ।
ऋचान्यया क्षमस्वेति स्मृतमन्ते विसर्जनम् ॥ ६० ॥
तत्रोपचारमन्त्रेण भोगानन्यांस्तदन्तरे ।
'जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ ६१ ॥
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज' ।
मन्त्रोऽयमुपचारस्य सर्वसिद्धिकरः शुभः ॥ ६२ ॥

(मिश्रार्चनस्वरूपम्)

वैदिकैः तान्त्रिकैर्मन्त्रैश्चार्चनं मिश्रमुत्तमम् ।
विधिनानेन यत्किञ्चित् फलन्यासान्तमर्चयेत् ॥ ६३ ॥
तन्मयेन तु दत्तं तत् गृह्णात्येव स्वयं हरिः ।
तस्मात् परतरो मार्गो भुक्तिमुक्तिप्रसाधने ॥ ६४ ॥
सर्वासामेव मूर्तीनां मन्त्राः साधारणास्त्विमे ।
अनेन भागाः सर्वेषां दातव्याः सिद्धिमिच्छता ॥ ६५ ॥

---

५९. b : S. My. A. M. पाद्यमर्घ्यकम् for चार्घ्यपाद्यके,
d : S. My A. उप॰. for सोप॰.
६०. a : S. My. A. M. नैवेद्यैः for नैवेद्य.
c : S. A. M. ऋचां तथा My. ऋचान्तया for ऋचान्यया.
d : M. स्मृतमन्त्रैः for स्मृतमन्ते.
६१. a : A. My. V. ततोप॰ for तत्रोप.॰
६२. d : S. My A. M. परम् for शुभः.
६३. a : V. M. स्तोत्रकैः for तान्त्रिकैः.
b : S. V. अर्चितम् for अर्चनम्.
c : My. विधिज्ञानेन for विधिनानेन.
६५. c : M. V. भोगाः for भागाः.
d : V. भोगम् for सिद्धिम्.

वासुदेवादिकानां तु कल्क्यन्तानां परात्मनाम् ।
स्वनाम्ना परिवारांस्तु नमोन्तेनार्चयेद्बुधः ॥ ६६ ॥

धूपान्तं 'मूल'मन्त्रेण 'चक्र'मन्त्रेण चार्चयेत् ।
पुनरप्येव धूपान्तं ततोऽपि प्रणवेन च ॥ ६७ ॥

(मूलबिम्बात् कौतुके आवाहनम्)

एवमावाह्य देवेशं मूलबिम्बात्तु कौतुके ।
करन्यासं विना कुर्यात् न्यासं 'मूले'न पूर्ववत् ॥ ६८ ॥

(बिम्बे भगवदावाहनस्य भावप्रतिपादनम्)

गौतम :—

भगवन् वासुदेवस्य सर्वगस्य महात्मनः ।
सर्वतः पाणिपादस्य सर्वतोऽक्षिमुखस्य हि ॥ ६९ ॥

सदाचलस्य वै स्थाणोः भवेदावाहनं कथम् ।
प्रब्रूहि भगवन्नेतद्यन्मया चोदितोऽसि मे ॥ ७० ॥

नारद :—

आवाहनं तु देवस्य पूजनाभिमुखीक्रिया ।
तस्य धर्म इति प्रोक्तं त्वावाहनविसर्जने ॥ ७१ ॥

---

६६. c : S. A. M. मूलादिसर्वबेरांस्तु.
६७. a : S. My. M. धूपान्तो for धूपान्तं.
b : S. My. A. M. क्रमाद्गन्धादिनार्चयेत्.
६८. c : S. कर्मन्यूनं for करन्यासं.
d : S. My. A. एवं तु for मूलेन.
६९. b : S. My. A. M. परात्मनः for महात्मनः.
d : M. वा for हि.
७०. a : M. अचर for अचल.
d : S. तम् for मे.
७१. d : My. A. चा for त्वा०.

नागतिर्न गतिस्तस्य सर्वगस्यानुमीयते ।
यथैव दृश्यते विप्र वायुः सर्वत्रगः स्थितः ॥ ७२ ॥

परमार्तस्य तु घर्मं च न व्यपोहति सन्नपि ।
अभिव्यक्तिं क्रमाद्याति वायुर्व्यजनबोधितः ॥ ७३ ॥

शमं नयेत्ततस्तस्य सघर्मानन्ददो भवेत् ।
एवमर्चासु भगवानावाह्यः परमेश्वरः ॥ ७४ ॥

भक्तानुकम्पया देवः स एव भगवान् हरिः ।
आराधनाय सर्वेषां संक्षिप्यात्मानमात्मना ॥ ७५ ॥

तजोमयं परं रूपमास्थायास्ते हृदीश्वरः ।
गृह्यतेऽग्निर्यथा चाग्नेरम्भश्चैव यथाम्भसः ॥ ७६ ॥

तथा तेजोमयाद्देवात् तेजः किञ्चिच्च गृह्यते ।
तथैव स्थापनाकाले न्यस्यते प्रतिमा हृदि ॥ ७७ ॥

नासापुटाद्धिनिष्क्रान्तं दक्षिणाध्यानयोगतः ।
तारकाकारसदृशं वामनासापुटाध्वना ॥ ७८ ॥

ततस्तस्मात् समाहूय कर्मबिम्बे चतुर्भुजे ।
शङ्खचक्रगदापद्मैर्युक्तायुक्तेऽर्चयेत् प्रभुम् ॥ ७९ ॥

---

७२. a : My. A. M. आगतिर्निंगतिस्ततः.
c : A. M. यत्र for विप्र.
d : My. A. सर्वात्मगः for सर्वत्रगः.
७३. a : A. M. My. यस्यास्तस्य तु for परमार्तस्य.
c : M. My. S. अभिव्यक्तः for अभिव्यक्तिम्.
७४. b : My. A. गर्वमान for सघर्मानि०, M. न घर्म for सघर्म०.
७६. a : S. My. A. M. सर्वेषु व्यापको देहम्.
c : S. My. A. M. गृह्यतेऽग्नेर्यथा चाग्निः.
७७. a : A. यथा for तथा.
c : A. M. तदेव My. तदैव for तथैव, S. स्थापने for स्थापना.
७९. a : S. ततस्तन्मात्रमाहूय.
b : My. A. ०भुजं for भुजे.
d : My. प्रभुः for प्रभुम्.

यद्देवाहूयते भक्तैस्तदेव तु विसृज्यते ।

(देवस्य योगपीठे समावेशः)

एवमाहूय देवेशं प्रणवेन निरुद्ध्य तु ॥ ८० ॥

नमस्कृत्वा यथायोगं योगपीठं समाविशेत् ।

(पीठे हृदयादिन्यासः)

पूर्वादिदलमारभ्य हृदयादीनि विन्यसेत् ॥ ८१ ॥

(पीठपरितः परिवारदेवकल्पनप्रकारः)

योगपीठस्य बाह्ये तु पूजापीठे प्रदक्षिणम् ।
पूर्वादिसोमपर्यन्तं वासुदेवादिकान् न्यसेत् ॥ ८२ ॥
अग्न्यादीशानपर्यन्तं शान्ताद्यं शक्तिसंचयम् ।
प्रथमावरणे ह्येतत् कुमुदादींस्तु विन्यसेत् ॥ ८३ ॥

(द्वितीयावरणे देवताविन्यासक्रमः)

द्वितीयावरणेष्वासु चक्रादीन् दिक्षु विन्यसेत् ।
भगवत्प्रमुखं पश्चात् गरुत्मन्तं नियोजयेत् ॥ ८४ ॥
न्यस्यैवं परिवारांस्तु पूजापीठं समन्ततः ।

(भगवतः आराधनप्रकारः)

आत्मानं किङ्करत्वेन देवाय विनिवेदयेत् ॥ ८५ ॥
दद्यादर्घ्यं तु देवस्य ततः पुष्पं तु मूर्धनि ।
पाद्यप्रतिग्रहं दद्यात् हैमं रत्नविभूषितम् ॥ ८६ ॥

---

८०. b : इत्यस्यानन्तरं S. A. M. कोषेषु एका पङ्क्तिरधिका, सा च इत्थम्—'एवमाहूय देवेशं स्तोत्रैश्चाभिवन्द्य च' इति ।

८१. a : My. A. V. om.
b : My. A. om.

८२. b : My. A. M. ०पीठं for ०पीठे.

८६. a : V. कोषे इतः आरभ्य श्लोक संख्या ११० पर्यन्तं पाठः त्यक्तः.

ततो वा पाद्यकलशात् पाद्यं दद्यात्तु पादयोः ।
विचित्रपादुके पश्चात् दद्यात् द्वे स्नानशाटिके ॥ ८७ ॥
हस्तप्रक्षालनं चैव पादपीठं शुभं ततः ।
दन्तकाष्ठं ततो दद्यात् दर्पणं चन्द्रसन्निभम् ॥ ८८ ॥
ततः प्रतिग्रहं दद्यात् मुखधावनसंज्ञकम् ।
ततो दद्यात् द्विजश्रेष्ठ जिह्वानिर्लेखनं शुभम् ॥ ८९ ॥
मुखप्रक्षालनं कृत्वा गण्डूषाचमनं ततः ।
अभ्यञ्जनं ततः कुर्यात् पुरः कण्डूयनं तथा ॥ ९० ॥
मसूरपिष्टेनोद्वर्त्य चन्दनेन सितेन वा ।
ततश्चामलकं दद्यात् कङ्कतेनैव मण्डयेत् ॥ ९१ ॥
तत्पात्राण्यंभसा स्थाप्य पुष्पतोयेन वै ततः ।
निशानीरेण संस्नाप्य ततो बीजोदकेन च ॥ ९२ ॥
ततश्चन्दनतोयेन ततः कर्पूरवारिणा ।
पश्चादुष्णोदकेनैव लोहतोयेन वै ततः ॥ ९३ ॥
स्नानार्थसलिलेनैव मिश्रितेन पुनः पुनः ।
अन्तरान्तरयोगेन स्नानानां क्षालनं भवेत् ॥ ९४ ॥
ततः स्नानघटो ग्राह्यो यः पुरा परिकल्पितः ।
तेन संस्नापयेद्देवं सूक्तेन 'पुरुष'स्य तु ॥ ९५ ॥

---

८७. a : S. A. M. वै for वा.
c : S. A. M. दत्त्वा for पश्चात्.
d : S. A. M. पश्चाद्वा for दद्याद्द्वे.
९०. d : A. पुनः for पुरः, S. My. A. कण्डूयनः for कण्डूयनं.
९१. b : S. My. A. M. च for वा.
९२. a : M. सिंच्य for स्थाप्य.
९३. c : A. रत्नोद० for उष्णोद०
९४. d : My. स्नानाङ्क for स्नानानां.

शाटिकाद्वितयं दद्यात् शिरोदेशस्य वारिहृत् ।
सुस्थितं सूक्ष्ममहतं वासो दत्त्वा दशान्वितम् ॥ ९६ ॥

सोत्तरीयोपवीतं च हैमान्याभरणानि च ।
नानारत्नानि दिव्यानि दद्याद्वै भक्तिपूर्वकम् ॥ ९७ ॥

तृतीयमासनं दद्यादलङ्काराभिधानकम् ।
स्नानपात्रं विना तत्र पूर्यं पात्रत्रयं जलैः ॥ ९८ ॥

अर्घ्यं पाद्यं तथाचामं दत्त्वा तत्तत्प्रतिग्रहात् ।
चन्दनेन समालिप्य सकर्पूरेण सर्वतः ॥ ९९ ॥

तालवृन्तेन संवीज्य विभवानुगुणेन तु ।
बन्धनीयं तथोष्णीषं हस्ते प्रतिसरं ततः ॥ १०० ॥

शोभनानि सुगन्धीनि मूर्ध्नि माल्यानि योजयेत् ।
नानाविधानि पुष्पाणि स्रग्दामानि बहूनि च ॥ १०१ ॥

सशलाकं ततो दद्यादञ्जनं नयनद्वये ।
दद्याच्च दर्पणं पश्चात् पूर्णचन्द्रसमप्रभम् ॥ १०२ ॥

अग्रतो विकिरेत् पुष्पं सितपीतासितारुणम् ।
प्रभूतघृततैलाढ्यं दीपमग्रे निवेदयेत् ॥ १०३ ॥

शशी सुगन्धसंयुक्तो देयो धूपार्थमग्रतः ।
तत आचमनं दद्यात् पात्रात्प्राक्कल्पितात् क्रमात् ॥१०४॥

---

९६. b : S. M. वारिणा for वारिहृत्.
c : S. संसिक्तं सूक्ष्य तन्त्रस्थं, A. सुसितं सूक्ष्मतन्तूस्थं.
d : M. वासो दत्त्वोदकान्वितम्.
९८. c : S. तत्रा for तत्र.
d : S. ०पूर्य for पूर्यं, A. द्वयम् for त्रयम्.
९९. b : S. तत्र for तत्तत्.
c : S. My. A. समालभ्य for समालिप्य.
१००. d : S. हरये for हस्ते.
१०१. d : बहुन्यपि for बहूनि च.
१०४. d : M. कल्पिते for कल्पितात्.

शशिबिम्बसमं वस्त्रं श्वेताम्बरकृतं शुभम् ।
शुकपक्षसमं चैव नानावस्त्रमयं ततः ॥ १०५ ॥

नानापत्रमयं चैव नानावर्णं च शोभनम् ।
उपानहौ तथा यानं वाहनं च प्रवाहनम् ॥ १०६ ॥

खगध्वजपताकाढ्यं तथा नानाविधध्वजम् ।
चामराणि विचित्राणि तथा क्रीडोचितानि च ॥ १०७ ॥

एवमिष्ट्वा यथालाभैः भोगैः कालानुकूलतः ।

(गोग्रासादिविनियोगः)

गोग्रासं शष्पनिचयं पुष्पं भारक्षमं नवम् ॥ १०८ ॥

एतानि सर्पिरादीनि पुष्पैः सम्पूज्य केवलैः ।
दर्शयित्वा तु देवाग्रे दद्याद्भागवताय च ॥ १०९ ॥

तत्र भागवतालाभे दद्यात्सद्वैष्णवाय वै ।

(वाद्यादिभिः भगवतः संप्रीणनम्)

पश्चात् संप्रीणयेद्देवं मृदङ्गपणवादिभिः ॥ ११० ॥

शङ्खतालरवैश्चैव भेरीणां निःस्वनेन च ।
स्तोत्रैः मङ्गलपाठैश्च गीतनृत्तादिना ततः ॥ १११ ॥

जयशब्दैः नमस्कारैः स्तोत्रैः स्तुत्वात्मशक्तितः ।

---

१०५. b : S. A. M. श्वेतवस्त्रं for श्वेताम्बर०.
१०७. a : S. आद्यं for आढ्यम्.
१०८. d : M. चरुं for क्षमं.
१०९. c : M. अर्चयित्वा for दर्शयित्वा.
११०. b : V. च for वै.
१११. a : S. A. काल for ताल.
c : V. वीणावेणुरवैनैव.
११२. b : My. A. M. स्तोत्रैः वा सप्रदक्षिणैः.

(भोज्यासनादिनिवेदनप्रकारः)

दद्याद्भोज्यासनं पश्चात् सपरिच्छदमायतम् ॥ ११२ ॥
पाद्यमाचमनं तद्वद्दद्यात् तत्तत्प्रतिग्रहे ।
निवेद्य चार्हणं पश्चात् मधुपर्कं समाहितः ॥ ११३ ॥
पात्रसंस्थं घृतं हव्यं मधु दध्ना समन्वितम् ।
एकाङ्गं वा समस्तं वा मधुपर्कं न लोपयेत् ॥ ११४ ॥
तर्पणं चार्घ्यकलशात् दद्यान्निष्पवनं ततः ।
दद्यादाचमनं पश्चात् ताम्बूलं च निवेदयेत् ॥ ११५ ॥
ततस्त्वाचमनं दत्त्वा सपात्रं तत्प्रतिग्रहे ।
निवेद्य चार्हणं पार्श्वदर्पणं स्थाप्य दक्षिणे ॥ ११६ ॥
भक्ष्यैर्भोज्यैश्च लेह्यैश्च चोष्यैर्हृद्यैः समन्वितम् ।
मधुराद्यै रसैर्युक्तमन्नं शालिसमुद्भवम् ॥ ११७ ॥
दद्याद्देवाय हस्तेन ग्रासमुद्रान्वितेन तत् ।
दर्पणं च ततो दद्यात् पश्चात् पुष्पासनं ततः ॥ ११८ ॥
ततस्त्वाचमनीयं च दद्यात्तस्य प्रतिग्रहे ।
हृद्यं ताम्बूलनिचयं सचूर्णं शशिनं तथा ॥ ११९ ॥

---

११३. d : M. समाहितम् for समाहितः.
११४. a : S. A. V. M. गव्यं for हव्यम्.
d : S. निवेदयेत् for न लोपयेत्.
११५. a : A. M. S. V. कलशान् for कलशात्.
b : A. चूर्णो न्निष्पुंसनं ततः.
११६. b : S. V. ०ग्रहात् for ०ग्रहे.
c : My. A. विनिवेद्यार्हणं पार्श्वं, A. प्राग्वत् for पार्श्व.
d : A. तर्पणं for दर्पणं.
११७. b : S. My. V. द्रव्यैः for हृद्यैः.
११८. d : My. निष्पंसनं ततः A. निष्पुंसनं तथा for पुष्पासनं ततः.
११९. c : My. खाद्यं A. खाद्य for हृद्यं.
d : My. M. सम्पूर्णं for सचूर्णम्.

सफलं देवदेवाय दद्यात् पूगफलं च तत् ।
अष्टाङ्गेन नमस्कृत्य मुद्राभेदांस्तु दर्शयेत् ॥ १२० ॥
जपं कृत्वा यथाशक्ति स्तोत्रैःस्तुत्वा स्वशक्तितः ।

(भगवद्भक्तादिसमभ्यर्चनादिः)

ततस्तु भगवद्भक्तान् दीक्षितान् पञ्चरात्रिणः ॥ १२१ ॥
समभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
तेभ्यो दद्याच्च नैवेद्यं मधुपर्कपुरस्सरम् ॥ १२२ ॥
किञ्चित् संस्थाप्य पूजार्थं विष्वक्सेनस्य पूर्वतः ।
प्रगृह्य चार्घ्यकलशात् अर्घ्यपात्रे तथापरे ॥ १२३ ॥
देवं प्रदक्षिणं कृत्वा नमस्कृत्वा पुनः पुनः ।

(नित्यार्चनाङ्गमग्निकार्यम् [होमप्रकारः])

द्वारमावृत्य निर्गच्छेद्बहिरग्न्यालयं शुभम् ॥ १२४ ॥
कुण्डलक्षणसंयुक्तमोष्ठनाभिसुभूषितम् ।
तत्र होमं प्रकुर्वीत स्थण्डिले केवलेऽपि वा ॥ १२५ ॥
चुल्यां वा मल्लके वापि होमं कुर्याद्यथाविधि ।
पचनानलमादाय शरावस्थं स्वसम्मुखम् ॥ १२६ ॥
तदाधारस्थितं विष्णुमग्निवक्त्रं यजेत्प्रभुम् ।
सर्वं कृत्वा तु पात्रस्थं यद्यत्पक्वं हविर्मुने ॥ १२७ ॥

---

१२०. b : My. द्विज for च तत्.
१२१. b : V. चैव for स्तुत्वा.
१२२. d : समन्वितं for पुरस्सरम्.
१२३. b : My. पृष्टतः for पूर्वतः.
c : My. प्रगृह्याचार्य for प्रगृह्य चार्घ्य०, S. My. M. V. कलशान् for कलशात्.
d : My. A. S. M. यथा for तथा.
१२७. a : A. विधातारस्थितं for तदाधारस्थितं.

अनुक्तो मन्त्रराडयस्य होमकाले तु कर्मणः ।
प्रणवेनैव तत्कुर्यात् नमोन्तेन तु मन्त्रवित् ॥ १२८ ॥

प्रविश्य चाग्निभवनं प्रज्वाल्य व्यजनेन तु ।
परिमृज्य ततो दर्भैः परिस्तीर्य त्रिधा त्रिधा ॥ १२९ ॥

स्थाप्यमुत्तरतः सर्वं युग्मं युग्मं स्रुवादिकम् ।
चुलुकं पूरयित्वा तु वारिणा परिषेचयेत् ॥ १३० ॥

पूर्वादितः क्रमाद्दिक्षु सम्मुखोऽग्निः ततो भवेत् ।
आघारमाज्यभागौ च होमयेत्तदनन्तरम् ॥ १३१ ॥

अग्रतः काष्ठसमिधः जुहुयाच्च घृताप्लुताः ।
पुष्पाख्यां तु ततो हुत्वा धूपाख्यां जुहुयात्ततः ॥ १३२ ॥

ततस्तु मधुपर्काख्यां बीजाख्यां तदनन्तरम् ।
अन्नाख्यां परमां हुत्वा घृताख्यां सप्तमीं ततः ॥ १३३ ॥

अष्टावरा सहस्रान्ता संख्या संकीर्तिता पृथक् ।
एकबेरविधावेवं स्वगृहाराधनेऽपि वा ॥ १३४ ॥

जुहुयात् सप्तभिस्तत्र समिद्भिः साधकोत्तमः ।
आराधनं यदा कुर्यात् आलये कर्मकौतुके ॥ १३५ ॥

---

१२८. c : M. नतु for ०नैव.
d : S. कुत्रचित् for मन्त्रवित्.
१२९. c : A. My. S. V. परिसमूह्य for परिमृज्य.
१३०. a : My. अन्तरतः for उत्तरतः.
c : My. चुवुकं for चुलुकम्.
१३१. b : A. सतो for ततो.
c : S. My. A. आघारौ for आघारम्.
१३३. c : S. My. A. M. अपरां for परमां.
१३४. a : V. ०परा for ०वरा०.
b : S. My. A. सा की० for संकी०.
d : My. ग्रहः सतविस्तरा A. M. ग्रहः सप्तभिस्तरुः for गृहाराधनेऽपि वा.
१३५. c : S. कामन्तम् A. सकामं तु for आराधनम्, S. यथा for यदा.

तिस्रस्तु समिधो मध्ये काष्ठमाज्यं हविस्तथा ।
क्रमेणानेन होतव्या हविरन्ता इमा द्विज ॥ १३६ ॥

हृदयादीशनिष्ठानां सर्पिषा तु सकृत् सकृत् ।
पूजयित्वा स्वनाम्ना तु स्वाहान्तेन यथाक्रमम् ॥१३७॥

न्यूनाधिकानां शान्त्यर्थं देयात् स्विष्टकृदाहुतिम् ।
प्रायश्चित्तं तु जुहुयात् पञ्चमन्त्रैस्तु पञ्च वै ॥ १३८ ॥

दद्यात् पूर्णाहुतिं पश्चात् स्रुचा च स्रुवयुक्तया ।
'मूल'मन्त्रेण जुहुयात् सर्पिषा साधकोत्तमः ॥ १३९ ॥

एवं कृत्वाऽग्निकार्यं तु प्रीणयेदच्युतं ततः ।

(नित्यार्चनबलिदानक्रमः)

ततस्तु चरुणा देवान् बाह्याभ्यन्तरगान् क्रमात् ॥ १४०॥

पूजयेत् विधिना विद्वान् पृथक् पक्वेन शक्तितः ।
बलिं च विकिरेत् पश्चात् भूतानां च त्रिसन्धिषु ॥१४१॥

प्रथमावरणे मन्त्री पूर्वादिक्रमयोगतः ।
अष्टदिक्षु बलिं दत्त्वा बलिपीठे समापयेत् ॥ १४२ ॥

सर्वदेवाश्रये धाम्नि तस्मात्तत् पार्षदालये ।

---

१३६. a : My. A. M. नित्ये for मध्ये.
b : V. तदा for तथा.
c : S. होतव्यम् My. होतव्यो for होतव्या.
d : S. हविरन्नदिमं द्विज, My. हविरन्नानि मे द्विज.

१३७. a : S. My. A. हृदयादीशनष्टान्तं M. हृदयं विशनष्टान्तम्

१३८. a : My. ईशानादिशान्त्यर्थं, A. तन्न्यूनाधिकशान्त्यर्थं.
c : S. V. च for तु.

१४१. a : A. विप्रान् for विद्वान्.
d : My. व्रतानां for भूतानां, V. कोशे अस्य श्लोकस्यानन्तरमेका पङ्क्तिः दृश्यते, सा च—'द्वितीयावरणाग्रस्थे सर्ववष्टदलामयः' इति ।

१४३. a : S. आश्रमे for आश्रये.

(बलियात्राप्रकारः)

बलियात्रां ततः कुर्यात् विभवे कामनावशात् ॥ १४३ ॥

विधानं तस्य वक्ष्यामि शृणुष्व गदतो मम ।
सौवर्णं राजतं ताम्रं सुवृत्तं बलिभाजनम् ॥ १४४ ॥

प्रक्षिप्य तण्डुलांस्तत्र पात्रके शालिसंभवान् ।
मध्याह्ने शिवकं कृत्वा हविषा तत्र विन्यसेत् ॥ १४५ ॥

सायञ्चेत् विन्यसेत् पुष्पाण्यम्बुजानि शुभानि वा ।
मध्ये देवं समाराध्य वासुदेवमनामयम् ॥ १४६ ॥

दलेषु वा समायोज्याः विष्वाद्याः पूर्वतः क्रमात् ।
पूर्ववत् परिवारास्तु न्यस्तव्याः तत्र भाजने ॥ १४७ ॥

गन्धपुष्पैः समभ्यर्च्य धूपदीपाक्षतैस्तथा ।
तच्छिष्यशिरसि स्थाप्य गेयवाद्यादिसंयुतम् ॥ १४८ ॥

सर्वेष्वावरणेष्वेवं भ्रामयित्वा प्रदक्षिणम् ।
भ्रामयित्वा बलिं तद्वत् प्रथमावरणे पुनः ॥ १४९ ॥

---

१४३. c : S. My. A. M. पात्रं for यात्राम्.

१४४. a : S. विधिना for विधानं.
d : S. My. A. M. त्रिभिर्द्रव्यं तु for सुवृत्तं बलि०.

१४५. b : S. My. A. M. पुष्पजालसमागमम्.
c : S. दीपकं V. बिम्बकं for शिवकम्, S. दत्त्वा for कृत्वा.
d : S. My. A. पूर्वाह्णे for हविषा.

१४६. a : V. सायेन M. सायन्तु for सायञ्चेत्.
b : S. च for वा.

१४७. a : A. मासपाः for वा समा०.
c : S. My M. पूर्वतः for पूर्ववत्.

१४८. b : S. My. A. M. क्रमात् for तथा.

संहृत्य पात्रगं देवं परिवारैः समन्वितम् ।
पुष्पं तत्पात्रगं दद्यात् विष्वक्सेनाय सर्वदा ॥ १५० ॥

बहिः पीठे ततो मन्त्री तण्डुलं शिवकं क्षिपेत् ।
एवं कालत्रयं कुर्यात् बलिदानं विधानतः ॥ १५१ ॥

(गृहार्चायां बलियात्रानिषेधः)

न तत्र बलियात्रोक्ता योऽर्चयेत् स्वगृहे हरिम् ।
त्रिसन्ध्यं स तु कुर्वीत पूजनं बह्नितर्पणम् ॥ १५२ ॥

द्विसन्ध्यमेकसन्ध्यं वा यथाशक्ति द्विजोत्तमः ।

(नित्यार्चनक्रमे पूजाकालसंख्यानिर्देशः)

प्रासादे स्थापितं देवं य इच्छेद्धितमात्मनः ॥ १५३ ॥

अथवा देवगन्धर्वमुनिमुख्यादिपूजितम् ।
पूजयेद्यो जगन्नाथं तस्यायं क्रम उच्यते ॥ १५४ ॥

अत्र द्वादशकालेषु षट्कालेष्वथवा यजेत् ।
पञ्चकालेषु देवेशं चतुष्कालेषु वा मुने ॥ १५५ ॥

त्रिकालेषु यजेद्वापि नास्मादूनं शुभप्रदम् ।
यत्र द्वादशकालेज्या षट्कालेज्याथवा मुने ॥ १५६ ॥

कालषट्के तु होतव्यं नास्माद्धोमोऽधिकः शुभः ।

---

१५०. a : My. संश्रुत्य for संहृत्य, A. पात्रकं for पात्रगं.
c : A. M. पात्रकं for पात्रगम्.
१५१. a : A. पिण्डे for पीठे, M. मन्त्रे for मन्त्री.
d : S. यानं for दानम्.
१५२. a : M. स तत्र बलियानोक्तौ.
१५३. c : S. My. बिम्बं for देवं.
d : A. V. विप्राद्यैर्दत्तमात्मनः.
१५५. d : M. V. तु for ०षु.
१५६. b : A. न्यूनं for ऊनं.
d : S. My. A. तथा for ०थवा.

(न्यासादिकालसंख्यानिर्देशः)

पञ्चकालाधिकन्यासः चतुष्कालाधिकासनम् ॥ १५७॥

स्नानञ्च बलिदानञ्च यत्त्रिकालाधिकं तथा।

(त्रिकालस्वरूपम्)

प्रातर्मध्यन्दिनं सायं त्रिकालस्तु यथाक्रमम् ॥ १५८ ॥

(चतुष्कालस्वरूपम्)

प्रातराद्याः निशीथान्ताः चतुष्कालाः प्रकीर्तिताः।

(पञ्चकालस्वरूपम्)

एतन्मध्येऽपराह्णस्तु पञ्चकालाः उदाहृताः ॥ १५९ ॥

(षट्कालस्वरूपम्)

षट्कालाः प्रत्युषान्तास्तु प्रातराद्या उदाहृताः।

दशनाडीमिता ज्ञेयाः षट् कालाः उदयादितः ॥ १६०॥

(द्वादशकालाः)

ततो द्वादशकालस्तु पञ्चनाडीमितो मतः।

एवं द्वादशकालान्तं त्रिकालावरमर्चयेत् ॥ १६१ ॥

प्रासादे स्थापितं देवं विधिनानेन साधकः।

दत्त्वा पूजासनं सर्वं देवदेवाय भक्तितः ॥ १६२ ॥

---

१५७. c : M. न्यूने for न्यासः.
d : M. षट् for चतुष्.

१५८. a : S. A. M. V. यानं for दानं.
b : My. A. यस्त्रि० M. यत्न for यत्त्रि०.

१५९. c : S. My. युते A. M. एते for एतन्.

१६०. d : M. षट् कालत्रितयान्तिकाः.

१६१. b : S. My. A युता मता for मितो मतः.
c : M. कालं तु for कालान्तं.
d : S. त्रिकालं परम् M. त्रिकालं बरं for त्रिकालावरम्.

१६२. c : S. My. A. M. पूजाफलं for पूजासनम्.

विष्वक्सेनं तु सम्पूज्य शिष्टैर्द्रव्यैस्तु भूतराट् ।

(अर्चनद्रव्यविनियोगः)

द्विजेन्द्रदत्तशिष्टं यन्नैवेद्यं कुसुमं जलम् ॥ १६३ ॥

तत्सर्वमुपसंहृत्य किञ्चित् पुष्पं निधाय वै ।
विष्वक्सेनाय दातव्यं स्वनाम्नैव यथाक्रमम् ॥ १६४ ॥

(देवोद्वासनम्)

एवमिष्ट्वा तु भूतेशं देवमुद्वासयेत् क्रमात् ।
विलाप्य परिवारांस्तु वैष्णवे धाम्नि शाश्वते ॥ १६५ ॥

यस्मात्समागमस्तस्मिन् प्रतिसंहारमाचरेत् ।
इति यागविधिः सम्यक् उक्तस्ते मुनिसत्तम ॥ १६६ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायाम्
आराधनविधानो नाम द्वितीयोऽध्यायः ॥

---

१६३. a : V. विश्वक्सेनस्तु सम्पूज्यः.
d : A. नैवेद्यं कुसुमांजलिम्.
पुष्पिकायां—S. A. M. श्री नारद for श्रीपाञ्चरात्रे नारदीय.

# तृतीयोऽध्यायः

## [चतुर्मूर्तिमन्त्रादिनिरूपणाध्यायः]

(देवमन्त्रादिवर्णनार्थं गौतमस्य निवेदनम्)

गौतम :—

सर्वेषामत्र देवानां मन्त्रानाचक्ष्व तत्त्वतः ।
अङ्गानि च तथा तेषां साधनं मुनिपुङ्गव ॥ १ ॥

(मन्त्रोद्धारविधेः उपक्रमः)

नारद :—

मातृकां पूजयेत्पूर्वम् अष्टवर्गसमन्विताम् ।
उद्धरेच्च ततः पश्चात् मन्त्रान् साधकसत्तमः ॥ २ ॥

(द्वादशाक्षरमन्त्रोद्धारप्रकारः)

प्रणवं पूर्वमुद्धृत्य पञ्चमाद्वूर्ध्वमुद्धरेत् ।
षष्ठान्तं प्रथमाद्वर्गात् त्रयोदशसमन्वितम् ॥ ३ ॥

षष्ठाच्चतुर्थं वर्णं तु द्वितीयात्तु तृतीयकम् ।
अन्त्यं च सप्तमाद्वर्गात् पञ्चमात् प्रथमं ततः ॥ ४ ॥

प्रथमैकादशयुक्तं सप्तमादन्तमुद्धरेत् ।
द्वितीयेन च संयुक्तं प्रथमाद्वै द्विजोत्तम ॥ ५ ॥

---

१. a : My. A. मन्त्र for अत्र.

२. c : S. M. उद्धरेत्तु ततः पश्चात्, My. A. प्रणवमुद्धरेत्पूर्वम्.
d : My. A. पञ्चवर्णान्तियुग्मकम्, S. M. om. मन्त्रान् साधकसत्तम.

३. a : My. A. उद्धरेत्तु ततः षष्ठात्, S. M. om. प्रणवं पूर्वमुद्धृत्य.
b : वर्गाद्वर्णं तु पञ्चमम्;
c : My. A. उद्धरेत्तु ततः पश्चात्.

५. c : S. My. A. तु for च.
d : V. प्रथमामुद्धरेत्ततः.

तृतीयमष्टमाद्वर्णमाद्यात्पञ्चमसंयुतम् ।
तृतीयं पञ्चमाद्वर्णमाद्यैकादशसंयुतम् ॥ ६ ॥
सप्तमान्तयुतं पश्चात् द्वितीयेनादिवर्गतः ।
सप्तमात् प्रथमं चैव पश्चाद्येन पुटीकृतः ॥ ७ ॥
द्वादशाक्षरमन्त्रोऽयं बीजाद्यन्तविभूषितः ।

(वासुदेवमन्त्रस्य अङ्गानि)

प्रथमं हृदयं विद्यात् द्वितीयं तु शिरो भवेत् ॥ ८ ॥
तृतीयं तु शिखावर्णं चतुर्थं कवचं भवेत् ।
अस्त्रं तु पञ्चमं वर्णं दृग्ज्ञेयं षष्ठमक्षरम् ॥ ९ ॥
उदरं सप्तमं ज्ञेयम् अष्टमं पृष्ठमेव च ।
बाहूक्तं नवमं वर्णं दशमं चोरुसंज्ञकम् ॥ १० ॥
जानुन्येकादशं ज्ञेयं द्वादशं पादसंज्ञितम् ।

(द्वादशाक्षरमन्त्रस्य अङ्गमन्त्राः)

प्रणवाद्या नमोन्ताश्च बीजान्ते नामसंयुताः ॥ ११ ॥
अङ्गमन्त्रास्तु विज्ञेयाः द्वादशार्णस्य सर्वदा ।

---

६. b : A. आद्य पञ्चसमं युतम्, V. आद्याद्वै पञ्चमोन्ततः, My. आद्यातपञ्चमी सयुतम्.
७. a : V. गतं युतं for युतं पश्चात्.
d : My. A. M. त्वाद्याद्येन पुटीकृतम्.
८. c : S. My. A. प्रणवं for प्रथमम्, S. विन्द्यात् for विद्यात्.
९. c : M. हस्तं for अस्त्रं,
d : S. My. V. M. विज्ञेयं for दृग्ज्ञेयम्.
१०. d : S. A. M. संज्ञितम् for संज्ञकम्.
११. a : S. जानुश्च for जानुनी, S. My. A. वर्णं for ज्ञेयम्.
c : M. प्रणवाद्यं नमान्तं च.
d : S. My. M. अन्तम् for अन्ते.

(द्वादशाक्षरमन्त्रवर्णस्वरूपनिर्देशः)

प्रथमं पद्मसंस्थं तु शुक्लवर्णं विचिन्तयेत् ॥ १२ ॥
द्वितीयं वृषभारूढं जलवर्णं जलाश्रयम् ।
अजारूढं तृतीयं तु दण्डहस्तं तडित्प्रभम् ॥ १३ ॥
खड्गपाणिं तथा कृष्णं चतुर्थं सप्तिवाहनम् ।
गजस्थं सितवर्णाभं ध्वजहस्तं तु पञ्चमम् ॥ १४ ॥
षष्ठमम्बुजहस्तं तु सितं मकरवाहनम् ।
वज्रहस्तं तु शङ्खाभं गरुडस्थं तु सप्तमम् ॥ १५ ॥
अष्टमं महिषारूढं पिङ्गलं दण्डपाणिनम् ।
चक्रहस्तं तु नवमं पीतन्तु नरवाहनम् ॥ १६ ॥
अक्षसूत्रकरं रक्तं दशमं हंसवाहनम् ।
एकादशं खगारूढमतसीकुसुमद्युतिम् ॥ १७ ॥
अष्टबाहुं गदापाणिमेवमेव विचिन्तयेत् ।
द्वादशं पाण्डुराभं तु सिंहस्थं शङ्खपाणिनम् ॥ १८ ॥

(द्वादशाक्षरमन्त्रवर्णेषु तत्त्वनिरूपणम्)

प्रथमं बुद्धितत्त्वं तु अहङ्कारं द्वितीयकम् ।
तृतीयं पृथिवीतत्त्वम् आपस्तत्त्वं चतुर्थकम् ॥ १९ ॥

---

१२. d : S. शुक for शुक्ल.
१३. b : V. समा० for जला०.
d : A. टङ्क for दण्ड०.
१४. b : A. M. चतुष्कं for चतुर्थं, S. सप्त for सप्ति०
c : S. My. पीतवर्णं तु for सितवर्णाभं.
१५. b : M. सितेन्दुशर for सितं मकर०
c : S. My. M. चक्रप्रभं for वज्रहस्तं, A. अङ्कं for आभम्.
१७. a : S. शतं for करं.
b : V. हय for हंस ;
d : S. छविं for द्युतिम्
१८. d : S. My. A. M. सिंहवाहनमेव च.
१९. d : A. अप for आपस्.

पञ्चमं तैजसस्तत्त्वं षष्ठं वै वायुतत्त्वकम् ।
सप्तमं तु वियत्तत्त्वं मनस्तत्त्वं तथाष्टकम् ॥ २० ॥

नवमं गन्धतत्त्वं तु दशमं रसतत्त्वकम् ।
एकादशं ततो रूपं द्वादशं सर्वसंज्ञितम् ॥ २१ ॥

(द्वादशाक्षरमन्त्रमाहात्म्यम्)

एष मन्त्रवरः श्रीमान् गुह्याद्गुह्यतरं परम् ।
रहस्यानां रहस्यं तु पावनानां तु पावनम् ॥ २२ ॥

ब्रह्मरुद्रादिभिर्देवैः दुर्लभो मन्त्रराडयम् ।
देवदानवगन्धर्वयक्षविद्याधरादिभिः ॥ २३ ॥

मुनिभिश्च महाभागैः पूजितो मनुजैरपि ।
द्वादशाक्षरमन्त्रोऽयं साक्षाद्देवस्य वाचकः ॥ २४ ॥

द्वादशाक्षरतत्त्वज्ञाः पञ्चरात्रपरायणाः ।
यस्मिन्देशे वसन्त्यत्र न दुर्भिक्षादयो मुने ॥ २५ ॥

जायन्ते सुभगाः पुष्टाः हृष्टाः वित्तसमन्विताः ।
ज्ञानिनः पुत्रवन्तश्च दासीदाससमन्विताः ॥ २६ ॥

वेदवेदाङ्गतत्त्वज्ञाः सर्वशास्त्रविशारदाः ।
अनेन मन्त्रराजेन यत्र संपूजितो हरिः ॥ २७ ॥

---

२०. c : My. A. M. वीर्य for वियत्,
d : S. My. A. अष्टमम् for अष्टकम्.
२१. c : S. My. A. M. तमो for ततो.
२२. a : V. एवमेव विधिः प्रोक्तः.
२३. b : S. My. A. M. स्वयम् for अयम्.
२५. b : S. My. A. M. काल for रात्र.
c : M. वसेद्यत्र for वसन्त्यत्र.
२६. b : S. वीतरोष My. A. M. वीतराग for हृष्टाः वित्त०

ईतयस्तत्र नश्यन्ति व्याधयस्त्वाधयस्तथा ।
समग्रावयवास्सर्वे तद्राजा विजयी भवेत् ॥ २८ ॥

सार्वभौमस्तथा चाढ्यो धर्मिष्ठः सत्यवाक् भवेत् ।
मही च सस्यसम्पूर्णा समृद्धा विभवादिभिः ॥ २९ ॥

गावश्चैव पयस्विन्यो बलवन्तश्च वाहनाः ।
स्त्रियश्चातीव सुन्दर्यो भयहीनाः प्रजाः सदा ॥ ३० ॥

मन्त्रेणानेन सृष्टीशो ब्रह्मा ब्रह्मत्वमाप्नुयात् ।
रुद्रो रुद्रत्वमिन्द्रत्वमिन्द्रोऽपि धनदस्तथा ॥ ३१ ॥

अन्ये देवाश्च देवत्वम् अस्मिन् सर्वं प्रतिष्ठितम् ।
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ॥ ३२ ॥

अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ।
लीनस्तस्मिन् परे व्योम्नि तद्भावं प्रतिपद्यते ॥ ३३ ॥

घृते घृतं जले तोयं क्षीरे क्षीरमिवास्थितः ।
संसारमुक्तिसिद्ध्यर्थं मन्त्रोऽयं सम्प्रकासितः ॥ ३४ ॥

---

२८. a : My. A. M. नेतयस्तत्र दृश्यन्ते.
    b : S. आधयोव्याधयस्त्वथ.

२९. b : S. M. यष्टा वै A. यष्टा वै My. सुयष्टः for धर्मिष्ठः, S. A. भाग् for वाक्.
    d : S. समृद्धादिगवादिभिः, V. समग्रा च गवादिभिः.

३०. b : S. वाहिताः for वाहनाः.
    c : V. देव for अतीव.
    d : S. भव्याङ्गीनाः प्रजास्पदा.

३१. a : S. संस्पृष्टो for सृष्टीशो.
    b : S. ब्राह्मो for ब्रह्मा.

३२. b : My. S. अस्मिन्नेव भवत्ययः.

३३. d : S. तदानन्दं M. तथानन्दं for तद्भावम्, My. सम्प्रपद्यते for प्रतिपद्यते.

३४. d : My. प्रकाशते for प्रकासितः.

ज्ञानानां परमं ज्ञानं दुर्लभानां च दुर्लभम् ।
अनेन मन्त्रमुख्येन सृष्टिस्थित्यन्तकृद्भवेत् ॥ ३५ ॥
ततः सर्वमवाप्नोति यद्यपि स्यात्सुदुर्लभम् ।
अणिमादिकमैश्वर्यं सिद्ध्योऽस्य करे स्थिताः ॥ ३६ ॥
द्वादशाक्षरमन्त्रस्य सदृशो भुवि दुर्लभः ।
तस्य यानि च रूपाणि प्रादुर्भूतानि भूतये ॥ ३७ ॥
पक्षीशयानयुक्तानि स्थितानि कमलादिषु ।
विविधासनयुक्तानि नागेन्द्रशयनानि च ॥ ३८ ॥
निर्मितानि विरिञ्चाद्यैर्मनुजान्तैः महात्मभिः ।
अनेन पूजनीयानि मन्त्रेण विधिपूर्वकम् ॥ ३९ ॥
नास्त्यस्मात्परमो मन्त्रः सर्वलोकेषु विश्रुतः ।
द्वादशाक्षरमन्त्रस्तु साक्षाद्देवस्य सम्मतः ॥ ४० ॥
काम्याधिकाररहितैः जप्तव्यः साधकैः सदा ।
सर्वावरणविध्वंसी मुक्तिदोऽसौ न संशयः ॥ ४१ ॥

(द्वादशाक्षरमन्त्रसाधनप्रकारः)

अस्य मन्त्रस्य वक्ष्यामि साधनं तु महामुने ।
नदीसङ्गमतीर्थेषु पुण्योद्यानेषु वा पुनः ॥ ४२ ॥
पर्वताग्रेषु पुण्येषु हरेरायतनेषु वा ।
तीर्थेषु शुभदेशेषु देवमुन्यादिसद्मसु ॥ ४३ ॥
धराधरोपकण्ठेषु तन्नितम्बेषु वा मुने ।
समुद्रे वा सरित्तीरे पुलिने वा मनोरमे ॥ ४४ ॥

---

३७. d : S. V. भूतले for भूतये.
३८. c : A. M. नृत्तानि for युक्तानि.
३९. b : S. My. A. M. आद्यैः for अन्तैः.
४०. a : A. नास्मात्परतरो मन्त्रः.
b : S. My. A. विद्यते for विश्रुतः.
४३. c : S. शुद्ध for शुभ.

महोदधेर्वा पुलिने तीरे वा निकटेऽपि वा ।
नगरोपवने वापि भूमिलक्षणसंयुते ॥ ४५ ॥

ग्रामे वा नगरे वापि शुभे दोषविवर्जिते ।
परिगृह्य शुभं स्थानं तत्र साधनमाचरेत् ॥ ४६ ॥

क्षेत्रबन्धं पुरा कृत्वा चतुर्दिक्षु विधानतः ।
व्रतोपवासपूर्वं तु आत्मानं शोधयेत्ततः ॥ ४७ ॥

मासं यावकभुग् भूत्वा नित्यस्नायी जितेन्द्रियः ।
त्रिकालं मुनिशार्दूल मौनी शुद्धांबरः शुचिः ॥ ४८ ॥

कृच्छ्रं चान्द्रायणं वापि परिपाकं स्वशक्तितः ।
कृत्वा पश्चाज्जपेन्मन्त्रं लक्षमेकं हविष्यभुक् ॥ ४९ ॥

(वासुदेवमन्त्रसाधनफलम्)

वासुदेवाख्यमन्त्रस्य तथाशीलव्रतो भवेत् ।
द्वितीयेन तु लक्षेण जपेन द्विजसत्तम ॥ ५० ॥

पापोपपातकैः सर्वैः मुच्यते नात्र संशयः ।
तृतीयेन तु लक्षेण जप्तेन मुनिपुङ्गव ॥ ५१ ॥

---

४५. a : S. महापथेषु My. महोदयेषु for महोदधेर्वा.
४६. a : My. A. M. ऽपि वने for नगरे.
c : S. M. ग्राह्य for गृह्य.
d : S. आरभेत् for आचरेत्.
४७. d : S. My. A. M. साधयेत् for शोधयेत्.
४८. a : My. मासा for मासं.
b : S. स्नायात् for स्नायी;
d : My. मुनी for मौनी.
४९. b : S. पारपाकं M. A. पराकं च for परिपाकं.
d : S. लक्ष्यं for लक्षम्.
५०. d : My. A. M. V. जप्तेन for जपेन, V. पुङ्गव for सत्तम.

ब्रह्महत्यादिकैश्चान्यैः मुच्यते नात्र संशयः ।
चतुर्थेन तु लक्षेण जप्तेन द्विजसत्तम ॥ ५२ ॥

शरीरे तु वसेन्मन्त्रः साधकस्य न संशयः ।
तेन प्रविष्टमात्रेण द्योतते सूर्यवत्तथा ॥ ५३ ॥

सर्वदेवनमस्कार्यः सिद्धवन्द्यश्च जायते ।
पञ्चमेन तु लक्षेण जप्तेन द्विजसत्तम ॥ ५४ ॥

देवलोकमवाप्नोति द्वितीय इव वासवः ।
षष्ठलक्षं जपेद्यस्तु साधकस्तन्मयस्सुधीः ॥ ५५ ॥

भाति लोकेषु सर्वेषु मार्तण्ड इव मूर्तिमान् ।
सप्तमेन तु लक्षेण जप्तेन द्विजसत्तम ॥ ५६ ॥

महर्लोकं विनिर्जित्य प्रजापतिसमो भवेत् ।
अष्टभिस्तु जनं लोकं तपश्च नवभिर्जयेत् ॥ ५७ ॥

दशमेन तु लक्षेण जप्तेन द्विजपुङ्गव ।
ब्रह्मलोकमवाप्नोति देवब्रह्मर्षिसेवितम् ॥ ५८ ॥

एकादशेन लक्षेण जप्तेन च महामतिः ।
वैकुण्ठलोकमाप्नोति अनिरुद्ध इवापरः ॥ ५९ ॥

जपैर्द्वादशभिर्लक्षैः भावितेनान्तरात्मना ।
प्रद्युम्नपदमाप्नोति देवब्रह्मर्षिसेवितम् ॥ ६० ॥

---

५२. b : M. सर्वपातकैः for नात्र संशयः.
५३. a : S. ०षु for तु.
c : S. A. तेनैवादिष्ट M. तेनैवाविष्ट for तेन प्रविष्ट०
५४, ५५. S. My. A. M. om. श्लोकद्वयम्.
५६. a : S. सूर्यलोके विभातिस्म, My. भासते वासुदेवस्तु.
५७. c : S. A. M. च for तु.
d : My. M. जप्तैर्लक्षैर्वशं भवेत्.
५८. b : V. सत्तम for पुङ्गव.
६०. a : A. M. V. जप्तैः for जपैः.
d : S. My. A. देवगर्भ इवापरः.

लक्षैर्मन्त्रस्य चाभ्यस्तैस्त्रयोदशभिरुत्तमम् ।
लोकं साङ्कर्षणं याति विद्यां विद्येश्वरो यथा ॥ ६१ ॥

चतुर्दशभिरभ्यस्तैः मन्त्रलक्षैस्तु तत्परम् ।
ज्ञानशक्तिकलाधारं शोकमोहविवर्जितम् ॥ ६२ ॥

वासुदेवपदं याति यद्गत्वा न निवर्तते ।
लीनस्तस्मिन् परे व्योम्नि तद्भावं सम्प्रपद्यते ॥ ६३ ॥

घृते घृतं जले तोयं क्षीरे क्षीरमिव स्थितम् ।
एतत् परं समुद्दिष्टं परमं ब्रह्म शाश्वतम् ॥ ६४ ॥

संसारभयनाशाय ज्ञानं ज्ञेयं च दुर्लभम् ।
अनन्तज्ञानमात्रेण न भूयः परिवर्तते ॥ ६५ ॥

(द्वादशाक्षरमन्त्राधिकारिविवेकः, मन्त्रविनियोगावसरश्च)

इदं तु ज्ञानसर्वस्वं सारभूतमनुत्तमम् ।
वाङ्मयस्यास्य सर्वस्य परतत्त्वं शिवं शुभम् ॥ ६६ ॥

शब्दब्रह्म परं विप्र वेदाद्यस्याधिकं तव ।
कथितं तु समासेन न देयं यस्य कस्यचित् ॥ ६७ ॥

तत्त्वरूपेण भगवान् वासुदेवोऽत्र संस्थितः ।
नासौ कामाय योक्तव्यः साधकेन विपश्चिता ॥ ६८ ॥

---

६१. c : My. V. सङ्कर्षणं for साङ्कर्षणं.
६३. b : S. My. M. V. यं for यद्.
c : S. लक्ष्ये for व्योम्नि.
d : V. सद्भावं सु० for तद्भावं सं०
६६. a : S. A. M. सर्वस्य for सर्वस्वम्.
d : S. My. A. परत्वं शिववत् शुभम्.
६७. b : S. वेद्याद्यस्यादिकं तव, My. वेदाद्यस्यादिकं तव, V. वेदव्यासादिगन्तव.
d : S. My. A. M. देयं यस्य न कस्यचित्.

कुरुते मोक्षहानिं तु नियुक्तो मन्त्रराडयम् ।
स्वल्पं हि जीवितं पुंसां भोगाश्चैव धनानि च ॥ ६९ ॥

तस्मान्मोक्षे नियुञ्जीत परतत्त्वं निरामयम् ।
इष्टेनानेन चेष्टं स्यात् तर्पितेन तु तर्पितम् ॥ ७० ॥

सर्वं वै देवतावृन्दं नात्र कार्या विचारणा ।
तस्माद्गृहान्नपानानि पुत्रबन्धुधनानि च ॥ ७१ ॥

स्वयमेव भविष्यन्ति साधकस्यास्य सर्वदा ।
न देयं दुष्टमतये न शठाय दुरात्मने ॥ ७२ ॥

कृतघ्नाय न दातव्यं न देवान्तरभक्तये ।
सुदीक्षिताय शिष्याय सर्वदाऽदुष्टबुद्धये ॥ ७३ ॥

देयमेतत् सुशान्ताय स्वशिष्यायामलात्मने ।
प्रत्यक्षे च परोक्षे च गुरुकर्मरताय च ॥ ७४ ॥

वैष्णवाय विशुद्धाय तथा चैकान्तिने सदा ।
जितेन्द्रियाय धीराय विष्णुयागरतात्मने ॥ ७५ ॥

---

६९. b : My. A. निरुक्ते for नियुक्तो, S. My. A. स्वयं for अयम्.
c : S. स्वल्पिभिः M. स्पर्धिभिः for स्वल्पं हि.

७०. a : My. मोक्षं for मोक्षे.
b : S. वरं for पर.
d : M. तर्जनेन तु तर्जनम्.

७१. c : M. गृहेन्न for गृहान्न.

७३. S. M. om.
c : V. अदीक्षिताय for सुदीक्षिताय.

७४. a ; b : S. M. om ;
b : V. शुद्धाय सकलात्मने.

७५. a : V. विशिष्टाय for विशुद्धाय.
b : S. My. A. तथैवे॰ for तथा चै॰, A. ॰ऽपिवा for सदा.
c : S. My. A. M. सुशिक्षिताय for जितेन्द्रियाय.

अकृतघ्नाय शुद्धाय वर्णाश्रमरताय च ।
सदाराधनसक्ताय तथा ज्ञानप्रदायिने ॥ ७६ ॥

गुरुभक्ताय दान्ताय होमकर्मरताय च ।
कामभोगविहीनाय सदा ध्यानपराय च ॥ ७७ ॥

(सङ्कर्षणमन्त्रोद्धारप्रकारः)

अथापरं प्रवक्ष्यामि मन्त्रं मुक्तिफलप्रदम् ।
पूर्वमन्त्रानुसारेण सप्तोद्धृत्याक्षराणि वै ॥ ७८ ॥

सङ्कर्षणाय तदनु समुद्धृत्य यथाविधि ।
आद्याद्द्वितीयबीजेन सम्पुटीकृत्य पूर्ववत् ॥ ७९ ॥

(सङ्कर्षणमन्त्रस्य अङ्गानि)

प्रणवं हृदयं विद्यात् द्वितीयं तु शिरो भवेत् ।
तृतीयं तु शिखा प्रोक्ता चतुर्थं कवचं भवेत् ॥ ८० ॥

अस्त्रं तु पञ्चमं वर्णं दृग्ज्ञेयं षष्ठमक्षरम् ।
उदरं सप्तमं ज्ञेयमष्टमं पृष्ठमेव च ॥ ८१ ॥

बाहूक्तं नवमं वर्णं दशमं चोरुसंज्ञकम् ॥
जानुन्येकादशं वर्णं द्वादशं पादसंज्ञितम् ॥ ८२ ॥

(सङ्कर्षणाङ्गमन्त्रस्वरूपादिः)

प्रणवाद्याः नमोन्ताश्च बीजान्ताः नामसंयुताः ।
अङ्गमन्त्रास्तु विज्ञेया मन्त्रस्यास्य महामुने ॥ ८३ ॥

---

७६. a : V. कृतहस्ताय for अकृतघ्नाय.
c : V. भक्ताय for सक्ताय.
d : A. सदा for तथा.
७७. c : S. कर्म० for काम०.
७८. a : S. My. A. महामन्त्रं for प्रवक्ष्यामि.
d : V. साधयेद० for सप्तोद्धृत्य.
८०. a : S. My. A. M. प्रथमं for प्रणवं.
८२. b : S. My. संज्ञितम् for संज्ञकम्.
८३. b : My. A. M. बीजान्ते for बीजान्ताः.

मूलमूर्तिसमास्सर्वे रूपेणास्त्रवरैस्तथा ।
तदाभास्तद्विशालाङ्गाः तद्वर्णास्तद्वदायुधाः ॥ ८४ ॥
सङ्कर्षणानुसारेण सर्वं कुर्याद्यथाक्रमम् ।

(सङ्कर्षणमन्त्रसाधनप्रकारः)

पूर्वोक्तेन विधानेन मन्त्रसाधनमुच्यते ॥ ८५ ॥
यादृशं चिन्तयेद्देवमात्मानं तादृशं स्मरेत् ।
जपेद्विंशतिलक्षांस्तु पूर्वसेवाविधौ स्थितः ॥ ८६ ॥
होमः पश्चाद्विधातव्यः अग्नौ लक्षद्वयं बुधैः ।
ततोऽस्य सिध्यते मन्त्रस्तिलाद्याहुतिभिर्मुने ॥ ८७ ॥
तिलाज्यैः कुसुमैः रक्तैस्तथा लवणचम्पकैः ।
हुतैः सौभाग्यमतुलं जायतेऽस्य न संशयः ॥ ८८ ॥
यथा यथा च जपते ध्यानं च कुरुते यथा ।
तथा तथा समायान्ति दिव्यास्तु सुरयोषितः ॥ ८९ ॥
अभिद्रवन्ति कामार्ता निपतन्ति च विग्रहे ।
साधकस्य भयं त्यक्त्वा निर्लज्जाः स्मरगर्विताः ॥ ९० ॥
मुक्तकेशाः विवस्त्राश्च याचमानास्तु साधकम् ।
त्वाह्यस्मान् साधकवर भज दत्ताः स्म विष्णुना ॥ ९१ ॥

---

८४. c : A. तदङ्गास्तद्विशालाङ्गाः, V. तद्दशाङ्गविशालाङ्गाः.
८८. a : S. My. A. सम्पाद्य for तिलाज्यैः, A. अर्कैः for रक्तैः.
c : A. हुते for हुतैः.
d : My. स्यात् for अस्य.
८९. a : S. कुरुते for जपते.
b : My. M. तथा for यथा.
९०. a : S. My. A. कर्मणि for कामार्ता.
b : S. My. A. चिन्तयन्ति for निपतन्ति.
d : S. A. M. सुर for स्मर.
९१. b : My. M. च for तु.

पादयोः पतिताः सर्वाः यदि त्वं न प्रपद्यसे ।
अग्रतस्तेन तान् प्राणान् परित्यक्ष्याम विह्वलाः ॥ ९२ ॥

यदि न क्षोभमायाति दृष्ट्वा ताः दिव्ययोषितः ।
तदास्य चोत्तमा सिद्धिर्भविष्यति न संशयः ॥ ९३ ॥

जप्तैस्तु दशभिर्लक्षैः सिद्धिस्तु त्रिविधा भवेत् ।
पातालाकाशगामित्वमन्तर्धानं च सुव्रत ॥ ९४ ॥

प्राप्नुयात् साधकवरो यदि न क्षुभितं मनः ।
श्रीफलानां तु लक्षेण हुतं तेन हुताशने ॥ ९५ ॥

महतीं श्रियमाप्नोति शक्रराज्यसमां मुने ।
न तदस्ति फलं लोके न सा सिद्धिर्दिवौकसाम् ॥ ९६ ॥

प्राप्यते साधकैर्होमात् पद्मगुग्गुलसर्पिषा ।
पद्माक्षमयुतं हुत्वा समिद्धेऽग्नौ तु साधकः ॥ ९७ ॥

सार्वभौमं महद्राज्यं स लभेत न संशयः ।
अस्य मन्त्रस्य माहात्म्यं कः शक्नोत्यभिवर्णितुम् ॥ ९८ ॥

येनैषा धार्यते सर्वा सप्तद्वीपा वसुन्धरा ।
सामराः सासुरा दिव्या ऋषिसिद्धसमन्विताः ॥ ९९ ॥

---

९२. b : S. My. A. M. परित्यक्ताः स्म विह्वलाः.
c ; d : S. My. A. M. om.
९३. c : S. My. A. M. सा for च.
९४. b : V. सा सिद्धिः for सिद्धिस्तु.
d : S. My A. ॰ध्यानं for ॰धानं.
९५. a : S. My. A. स यस्मात् for प्राप्नुयात्.
९६. a ; b : S. My. A. M. om.
c : M. तदन्तं for तदस्ति.
९७. c : V. पद्मानां for पद्माक्षं.
d : S. My. A. समिद्धोमे for समिद्धेऽग्नौ.
९८. d : M. न for कः.
९९. c : My. वासुरा for सासुरा.
d : A. सिद्धि for सिद्ध.

यद्दुर्लभं यच्च दूरमदूरं यच्च दुष्करम् ।
तत्सर्वं प्राप्नुयान्मन्त्री जप्त्वा सङ्कर्षणं मनुम् ॥ १०० ॥

(प्रद्युम्नमन्त्रोद्धारप्रकारः)

अतः परं प्रवक्ष्यामि मन्त्रं सिद्धिप्रदं सदा ।
पूर्वमन्त्रानुसारेण सप्तोद्धृत्याक्षराणि तु ॥ १०१ ॥
प्रद्युम्नायेति तदनु समुद्धृत्य यथाविधि ।

(प्रद्युम्नमन्त्रस्य अङ्गानि)

आद्यात्षोडशपूर्वेण सम्पुटीकृत्य पूर्ववत् ॥ १०२ ॥
प्रणवं हृदयं विद्यात् द्वितीयं तु शिरो भवेत् ।
तृतीयं तु शिखा ज्ञेया चतुर्थं कवचं भवेत् ॥ १०३ ॥
अस्त्रं तु पञ्चमं बीजं दृग्ज्ञेयं षष्ठमक्षरम् ।
उदरं सप्तमं ज्ञेयम् अष्टमं पृष्ठमेव च ॥ १०४ ॥
बाहूक्तं नवमं वर्णं दशमं चोरुसंज्ञितम् ।
जान्वेकादशं वर्णं पूर्ववत्परिकल्पयेत् ॥ १०५ ॥
एकादशाङ्गमन्त्रोऽयं भुक्तिमुक्तिफलप्रदः ।

(प्रद्युम्नमन्त्राङ्गदेवतास्वरूपादिः)

प्रद्युम्नस्य तु चाङ्गेन विज्ञेयास्त्वङ्गदेवताः ॥ १०६ ॥
प्रद्युम्नस्य च यद्वर्णं लक्षणं त्वायुधानि च ।
तद्वत्सर्वास्तु विज्ञेयाः सर्वविघ्नप्रशान्तिदाः ॥ १०७ ॥

---

१००. b : S. A. V. यद्दूरं for अदूरम्.
d : S. My. प्रभुम् A. विभुम् for मनुम्.
१०१. b : S. V. तदा for सदा.
१०२. c : V. सम्पूर्वे for पूर्वेण
१०३. a : S. विन्द्यात् for विद्यात्.
१०५. a : V. ज्ञेयं for वर्णं.
१०६. c : V. दशाङ्गेन for तु चाङ्गेन.
१०७. b : S. My. A. वायुधानि for त्वायुधानि.
d : S. प्रदर्शिता for प्रशान्तिदाः.

(प्रद्युम्नमन्त्रसाधनप्रकारः फलञ्च)

पूर्वोक्तेन विधानेन मन्त्रं संसाध्य यत्नतः ।
द्विसप्तलक्षान् मन्त्रस्य जप्त्वासौ साधकोत्तमः ॥ १०८॥
सिद्धस्तु नात्र सन्देहः पूर्वसेवाविधौ स्थितः ।
हुतैस्तु पीतकुसुमैराज्याक्तैरयुतैः शुभैः ॥ १०९ ॥
सिद्ध्यते चिन्तितं सर्वं यद्यत्प्रत्यक्षतां व्रजेत् ।
नास्मान्मन्त्रवरः कश्चित् सर्ववाञ्छितदायकः ॥ ११०॥
अस्य प्रसादादाप्नोति प्रद्युम्नाख्यं परं पदम् ।

(अनिरुद्धमन्त्रोद्धारप्रकारः)

अनिरुद्धस्य वक्ष्यामि मन्त्रं गुह्यतमं हितम् ॥ १११ ॥
पुर्वमन्त्रानुसारेण सप्तोद्धृत्याक्षराणि वै ।
अनिरुद्धाय तदनु मन्त्रः सर्वार्थसाधकः ॥ ११२ ॥

(अनिरुद्धमन्त्राङ्गनिर्देशः)

प्रणवं हृदयं विद्यात् द्वितीयं तु शिरो भवेत् ।
तृतीयं तु शिखा ज्ञेया चतुर्थं कवचं भवेत् ॥ ११३ ॥
अस्त्रं तु पञ्चमं बीजं षष्ठं दृग्संज्ञकं भवेत् ।
उदरं सप्तमं ज्ञेयम् अष्टमं पृष्ठमेव च ॥ ११४ ॥
बाहूक्तं नवमं वर्णं दशमं चोरुसंज्ञितम् ।
जानुन्येकादशं वर्णं द्वादशं पादसंज्ञितम् ॥ ११५ ॥

(अनिरुद्धमन्त्राङ्गमन्त्रनिर्देशः)

प्रणवाद्या नमोन्ताश्च बीजनामसमन्विताः ।
हृदयाद्यास्तु विज्ञेयाः मन्त्राः सर्वसुखप्रदाः ॥ ११६ ॥

---

१०८. b : S. संसादयेत्ततः M. सम्पाद्य यत्नतः for संसाध्य यत्नतः.
c : S. M. अष्ट for सप्त.
१०९. a : S. A. सिद्धस्ते० My. V. सिध्यते for सिद्धस्तु.
b : S. My. A. ०वद्धि for सेवा.
११०. a : V. तस्मान्मन्त्रात्किञ्चित्.
११३. a : S. विन्द्यात् for विद्यात्.

(अनिरुद्धाङ्गमन्त्रस्वरूपकथनम्)

अनिरुद्धो यथा तद्वत् एते सर्वे प्रकीर्तिताः ।
अनिरुद्धाद्दशांशेन पृथुलाकृतिकान्तयः ॥ ११७ ॥

(अनिरुद्धमन्त्रसाधनप्रकारः)

पूर्ववत्पूर्वसेवास्य कीर्तिता मुनिसत्तम ।
ध्यात्वा देवं तथा मन्त्री जपेल्लक्षांस्तु षोडश ॥ ११८ ॥
ततोऽस्य सिध्यते मन्त्रः साधकस्य न संशयः ।
सप्तलोकाधिपत्यं च कामञ्चैव तु पुष्कलम् ॥ ११९ ॥
साधयेत्साधकः क्षिप्रं मन्त्रं तन्मयतां गतः ।
क्रुद्धस्तु जपते मन्त्री क्रूरभूतालये यदि ॥ १२० ॥
तदा चालयते मन्त्री भूतग्रामं चतुर्विधम् ।
जपते शुष्कवृक्षस्थः ऊर्ध्वास्यो यदि साधकः ॥ १२१ ॥
उच्चाटयेत् तदा सर्वं त्रैलोक्यं नात्र संशयः ।
घृताहुतिसहस्रेण हुतेनाष्टाधिकेन तु ॥ १२२ ॥
शान्तिं करोति विप्रेन्द्र शान्तचित्तस्तु साधकः ।

(अध्यायोपसंहारः)

वासुदेवादिमूर्तीनामेवमुक्तास्तु मन्त्रकाः ॥ १२३ ॥
चत्वारः प्रथिताः पुण्याः भुक्तिमुक्तिप्रदायकाः ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
चतुर्मूर्तिलक्षणविधानो नाम तृतीयोऽध्यायः ॥

---

११७. c : S. My. A. M. अनिरुद्धस्य चांशेन.
११८. c : S. My. A. ततो for तथा, S. V. M. मन्त्रं for मन्त्री.
d : A. लक्षाणि for लक्षांस्तु.
११९. a : S. My. M. अतः for ततः.
१२०. a : S. साधयेत् for साधकः.
b : S. My. A. M. अद्वयतां for तन्मयतां.
c : My. सतु for तु, S. My. A. M. जपेन्मन्त्रं for जपते मन्त्री.

# चतुर्थोऽध्यायः

## [द्वादशमासाधिपमूर्तिमन्त्रलक्षणाध्यायः]

(मासाधिपमन्त्राणां सामान्यतः लक्षणम्)

अथ विष्ण्वादिमूर्तीनां द्वादशानां तु मन्त्रपान् ।
श्रृणुष्व गदतो विप्र समासाद्द्वादशक्रमात् ॥ १ ॥

द्वादशाक्षरमन्त्रस्य यानि बीजानि तानि वै ।
मासाधिपानां बीजानि विष्ण्वादीनामनुक्रमात् ॥ २ ॥

आदौ प्रणवमाहृत्य प्रणवान्ते तु बीजराट् ।
बीजान्ते तु नमस्कारः तदन्ते नामकीर्तनम् ॥ ३ ॥

स्वाहान्तमेव मन्त्राणां मासपानां तु लक्षणम् ।
एषां द्वादशमन्त्राणां पूर्ववत्साधनक्रमः ॥ ४ ॥

(निष्कामेन साधकेन प्रथममासाधिपस्य मन्त्रसाधनप्रकारः,
तस्य फलञ्च)

विशेषमत्र वक्ष्यामि प्रतिमन्त्रं द्विजोत्तम ।
तथा विंशतिलक्षे तु जप्ते मासेशमन्त्रके ॥ ५ ॥

---

प्रारंभे—'A. शुभमस्तु, अथ नारदीयसंहिता, M. श्रीरस्तु, S. श्रीः' इत्यधिकः। प्रथमश्लोकात् पूर्वं V. कोषं विहाय सर्वेष्वपि कोषेषु 'गौतमः' इति पाठः। प्रसङ्गविमर्शानन्तरं तदप्रासंगिकमेव प्रतिभाति। V. कोषस्थः पाठः समीचीनः।

१. b : S. मूर्तिवान् for मन्त्रपान्,
 c : S. My. M. वदतो for गदतो.
३. a : V. My. तु प्रणवं गृह्य for प्रणवमाहृत्य.
४. a : A. एवं for एव.
 b : S. मानसानन्तु for मासपानां तु.
 c : V. एष for एषां.
 d : My. A. M. साधनं क्रमात् for साधनक्रमः.
५. d : My. A. M. मन्त्रपे for मन्त्रके.

दशांशेन ततो होमं विधायाज्यतिलैर्द्विज ।
पूर्वसेवा भवेच्चीर्णा साधकेन विपश्चिता ॥ ६ ॥

सप्तलोकेषु यन्मन्त्री सुखमिच्छेन्महात्मनः ।
तद्योग्यत्वं व्रजत्याशु जपध्यानरतस्य वै ॥ ७ ॥

यत्सिसाधयिषुर्विद्वान् मासेशाख्यं समभ्यसेत् ।
तत्तस्य सिध्यते क्षिप्रं भक्तियुक्तो भवेद्यदि ॥ ८ ॥

यथा यथा तु जपते मन्त्री ध्यानपरायणः ।
तथा तथा समायान्ति योषितो मदनोत्कटाः ॥ ९ ॥

तत्र देशनिवासिन्यः कामविह्वलचेतसः ।
मन्त्रिणं क्षोभयन्त्याशु हठादागत्य सर्वतः ॥ १० ॥

यदि न क्षोभमायाति साधको मन्त्रतन्मनः (मन्त्रवित्तमः)।
तदा राज्ञां स्त्रियोऽभ्येत्य क्षोभयन्ति स्म साधकम् ॥ ११ ॥

अभियुक्तोऽपि यद्येषः स्त्रीभिः क्षोभं न गच्छति ।
न क्षुभ्यति मनस्तस्य दिव्यस्त्रीदर्शनाद्यदि ॥ १२ ॥

तदा मन्त्रोऽस्य विशते शरीरे साधकस्य तु ।
देहस्थेन तु मन्त्रेण भवेत्सर्वाधिको भुवि ॥ १३ ॥

अणिमादिगुणैर्युक्तो मन्त्री विष्णुरिवापरः ।
निष्कामो जपते मन्त्रं यद्येवं साधकस्ततः ॥ १४ ॥

---

६. a : M. तथा for ततो.
c : My. पूर्वस्वो भवेद्धिर्णा, A. पूर्वा सेवा भवेश्चिर्णा, V. शीर्णा for चीर्णा.
७. d : A. रतस्स My. रतः for रतस्य.
१०. c : S. मन्त्रेण for मन्त्रिणं.
d : S. भयात् for हठात्.
१२. a : A. आभिः for एषः.
१३. a : M. ततो for तदा.
d : S. M. भवेत् for भुवि.
१४. a : M. गणैः for गुणैः.

अनिरुद्धपदादूर्ध्वं विश्वात्मनि लयं व्रजेत् ।
उक्तो विधिरकामस्य

(सकामेन साधकेन प्रथममासाधिपस्य मन्त्रसाधनप्रकारः,
तस्य फलं च)

सकामस्याधुनोच्यते ॥ १५ ॥

पूर्वसेवाविहीनोऽपि होमार्चनविधौ स्थितः ।
करोत्यनेन कर्माणि विष्णोराद्यस्य मन्त्रवित् ॥ १६ ॥

यक्षिणी किन्नरी नारी देवयोषाथ मानुषी ।
षट्पञ्चसप्तसप्तैकमासतः किङ्करी भवेत् ॥ १७ ॥

सपल्लवं तु योगेन सम्पुटेनाथवा मुने ।
साध्यं साधयते मन्त्री मन्त्रजातिविभेदवित् ॥ १८ ॥

[दिव्यस्त्रीरूपकं लिख्य रोचनालक्तकेन तु ।
शुभे भूमितले नाम संलिख्योपरि साधकः ॥ १९ ॥

आक्रम्य वामपाणिं तु लिखेत् समयतां गतः ।
जपेत्सिद्धमुखो[भू]त्वा ? प्रयोगेण तु मन्त्रवित् ॥ २० ॥

मन्त्राद्यन्तगतं नाम कृत्वान्ते वशमेव च ।
त्रिसन्ध्यं च जपेन्मन्त्री विद्यासक्तसमाहितः ॥ २१ ॥

कृतापादेन संकु(क्रु ?) द्धस्तत
आकर्षयेद् ध्रु (भु ?) वम् ।
करेक्तै राम(रक्तैराराम ?)'कुसुमै-
स्तामयेद्वादिमन्त्रि (न्त्र ?)तः ॥ २२ ॥

---

१६. d : S. V. मन्त्रपम् My. मन्त्रपः for मन्त्रवित्.
१७. a : My. यक्षकिन्नरनारी तु, A. यक्षणी नर नारी.
c : S. My. A. M. पञ्चसप्तैक for सप्तसप्तैक.
d : S. My. A. M. मासात्तत् for मासतः.
१९. a : S. My. A. M. om. verses 19–29.

मन्त्रयेष्टादशेनाथ ? (मन्त्रये-
दष्टादशेन ?) ततः क्षिप्रं वशं नयेत् ।
प्रियङ्गुकुसुमैश्शुद्धैराहुत्यष्टशतेन तु ॥ २३ ॥

त्रिसन्ध्यं सप्तरात्रेण कन्यां प्राप्नोति वाञ्छिताम् ।
शयनस्थोऽथवा मन्त्रं ध्यात्वा मनसि कन्यकाम् ॥ २४ ॥

शनैरावर्तयेन्मन्त्रं या पदव्याधिकासनम् ? ।
तावन्मूढा (मुग्धा ?) समायाति द्रुतं मन्त्रविमोहिता ॥

पादयोः पतति शीघ्रं मदोन्मत्तातिविह्वला ।
अनेनैव प्रयोगेण गजेन्द्रमतिगर्वितम् ॥ २६ ॥

वशमानयते शीघ्रं मन्त्री मन्त्रमयो यदि ।
निधिकामोऽथवा मन्त्री निधिस्थाने तु मन्त्रपम् ॥ २७ ॥

जप्त्वा नियुतमेकं तु श्रीफलैर्होममाचरेत् ।
ततस्त्वयुतहोमेन निधीनामधिपो भवेत् ॥ २८ ॥

अथवा ध्यानयोगेन शङ्खपद्मनिधी अपि ।
आनयेत्साधकः क्षिप्रं प्रयोगेणाथवा मुने ॥ २९ ॥]

(द्वितीयमासेशस्य (मधुसूदनस्य) मन्त्रसाधनप्रकारः)

मासेशस्य द्वितीयस्य साधनं शृणु सुव्रत ।
एकोनविंशलक्षैस्तु जपैर्होमदशांशतः ॥ ३० ॥

ततस्तु साध्यते मन्त्रो ब्रह्मघ्नस्याप्यसंशयः ।
तदन्ते वाञ्छितं सर्वं साधकस्य भवेच्छुभम् ॥ ३१ ॥

---

३०. c : M. लक्षेण for लक्षैस्तु.
d : My. स्तोत्रैः S. A. M. होमैः for होम०, M. अंशकम् for अंशतः.

३१. b : My. ब्रह्मघ्नं वा० for ब्रह्मघ्नस्या०
c : My. व्रतान्ते वा स्थितं for तदन्ते वाञ्छितं

दूर्वाहुतिसहस्रेण हुतेनाष्टाधिकेन तु ।
पयोघृतविमिश्रेण जीवेद्वर्षशतत्रयम् ॥ ३२ ॥

कुशाहुतीनामयुतं हुत्वा दीप्ते हुताशने ॥
लभते साधकः क्षिप्रमधिकं ब्रह्मवर्चसम् ॥ ३३ ॥

(तृतीयमासाधिपस्य (त्रिविक्रमस्य) मन्त्रसाधनप्रकारः)

तृतीयस्याधुना वक्ष्ये लक्षैरष्टादशैर्द्विज ।
जपैस्तु सिध्यते मन्त्रैर्होमैश्चैव दशांशतः ॥ ३४ ॥

कन्यालाभेऽर्थलाभे च वाञ्छितस्य तु सिद्धये ।
यानि यानि च कर्माणि मनसा वाञ्छितानि च ॥ ३५॥

सिध्यन्ते तानि सर्वाणि नात्र कार्या विचारणा ।
यक्षिणीसाधने मन्त्रं जपन्न्यग्रोधमाश्रितः ॥ ३६ ॥

ब्रह्मचारी विशुद्धात्मा पयोयावकभुक् शुचिः ।
मन्त्रं व्रतविशुद्धश्च लक्षमेकं जपेत्ततः ॥ ३७ ॥

समिधो वटवृक्षस्य जुहुयात्त्वयुतं पुनः ।
एवं तु विधिना कर्म यावत्परिसमाप्यते ॥ ३८ ॥

यक्षिणी तावदायाति सर्वालङ्कारभूषिता ।
सा चेष्टकामदा भूत्वा साधकस्य हृदि स्थिता ॥ ३९ ॥

ज्ञात्वा भावं भजेत्सर्वं सर्वभावेन साधकम् ।
माता वा भगिनी वापि भार्या वाथ स्नुषापि वा ॥ ४०॥

---

३२. b. My. अभ्याधिक for अष्टाधिके०.
d : S. V. M. जपेत् for जीवेत्.

३५. a : My. A. M. अलाभे for अर्थलाभे, S. ०षु for च.
b : S. My. A. M. च for तु.

३७. a : V. ब्रह्मद्युतिः for ब्रह्मचारी.
c : My. व्रती for व्रत०.
d : S. M. अलक्षितः for जपेत्ततः.

३८. d : S. तद्धि for परि०.

४०. a : S. My. A. आज्ञा for ज्ञात्वा, My. व्रजेत् for भजेत्.

भूत्वा भावेन सा तस्य परमिष्टं प्रयच्छति ।

(चतुर्थमासाधिपस्य (वामनस्य) मन्त्रसाधनादिविधिः)

चतुर्थस्याथ वक्ष्यामि साधनं मन्त्रपस्य तु ॥ ४१ ॥

सप्तविंशतिलक्षैस्तु जपैर्होमैर्दशांशतः ।
तिलैर्घृतेन बीजैर्वा यथावित्तानुसारतः ॥ ४२ ॥

कन्यां सुलक्षणोपेतां तथैवाजिनपादुकौ ।
रसं रसायनं चैवमौषधानि महान्ति च ॥ ४३ ॥

ददाति जपसामर्थ्यादिष्टाधिकशतेन तु ।

(पञ्चममासाधिपस्य (श्रीधरस्य) मन्त्रसाधनादिप्रकारः)

पञ्चमस्य तु मन्त्रस्य मासेशाख्यस्य साधनम् ॥ ४४ ॥

शृणु विप्र यथान्यायं सर्वसिद्धिकरं शुभम् ।
लक्षैः षोडशभिर्जप्तैः होमैश्चैव दशांशतः ॥ ४५ ॥

सिध्यते नात्र सन्देहो वैष्णवो यदि तत्त्वतः ।
वस्त्राणि पद्मपत्रैस्तु कनकैः कनकं लभेत् ॥ ४६ ॥

कन्यापुष्पैस्तु कन्याश्च नन्द्यावर्तैर्महद्वसु ।
कमलैरिष्टकामांस्तु सर्वं रक्तोत्पलैर्नवैः ॥ ४७ ॥

हुतैरेतैस्तु विधिना सर्वान् कामानवाप्नुयात् ।

---

४१. b : My. A. M. वरम् for परम्.
 d : M. ०वन्न्यसेत् for ०पस्य तु.

४२. b : S. My. A. M. कृतैः for जपैः, My. स्तोमैः for होमैः.
 c : My. घृतैश्च for घृतेन
 d : S. My. A. होमं for यथा.

४३. b : S. V. M. तथैवाञ्जन पादुकां

४५. c : S. बीजैर्वा for ०भिर्जप्तैः.

४६. b : S. V. सत्वतः for तत्त्वतः.

४७. b : A. नद्या० for नन्द्या०.

४८. a : My. A. विविधान for विधिना.

(षष्ठमासाधिपस्य (हृषीकेशस्य) मन्त्रसाधनादिप्रकारः)

षष्ठस्यास्य तु वक्ष्यामि मासेशस्य तु साधनम् ॥ ४८ ॥

लक्षैस्तु पञ्चदशभिः जपैर्होमैर्दशांशतः ।
अस्य मन्त्रस्य दिव्यानि कर्माणि च बहूनि च ॥ ४९ ॥

सर्वधान्यस्य होमेन सर्वधान्यं लभेद्वशी ।
पायसस्य तु होमेन बहुशो धनमाप्नुयात् ॥ ५० ॥

कुन्दपुष्पैस्ततो हुत्वा सर्वान् कामानवाप्नुयात् ।
अनेन मन्त्रराजेन सर्वान् कामान् समश्नुते ॥ ५१ ॥

(सप्तममासाधिपस्य (पद्मनाभस्य) मन्त्रसाधनादिकम्)

सप्तमस्य तु मन्त्रस्य मासेशाख्यस्य साधनम् ।
वक्ष्ये शृणुष्व विप्रेन्द्र साधनं सर्वकामदम् ॥ ५२ ॥

यदा जपेद्व्रती मन्त्रं लक्षाणां तु चतुर्दश ।
होमयेच्च दशांशेन तदा मन्त्रस्य साधनम् ॥ ५३ ॥

साधिते मन्त्रराजेऽस्मिन् सर्वं वै साधितं भवेत् ।
बकुलानां तु होमेन घृताक्तानां महामते ॥ ५४ ॥

---

४८. d : My. शासनं for साधनम्.
४९. b : A. M. My. V. जप्तैः for जपैः.
d : S. My. A. M. सुबहून्यपि for च बहूनि च.
५०. d : My. A. बहुगो० for बहुशो०.
५१. a ; b ; c ; d : S. My. A. M. om.
५२. b : My. शासनं for साधनम्.
d : S. A. V. M. सिद्धिदम् for कामदम्.
५३. a : My. A. मन्त्री for मन्त्रं.
b. S. My. A. लक्षाणिच for लक्षाणां तु.
c : M. होमंय० for होमये०, My. ०द्वा for ०च्च.

श्रेयः सम्प्राप्नुयात् क्षिप्रं भगवज्ज्ञानमुत्तमम् ।
पूज्यते सर्वभूतैस्तु मनुष्यैस्तु विशेषतः ॥ ५५ ॥

सेव्यते रहसि स्त्रीभिर्मदविह्वलदृष्टिभिः ।
राजपूजां समाप्नोति राजयोषित्पतिर्भवेत् ॥ ५६ ॥

देवानामसुराणां च यक्षाणां रक्षसामपि ।
स्त्रीभिः संसेव्यते नित्यं मन्त्रस्यास्य प्रभावतः ॥ ५७ ॥

(अष्टममासेशस्य (दामोदरस्य) मन्त्रसाधनादिकम्)

मासेशस्याष्टमस्यास्य मन्त्रसाधनमुच्यते ।
जपैस्तु त्रिदशैर्लक्षैः कृतैर्होमैर्दशांशतः ॥ ५८ ॥

पूर्वसेवास्य मन्त्रस्य कृता भवति साधकैः ।
अणिमादिकमैश्वर्यं सिद्धयोऽस्य भवन्ति हि ॥ ५९ ॥

श्रीफलाहुतिलक्षैस्तु पञ्चभिस्तु हुतैर्द्विज ।
लोकत्रयाधिपत्यं च लभते नात्र संशयः ॥ ६० ॥

अपामार्गसमिद्भिस्तु नित्यहोमेन साधकः ।
महदारोग्यमाप्नोति तेजोद्युतिसमन्वितः ॥ ६१ ॥

श्यामाकतिलनीवारव्रीहिशालियवैस्तथा ।
सर्वान् कामानवाप्नोति पयसा गोधनं बहु ॥ ६२ ॥

---

५५. a : S. प्रार्थयेत् for प्राप्नुयात्.
d : S. A. M. मानुषैः for मनुष्यैः.
५६. b : S. मधु० for मद०
५७. a : S. M. तु for च.
५८. b : S. My. A. M. उत्तमम् for उच्यते.
c : S. A. M. जपैस्त्रिदशलक्षैस्तु My. मन्त्रैस्त्रैदशलक्षैस्तु.
d : S. My. जपैः A. M. हुतैः for कृतैः, M. होतुः for होमैः.
५९. b : S. A. साधने M. साधके for साधकैः.
६१. b : S. सत्य for नित्य.
d. S. My. A. M. द्विज for द्युति.

मन्त्रेणानेन शक्यार्थमाषाढे पूर्वफाल्गुने ।
सक्तून् सम्मन्त्रितान् नद्यां
क्षिपेत् काननपर्वतम् (ते?) ॥ ६३ ॥

अनेन शत्रवो नाशं यान्ति राज्ञां विशेषतः ।
निवेद्य केवलान् सक्तून् वासुदेवाय तद्दिने ॥ ६४ ॥

सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।

(नवममासाधिपस्य (केशवस्य) मन्त्रसाधनादिकम्)

साधनं नवमस्यास्य वक्ष्यामि शृणु सुव्रत ॥ ६५ ॥

लक्षैर्द्वादशभिर्जप्तैर्होमैश्चैव दशांशतः ।
पूर्वसेवा कृता च स्यात्ततो मन्त्री सुखं लभेत् ॥ ६६ ॥

नन्द्यावर्तैस्तु जुहुयात् लक्षमेकं सुसंयतः ।
सर्वसम्पदमाप्नोति दीर्घमायुष्यमेव च ॥ ६७ ॥

अप्सरोभिः सह वसेत् किन्नरीभिश्च सर्वदा ।
आकाशगमनं चैव पातालगमनं तथा ॥ ६८ ॥

सर्वलोकेषु गमनं सर्वदुर्गेषु वा मुने ।
जपैश्शतसहस्रैस्तु सर्वानन्यान् समाप्नुयात् ॥ ६९ ॥

---

६३. a : M. शक्त्यार्थान् A. सत्युत्था V. माल्यार्था for शक्यार्थम्.
b : M. V. आषाढे for ॰माषाढे.
d. S. काननंततः V. कृतिगाततः for काननपर्वतम्.

६४. a : M. अधनिनश्शत्रुनाशार्थं.
b : M. फलाहुतिविशेषतः.

६६. c : S. चास्य for च स्यात्.
d : S. My. V. M. सुतं for सुखं.

६७. b : S. My. A. ॰युतम् for ॰यतः.
c ; d : S. M. सर्वलोकेषु गमनं सर्वदुर्गेषु वा मुने.

६९. c : M. जप्तैः for जपैः.
d : S. सर्वास्सद्यः My. A. M. सर्वान् सद्यः for सर्वानन्यान्.

अस्य मन्त्रस्य माहात्म्यं वक्तुं वर्षशतैरपि ।
बृहस्पतिर्वा ब्रह्मा वा न समर्थो द्विजोत्तम ॥ ७० ॥

(दशममासेशस्य (नारायणस्य) मन्त्रसाधनादिकम्)

दशमस्य प्रवक्ष्यामि साधनं सर्वसिद्धिदम् ।
जपैरेकादशैर्लक्षैर्घृतहोमैर्दशांशतः ॥ ७१ ॥

साधितस्तु भवेन्मन्त्रः सर्वसम्पत्समृद्धिदः ।
विविधान्यस्य कर्माणि वक्ष्यामि हितकाम्यया ॥ ७२ ॥

कोटिहोमैस्तिलैः सर्वं स्थावरं जङ्गमं जयेत् ।
भूम्यन्तरिक्षस्वर्गस्थं सदेवासुरमानुषम् ॥ ७३ ॥

तिष्ठत्यस्य वशे नित्यं वैष्णवश्चेद्यथार्थतः ।
सहस्रजपसंख्यातैः सहस्राणि लभेन्नरः ॥ ७४ ॥

आकाशे वा हुताशे वा जले वापि महामुने ।
गच्छन्न बाधां प्राप्नोति देववत् विचरेत् सदा ॥ ७५ ॥

मनसा चिन्तितं यद्यत् तत्तत्सर्वं समाप्नुयात् ।
निधानं कन्यकाश्चापि राजानं मन्त्रिणं तु वा ॥ ७६ ॥

आनयेत्स्ववशं मन्त्री मन्त्रस्यास्य प्रभावतः ।
अक्षिरोगादिकं सर्वं दृष्टं स्पृष्टं च मन्त्रिणा ॥ ७७ ॥
तत्सर्वं नाशमाप्नोति यदि शास्त्रार्थतत्त्ववित् ।

---

७०. d : My. om. न.
७१. c : A. My. V. जप्तैः for जपैः.
७२. a : M. ०स्तूभयैर्मन्त्रः for ०स्तु भवेन्मन्त्रः.
७३. b : S. My. A. च यत् for जयेत्.
७४. b : S. M. ०द्यवर्धितः for ०द्यथार्थतः.
७५. c : My. S. A. M. बाधं for बाधां.
७६. b : S. My. A. M. तत्सर्वं समवाप्नुयात्.
७७. d : S. सृष्टं My. सूक्ष्मं for स्पृष्टं, My. मन्त्रिणम् for मन्त्रिणा.

(एकादशमासाधिपस्य (माधवस्य) मन्त्रसाधनादिकम्)

एकादशस्य वक्ष्यामि मासेशस्येश्वरस्य तु ॥ ७८ ॥
जपैर्लक्षैस्तु दशभिः होमैस्तस्य दशांशतः ।
सिध्यते नात्र संदेहः साधकस्य महात्मनः ॥ ७९ ॥
ततस्सर्वमवाप्नोति देवदेवप्रभावतः ।
अपामार्गसमिद्भिस्तु लभेदायुष्यमुत्तमम् ॥ ८० ॥
महदारोग्यमाप्नोति महतीं श्रियमवाप्नुयात् ।
ततः सर्वमवाप्नोति यद्यपि स्यात्सुदुर्लभम् ॥ ८१ ॥
क्षीरेणाज्येन जहुयात् तिलैर्वा यवमाषकैः ।
कृते होमे तदाप्नोति दिव्यं पातालगं तु वा ॥ ८२ ॥
औदुम्बरसमिद्भिस्तु दीर्घायुष्यमवाप्नुयात् ।
यानं वाग्निं तथाकाशं जलं वा स्तम्भयेद्द्विज ॥ ८३ ॥
जपैः सहस्रसंख्यैस्तु वैष्णवश्चेद्द्विजोत्तम ।
देवदेवप्रसादेन सर्वान् कामानवाप्नुयात् ॥ ८४ ॥

---

७८. d : S. ०स्य परस्य for ०स्येश्वरस्य.
७९. a : A. M. My. V. जप्तैः for जपैः.
८०. a ; b : S. My. A. om.
c ; d : S. M. om.
८१. b : S. M. om. My. महितां for महतीं.
c : S. सर्वं समाप्नोति for सर्वमवाप्नोति.
d : My A. देवदेवप्रभावतः.
८२. b : S. तिलैर्वर्ग मारजैः, My. A. तिलैर्वगयमारजैः.
८३. a : S. My. A. औदुम्बरैः for औदुम्बर०.
b : S. My. A. दीर्घमायुष्यमाप्नुयात्.
c : S. A. धनं M. वनं for यानं.
c ; d : V. om.
८४. b : A. M. वैष्णवैः for वैष्णवः, S. A. M. विशेषतः for द्विजोत्तम.
b ; c ; d : V. om.

देवगन्धर्वनार्यस्तु यक्षकिंपुरुषाङ्गनाः ।
वशमायान्ति ताः सर्वाः किं पुनः मानुषस्त्रियः ॥ ८५ ॥

(द्वादशमासाधिपस्य (गोविन्दस्य) मन्त्रसाधनादिकम्)

द्वादशस्य तु वक्ष्यामि साधनं मासपस्य तु ।
लक्षैस्तु नवभिर्जप्तैः होमैश्चैव दशांशतः ॥ ८६ ॥
सिद्धो भवति मन्त्रोऽयं भक्तो यदि हरेर्द्विज ।
अणिमादिकमैश्वर्यं सिद्धयोऽस्य भवन्ति हि ॥ ८७ ॥
हुतैराम्रफलैर्मन्त्री श्रियमाप्नोति साधकः ।
बिल्वपत्रैस्तथाम्रैश्च तुलसीभिस्तथैव च ॥ ८८ ॥
सर्वलोकाधिपत्यं च सम्प्राप्नोति महामुने ।
व्रीहिनीवारमुद्गैश्च कृते होमे सहस्रशः ॥ ८९ ॥
इष्टां कन्यामवाप्नोति यदि राज्ञः सुतामपि ।
अस्य मन्त्रस्य कर्माणि वक्तुं कः शक्नुयाद्द्विज ॥ ९० ॥
सर्वैश्वर्यमवाप्नोति फलमेतेन तल्लभेत् ।
ब्राह्मणं तु वशीकर्तुं यदीच्छेन्मन्त्रसाधकः ॥ ९१ ॥
ब्रह्मवृक्षसमिद्भिस्तु घृताक्तैर्होममाचरेत् ।
औदुम्बरैर्हि राजानं वटोत्थाभिर्विशं नयेत् ॥ ९२ ॥

---

८५. a : S. नागैः M. नाथैः for नार्यः.
८६. a : My. दशमस्य for द्वादशस्य.
८७. b : S. A. हरि for यदि.
८८. a : S. हुतेनाम्रदलैः for हुतैराम्रफलैः, V. मन्त्रैः M. मन्त्रे for मन्त्री.
८९. c : My. A. M. मुक्तैः for मुद्गैः.
९०. d : My. न वक्तुं S. वक्तुं यत् for वक्तुं कः.
९१. a : A. आप्नोति for अवाप्नोति.
d : S. यम्मिच्छेत् My. A. यदिचेत् for यदीच्छेत्, V. तन्त्र for मन्त्र.
९२. c : My. ०रंहि A. ०रीभी M. ०राहि for ०रैर्हि.
d : V. M. यथोक्ताभिर्विशं S. परधाभिर्विशं for वटोत्थाभिर्विशं; My. V. वशं for विशं.

प्लक्षैः शूद्रं वशं कुर्यात् इति तथ्यं मयोदितम् ।
एवं द्वादशमूर्तीनां कीर्तितं मन्त्रलक्षणम् ॥ ९३ ॥

(द्वादशमासाधिपाङ्गमन्त्राः)

अङ्गानां लक्षणं वक्ष्ये समासाच्छृणु साम्प्रतम् ।
दीर्घस्वरैस्तु भिन्नानि बीजानि द्वादशानि तु ॥ ९४ ॥

हृदादिनामयुक्तानि जात्यन्तानि यथाक्रमम् ।
हृदयं च शिरश्चैव शिखा कवचमक्षिणी ॥ ९५ ॥

अस्त्रं षडङ्गान्येतानि स्वमूर्त्यनुगुणानि वै ।

(अङ्गमन्त्रजपादिसंख्या, अध्यायोपसंहारश्च)

दशांशेन जपं होममङ्गानां विहितं सदा ॥ ९६ ॥

इति द्वादशमूर्तीनां विष्णवादीनां प्रकीर्तितम् ।
मन्त्राणां लक्षणं चैव विनियोगं च साधनम् ॥ ९७ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
द्वादशमूर्तिलक्षणविधानं नाम चतुर्थोऽध्यायः ॥

---

९३. a : My. पुष्पैः for प्लक्षैः, M. शूद्री for शूद्रं.
b : M. तत्त्वं for तथ्यं, My. समीरितम् S. मयेरितम् for मयोदितम्.
d : S. M. उक्तम् for कीर्तितम्, My. om. कीर्तितम्.

९५. b : S. मया तु A. मया कृतम् for यथाक्रमम्.

९६. b : S. My. A. M. ०गतानि for ०गुणानि.
d : S. न वा for सदा.

९७. b : S. My. A. M. अङ्गमन्त्रं for विष्णवादीनां.
d : A. नियोगं च समासतः
S. My. नारदसंहितायाम् for नारदीयसंहितायां.

# पञ्चमोऽध्यायः

## [मत्स्यादिमूर्तिमन्त्रसाधनप्रकारनिरूपणाध्यायः]

### (मत्स्यमन्त्रोद्धारप्रकारः)

**नारदः**—

मत्स्यादीनां तु मूर्तीनां वक्ष्ये मन्त्रगणं शृणु ।
मत्स्यस्य सप्तमान्तं स्याद्बीजं मन्त्रस्य सर्वदा ॥ १ ॥

पूर्वं वेदादिमुद्धृत्य पञ्चमात् प्रथमं ततः ।
प्रथमात्त्रिदशेनैव युक्तमेतन्महामुने ॥ २ ॥

आद्यन्तं सप्तमाद्वर्गाद्द्वितीयेनादिवर्गतः ।
अष्टमादाद्यमुद्धृत्य सप्तमात्प्रथमं ततः ॥ ३ ॥

द्वितीयेन समायुक्तं प्रथमं स्वरवर्गतः ।
सप्तमात्प्रथमं युक्तं द्वादशेनादिवर्गतः ॥ ४ ॥

द्वितीयात्प्रथमं चैव प्रथमं चाष्टमाद्युतम् ।
प्रथमात्सप्तमेनैव सानुस्वारं समुद्धरेत् ॥ ५ ॥

---

अध्यायस्यारंभे A. कोषे - 'शुभमस्तु, अविघ्नमस्तु' इत्यधिकः । प्रथमश्लोकात् पूर्वं S. कोषे - गौतमः इत्ययं पाठः, A. कोषे - नारदः इत्ययं पाठः, My. V. M. कोषेषु नास्ति कश्चिदपि पाठः । ग्रन्थस्य प्रस्तावनादिपर्यालोचनेन A. कोषस्थ 'नारद' इत्ययं पाठः समीचीनः इति बुद्ध्वा अयं पाठः अत्र स्वीकृतः ।

१. b : V. अथ for वक्ष्ये.
२. d : S. M. मुक्त० for युक्त०
३. a : S. My. A. M. आद्यस्तु for आद्यन्तं.
४. b. : A. V. M. प्रथमात् for प्रथमं.
५. b : S. अष्टमादितः, A. अष्टमात्ततः My. अष्टमान्वितम् for अष्टमाद्युतम्.
d : S. My. M. सावसानं for सानुस्वारं.

तृतीयं च द्धितीयात्तु द्वितीयेनादितो युतम् ।
सप्तमात्प्रथमं चैव नमस्कारसमन्वितम् ॥ ६ ॥

(मत्स्यमन्त्रसाधनादिविधिः)

जपैः षोडशलक्षैः स्यात् पूर्वसेवा द्विजोत्तम ।
दशांशेन ततो होममाचरेत् सर्पिषा ततः ॥ ७ ॥

ततो ददाति देवोऽयं मन्त्रिणां यन्मनोगतम् ।
अस्मादन्यो न मन्त्रोऽस्ति सर्ववाञ्छितदायकः ॥ ८ ॥

अनेन सिद्धाः मुनयो यतयो मोक्षकाङ्क्षिणः ।
देवदेवं प्रतिष्ठाप्य जरामरणवर्जिताः ॥ ९ ॥

न संभवन्ति संसारे आनन्दाख्ये पदे स्थिताः ।
मुक्ताः ते सर्वदुःखैस्तु संसारभयवर्जिताः ॥ १० ॥

(कूर्ममन्त्रोद्धारप्रकारः)

कूर्माकृतेर्भगवतः शृणु मन्त्रं समस्तदम् ।
द्वितीयं षष्ठवर्गात्तु बीजमस्य प्रकीर्तितम् ॥ ११ ॥

तृतीयमष्टमाद्वर्गद्द्वितीयं सप्तमात्ततः ।
तदथोन्त्यञ्च तद्वर्गात् शक्त्यात्मपदमुद्धरेत् ॥ १२ ॥

---

६. a : My. व्रतयश्च for तृतीयं च.
७. a : My. V. जप्तैः for जपैः.
९. c : S. My. A. V. M. प्रतिष्ठास्ते for प्रतिष्ठाप्य.
१०. b : M. ०ख्योदरे for ०ख्ये पदे.
d : S. My. A. M. भवबन्धनैः for भयवर्जिताः.
११. b : My. समासतः for समस्तदम्.
c : S. A. M. तृ० for द्वि०.
१२. b : My. तृतीयं for द्वितीयं.
c : V. तदयोज्यन्तु for तदथोन्त्यञ्च.

उद्धृत्य पञ्चमादन्त्यम् प्रथमैकादशान्वितम्
चतुर्थ्यन्तं स्वनामस्थं प्रणत्यन्तो हि मन्त्रपः ॥ १३ ॥

(कूर्ममन्त्रसाधनादिक्रमः)

पूर्ववत्पूर्वसेवास्य होमकर्म च पूर्ववत् ।
ततोऽस्य मुक्तिर्हस्तस्था नात्र कार्या विचारणा ॥ १४ ॥

शृणु कूर्मस्य दिव्यं तु महदाश्चर्यमुत्तमम् ।
आलिखेच्च ततो मन्त्री भूमौ प्रतिकृतिं द्विज ॥ १५ ॥

गोरोचनालक्तकेन स्त्रीनाम च तथा लिखेत् ।
तन्नामान्तजपं कृत्वा तामाकर्षयति ध्रुवम् ॥ १६ ॥

कम्पितां जृम्भमाणां च कामविह्वललोचनाम् ।
आनयत्यचिरान्मन्त्री स्त्रियं रूपेण गर्विताम् ॥ १७ ॥

वश्या भवति सा तस्य देवस्त्री मानुषी किमु ।
पूर्वाशाभिमुखो भूत्वा जपेन्मन्त्रं सुभावितः ॥ १८ ॥

ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः नार्यश्च वा ततः ।
भवन्ति वश्यास्ते सर्वे किन्नराः नात्र संशयः ॥ १९ ॥

---

१३. c : S. My. A. M. ०न्तः for ०न्तं, S. My. A. M. ०स्थः for ०स्थं.
d : S. My. A. M. ०वान्तो for ०त्यन्तो, My. ह्य for हि, My. ०पम् for ०पः.
१४. c : S. A. V. M. मूर्तिः for मुक्तिः, V. हस्तानां for हस्तस्था.
१५. b : V. संयुतम् for उत्तमम्.
d : My. स्त्रिया रूपेण गर्वितम्.
१६. b : S. My. A. M. ततो द्विज for तथा लिखेत्.
१७. b : S. M. चेतनाम् for लोचनाम्.
१८. c : S. My. पूर्वया for पूर्वाशा, My. ०मुखी for ०मुखो.
d : S. सुभावनः My. A. सुभावितम्, for सुभावितः.
१९. b : S. My. A. M. ०स्तथैव च for ०श्च वा ततः.

अहर्निशं तथा यान्ति न मुञ्चन्ति च साधकम् ।
प्रियैः प्रियवचोभिस्तु पूजयन्ति च साधकम् ॥ २० ॥

(वराहमन्त्रोद्धारप्रकारः)

वराहस्याथ वक्ष्यामि मन्त्रं बीजसमन्वितम् ।
बीजं भूरिति तस्योक्तं प्रणवं पूर्वमुद्धरेत् ॥ २१ ॥
वीर्यात्मने तु उद्धृत्य वराहाय नमस्ततः ।

(वराहमन्त्रसाधनादिक्रमः)

मन्त्रेणानेन रूपाणि वराहस्य महात्मनः ॥ २२ ॥
पूजयेद्यो विमुक्त्यर्थं विभूत्यर्थं तु वा सदा ।
प्राप्याणिमादिकं सर्वं कैवल्यं प्राप्नुयात्ततः ॥ २३ ॥
पूर्ववत्पूर्वसेवास्य ततः कर्माणि चारभेत् ।
जपैः सहस्रगुणितैः भूमिलाभादयोऽमिताः ॥ २४ ॥
यां भूमिमिच्छेन्मन्त्री तां स्मृत्वा हृदि सुसाधकः ।
आप्नुयात्तां महीं सर्वां ग्रामं राष्ट्रमथापि वा ॥ २५ ॥
आरामं वा जनपदं नगरं पत्तनं तु वा ।
गृहं जलाशयं वापि नदीं वा कूपमेव वा ॥ २६ ॥

---

२०. b : S. समिच्छन्तीव for न मुञ्चन्ति च.
२२. a : V. वन्द्य for वीर्य, S. आत्मके for आत्मने.
c : S. रूपेण for रूपाणि.
२४. c : S. My. A. M. साहस्र for सहस्र.
२५. a : S. My. V. इच्छन् for इच्छेत्.
b : A. ०षु साधकः for सुसाधकः.
२६. b : S. My. M. V. पट्टनं for पत्तनम्.
c ; d : S. My. A. M. om.

रथ्यां वा पर्वतं वापि मठं हर्म्यं सुधामयम् ।
प्रासादं चान्यवस्तूनि तथोपकरणानि च ॥ २७ ॥
मन्त्री सम्प्राप्नुयान्नित्यं नात्र कार्या विचारणा ।
अस्य मन्त्रस्य कर्माणि तथाद्भुतमयानि च ॥ २८ ॥
अयुतानि सहस्राणि दिव्यानि च महान्ति च ।
तानि वक्तुं न शक्यन्ते बहुत्वात् कर्मणां मुने ॥ २९ ॥
तस्मात् संक्षेपतो वक्ष्ये शृणुष्वैकमना द्विज ।
शतेनानेन जप्तेन सर्वकर्म लभेन्नरः ॥ ३० ॥
ततो मोक्षमवाप्नोति यत्र भक्त्यानुवर्तते ।
अणिमादिगुणान् भुङ्क्ते भोगमिच्छन् स साधकः ॥ ३१ ॥

(नृसिंहमन्त्रोद्धारादिप्रकारः)

अथ मन्त्रं प्रवक्ष्यामि नृसिंहस्य महात्मनः ।
त्रयोदशस्वरोपेतं मन्त्रवर्गान्तमुद्धरेत् ॥ ३२ ॥
बिन्दुना युक्तमव्यक्तं नरसिंहस्य कीर्तितम् ।
प्रणवं पूर्वमुद्धृत्य नमो भगवते ततः ॥ ३३ ॥
नारसिंहापदान्तं च सप्तमात् प्रथमं ततः ।
मन्त्रोऽयं नरसिंहस्य वाचकः सर्वसिद्धिदः ॥ ३४ ॥
यद्यद्रूपं नृसिंहस्य तदन्तेनैव पूजयेत् ।
सर्वान् कामानवाप्नोति मन्त्री तन्मयतां गतः ॥ ३५ ॥

---

२७. a : S. M. राज्यं for रथ्यां.
c : S. वार्ण My. बाह्य A. वान्य for चान्य.
d : S. My. M. वा for च.
३०. c : S. एकेन for अनेन.
३२. a : S. My. M. मन्त्रस्य for मन्त्रम्.
d : S. वर्गं तम् My. वार्गान्तं for वर्गान्तम्.
३३. d : My. नरः for ततः.
३४. a : M. नरसिं० for नारसिं०.
३५. b : S. तदस्मिन्नेव पूजयेत् V. यथा मत्स्यात्मनो विभोः

पूर्ववत्पूर्वसेवास्य यथा मत्स्यात्मनो विभोः ।
मन्त्रेणानेन सिद्धेन यथा कुर्यात्तथा शृणु ॥ ३६ ॥

मन्त्रेणानेन भुङ्क्ते यश्शतावर्तितमौषधम् ।
तस्योदरगतो रोगः तत्क्षणादेव नश्यति ॥ ३७ ॥

तेन स्पृष्टं तु यद्गात्रं तद्रोगैर्मुच्यते तदा ।
दुर्निमित्तेषु दुःस्वप्ने व्याधिते पतनेऽम्भसि ॥ ३८ ॥

चोरव्याघ्रभये प्राप्ते तथा सिंहाद्भयेऽथवा ।
परस्य वात्मनो वापि विपन्नस्य च तत्त्वतः ॥ ३९ ॥

अष्टोत्तरसहस्रेण भयात्तस्माद्विमुच्यते ।
नास्मात् परतरो मन्त्रः त्रिषु लोकेषु विद्यते ॥ ४० ॥

किमन्यैर्बहुभिर्मन्त्रैः मन्त्रिणोऽस्यापवर्गिणः ।

(वामनमन्त्रोद्धारप्रकारः)

वामनस्य महामन्त्रः प्रोच्यते सर्वसिद्धिदः ॥ ४१ ॥

तृतीयात्तु द्वितीयं च बीजं वामनसंज्ञितम् ।
प्रणवं पूर्वमुद्धृत्य निखर्वपदमुद्धरेत् ॥ ४२ ॥

रूपाय विष्णवे पश्चात् प्रणतिं सम्यगुद्धरेत् ।
मन्त्रपो वामनस्यायं सर्ववाञ्छितसिद्धिकृत् ॥ ४३ ॥

(त्रिविक्रममन्त्रोद्धारप्रकारः)

ते च त्रिविक्रमायाथ सनमस्कं तु मन्त्रराट् ।
त्रिविक्रमस्य मन्त्रोऽयं सर्वशत्रुभयङ्करः ॥ ४४ ॥

---

३९. a ; b ; c ; d : V. om.
c : M. वाङ्मनो for वात्मनो.

४०. a ; b : V. om.

४३. b : S. My. प्रणीतं for प्रणतिं.
d : S. प्रार्थित for वाञ्छित०.

४४. b : V. नमस्कारं for सनमस्कं.

(वामनत्रिविक्रममन्त्रयोः साधनादिक्रमः)

अनयोः पूर्वसेवा तु यथा मीनात्मनस्तथा ।
काङ्क्षितं यच्च मनसा आरब्धं यच्च दुष्करम् ॥ ४५ ॥
यद्यदिच्छेद्विधातुं तत् सम्प्राप्नोत्यचिरान्मुने ।
यद्यत्कर्माणि मन्त्राणां विहितानि महान्ति च ॥ ४६ ॥
तानि सर्वाणि सिद्ध्यन्ति मन्त्राभ्यां तु प्रसादतः ।
अचिरान्मोक्षमाप्नोति मानवो मुनिसत्तम ॥ ४७ ॥
अणिमादिगुणान् भुङ्क्ते मन्त्रद्वन्द्वप्रभावतः ।

(जामदग्न्यरामस्य मन्त्रोद्धारप्रकारः)

जामदग्न्यस्य रामस्य मन्त्रं वक्ष्यामि सिद्धिदम् ॥ ४८ ॥
द्वितीयं षष्ठवर्गात्तु बीजं रामस्य कीर्तितम् ।
प्रणवान्ते तु भगवन्नत्युग्रपदमेव च ॥ ४९ ॥
उद्धृत्य तेजसे पश्चात् सनमस्कं तु मन्त्रपम् ।

(जामदग्न्यमन्त्रस्य साधनादिक्रमः)

पूर्ववत्पूर्वसेवोक्ता शृणु कर्माणि तस्य वै ॥ ५० ॥
लक्षेण च नमोन्तं च कुर्यात्तेनाभिमन्त्रितम् ।
प्रक्षिपेच्चातिवेगेन सर्वज्वालायतेक्षणात् ॥ ५१ ॥
मुष्टिबन्धाच्छमं यान्ति मन्त्रस्यास्य प्रभावतः ।
दृष्ट्वा रूपं तोयपूर्णं मन्त्रमष्टशतं जपेत् ॥ ५२ ॥

---

४९. b : S. M. द्विजराजस्य for बीजं रामस्य.
५०. b : V. नमस्कारं for सनमस्कं, S. My. मात्रदः for मन्त्रपम्.
d : V. तत्र for तस्य.
५१. a : S. My. A. लक्षणे चित्रपूर्णं च, V. लक्षणं for लक्षेण.
c : My. वातिवेगेन S. V. चाग्निपातेन M. चाग्निवेगेन for चातिवेगेन.
d : S. My. A. ०युतेक्षणात् for ०यतेक्षणात्.
५२. a : S. वृष्टि० for मुष्टि०.

आक्षिपेन्मुष्टिना तोयं रिक्तं रूपं क्षणाद्भवेत्।
मुष्टिमोक्षाच्च सम्पूर्णं यथापूर्णं तथा भवेत् ॥ ५३ ॥
तोयपूर्णां नदीं दृष्ट्वा महासलिलसङ्कुलाम्।
मन्त्री मन्त्रितपाणिस्तु यावत्तत्सलिलं व्रजेत् ॥ ५४ ॥
तावद्भवति रिक्ता सा नदी तोयविवर्जिता।
मुष्टिमोक्षात्सुसम्पूर्णा नदी भवति तत्क्षणात् ॥ ५५ ॥
वृष्टिं निवारयत्येष ऊर्ध्वास्यो जपते यदि।
करोति बहुकर्माणि मन्त्रोऽयं सम्प्रयोजितः ॥ ५६ ॥
मोक्षदो मोक्षकामस्य भोगकामस्य भोगदः।

(दाशरथिरामस्य मन्त्रोद्धारप्रकारः)

अथ दाशरथेर्मन्त्रं रामस्य परमात्मनः ॥ ५७ ॥
द्वितीयं सप्तमाद्वर्गात् बीजं दाशरथेः स्मृतम्।
प्रणवं पूर्वमुद्धृत्य पूर्ववन्मन्त्रमुद्धरेत् ॥ ५८ ॥
षष्ठादन्तं समुद्धृत्य चतुर्थं चाष्टमाद्भवेत्।
द्वितीयेन युतं पूर्वात् पञ्चमात् प्रथमं ततः ॥ ५९ ॥
उद्धृत्य मोविघा शब्दं पञ्चमाद्यं समुद्धरेत्।
द्वितीयात् प्रथमं चैव पूर्वात् सप्तमसंयुतम् ॥ ६० ॥
नमोऽन्तं तु समुद्धृत्य नकारं सर्वसिद्धिदम्।

(दाशरथिराममन्त्रस्य साधनादिक्रमः)

साधनं पूर्ववत् कृत्वा पश्चात्कर्माणि योजयेत् ॥ ६१ ॥

---

५४. a : V. वेग for तोय०.
b : S. My. A. M. सिवल for सलिल.
५६. a : My. एव for एष.
b : S. My. A. उद्वास्यो for ऊर्ध्वास्यो.
d : A. मन्त्रेशः for मन्त्रोऽयं.
६१. b : A. तेकारं for नकारं.

राज्यकामो लभेद्राज्यं स्त्रीकामो विन्दते स्त्रियम् ।
स्वर्गकामस्तथा स्वर्गं मोक्षकामस्तु मुच्यते ॥ ६२ ॥

सर्वदास्मिन् वसेद्रामः स्वयमेव न संशयः ।
अस्मान्मन्त्रः परो नास्ति भुक्तिमुक्तिफलप्रदः ॥ ६३ ॥

तस्मादनेन मन्त्रेण पूजयेत्तं यतात्मवान् ।
रामपादप्रसादेन तस्य लोकं स गच्छति ॥ ६४ ॥

(कृष्णमन्त्रोद्धारप्रकारः)

वसुदेवसुतस्यास्य वासुदेवस्य मन्त्रकम् ।
यदुसिंहस्य कृष्णस्य वक्ष्यामि द्विजपुङ्गव ॥ ६५ ॥

द्वितीयात्प्रथमं बीजं द्वितीयस्योपरि स्थितम् ।
सप्तमात् प्रथमं चात्र त्रयोदशसमन्वितम् ॥ ६६ ॥

यदुसिंहस्य कृष्णस्य बीजं निर्बीजकारणम् ।
प्रणवं पूर्ववद्गृह्य षष्ठात्पूर्वं तु केवलम् ॥ ६७ ॥

द्वितीयेन च संयुक्तं सप्तमात्तु महामुने ।
षष्ठाद्द्वितीयमुद्धृत्य प्रथमात् पञ्चमान्वितम् ॥ ६८ ॥

प्रथमैकादशोपेतं तृतीयं सप्तमाद्गुरुम् ।
ततस्तु पञ्चमादन्त्यं केवलं तु समुद्धरेत् ॥ ६९ ॥

---

६३. अत्र पङ्क्तिद्वयोः मध्ये एका पङ्क्तिः केवलं V. कोषे दृश्यते, साचे-त्थम्—'ददाति साधकेन्द्राय यद्यस्सुमनस [?] स्त्रियः' ॥
c : A. ०न्त्रवरो for ०न्त्रः परो.

६४. b : S. M. पूजयन् for पूजयेत्.

६६. c : V. प्रथमात् for प्रथमम्, S. A. द्वाजं My. बीजं V. वर्गात् for चात्र.

६७. a : My. यत्र for यदु०.

६९. b : S. A. M. गुरुः for गुरुम्.
d : V. तन्मन्त्रं for केवलम्.

तृयीयं तदधस्तस्मात् आद्यात्तुर्येण भूषितम् ।
सप्तमादन्त्यमुद्धृत्य [तत एव द्वितीयकम् ॥ ७० ॥
आद्याद्द्वितीयसंयुक्तम् उद्धरेन्मन्त्रवित्तमः ।
सप्तमादाद्यमुद्धृत्य] यादवाय नमस्ततः ॥ ७१ ॥
यादवस्य तु कृष्णस्य मन्त्रोऽयं सर्वसिद्धिदः ।

(कृष्णमन्त्रविनियोगादयः)

यानि रूपाणि बाल्येऽस्य यौवने यानि वा मुने ॥ ७२ ॥
नृत्तगेयानि दिव्यानि क्रीडायुक्तानि यानि वा ।
सविलासानि सर्वाणि स्थापितानि यथाविधि ॥ ७३ ॥
अनेन पूजनीयानि मन्त्रराजेन सर्वदा ।
कैवल्यं समवाप्नोति मन्त्रेणानेन
योजयेत् (यो यजेत् ?) ॥ ७४ ॥
भुक्तिमुक्तिप्रदश्चापि यद्यत्कामयते नरः ।

(मन्त्रसाधनादिः)

पूर्ववत्साधयेन्मन्त्रं पश्चात्कर्मणि योजयेत् ॥ ७५ ॥
उक्तानि यानि कर्माणि तानि सिद्ध्यन्त्यनेन वै ।
नास्मात्परतरो मन्त्रः त्रिषु लोकेषु विद्यते ॥ ७६ ॥

---

७०. d : आरभ्य ७१. c : पर्यन्तं कोष्ठस्थः पाठः न कुत्रापि उपलब्धः, यथोपलब्धपाठे तु 'ओं प्रफुल्लेन्दीव यादवाय नमः' इत्ययमेव मन्त्रः उद्धृतः भवति । अयं तु न सम्यक् प्रतिभाति, कोष्ठस्थपाठ-योजनेन समीचीनः मन्त्रः उद्धर्तुं शक्यते । अनुमीयते एतावानंशः कदाचित् मूलकोषात् कोषान्तरलेखनकाले भ्रमात्त्यक्तः भवेत् । A. कोषस्तु सम्यगेवात्र निर्दिशति 'अत्र ग्रन्थपातः' इति ।

७२. a ; b : S. My. A. M. om.

७४. b : V. मन्त्रमुख्यो महाबलः.

७५. c : S. My. A. M. कारयेत् for साधयेत्.

७६. b : S. My. A. M. ०न्ति तेन for ०न्त्यनेन.

अस्य मन्त्रस्य माहात्म्यं वक्तुं वर्षशतैरपि ।
न शक्ता: ब्रह्मरुद्राद्या: तव स्नेहात्प्रकाशितम् ॥ ७७ ॥

(बुद्धमन्त्रोद्धारप्रकार:)

चतुर्थमष्टमाद्वर्गात् विद्धि (बीजं ?) बुद्धात्मनो विभो: ।
प्रणवं पूर्वमुद्धृत्य पदं शान्तात्मने तत: ॥ ७८ ॥

समोक्षदाय च नम: समुद्धृत्य [पद ?] द्वयम् ।
एष मन्त्र: समुद्दिष्टो हरेर्बुद्धात्मनो विभो: ॥ ७९ ॥

(बुद्धमन्त्रसाधनादिप्रकार:)

पूर्ववत्पूर्वसेवा तु मन्त्रस्यास्य महामुने ।
सिद्धे मन्त्रेऽस्य कर्माणि सिध्यन्ति नात्र संशय: ॥ ८० ॥

अस्मिन् तिष्ठति यो मन्त्री तस्य सर्वं च सिध्यति ।
वादिनस्तस्य गच्छन्ति दूरतो भयविह्वला: ॥ ८१ ॥

मन्त्रिणोऽस्य भवेद्वाणी देवैरप्यनिवारिता ।
बृहस्पतिसमो भूत्वा विष्णुलोके महीयते ॥ ८२ ॥

(कल्किमन्त्रोद्धारप्रकार:)

अथ मन्त्रवरं वक्ष्ये कल्किविष्णोर्महात्मन: ।
द्वितीयं पञ्चमाद्वर्गाद्बीजं पापप्रणाशनम् ॥ ८३ ॥

प्रणवं पूर्वमुद्धृत्य पश्चात्तेजोमयाय च ।
कल्किविष्णो नम इति मन्त्रोऽयं सर्वसिद्धिद: ॥ ८४ ॥

---

७८. a : V. वर्णं for वर्गात्.
c ; d : S. My. A. M. om.
७९. a ; b ; c ; d : S. My. A. M. om.
८०. c : V. मन्त्रस्य for मन्त्रेऽस्य.
८१. b : V. तत: सर्वं च सिध्यति, S. My. A. M. तिष्ठति for सिध्यति.
c : S. My. A. M. तत्र for तस्य.
८३. a : My. परं for ०वरं.

(कल्किमन्त्रसाधनादिः)

मोक्षदो मोक्षकामानां भोगदो भोगकामिनाम् ।
कृत्वा तु पूर्ववन्मन्त्री पूर्वसेवां विधानतः ॥ ८५ ॥
पश्चात्कर्मणि योक्तव्यः मन्त्रपोऽयं विधानतः ।
काङ्क्षितं मनसा यत्तत् मन्त्रेणानेन सिध्यति ॥ ८६ ॥
रहस्यः सर्वमन्त्राणां न देयो यस्य कस्यचित् ।
उक्तं दशात्मनामेवं मन्त्राणां लक्षणं स्फुटम् ॥ ८७ ॥
साधनं च समासेन

(पञ्चोपनिषन्मन्त्रोद्धारप्रकारः)

मन्त्रानन्यांस्ततः शृणु ।
परमेष्ठी पुमान् विश्वो निवृत्तिः सर्वसंज्ञितः ॥ ८८ ॥
पञ्चैताः शक्तयः प्रोक्ताः परस्य परमात्मनः ।
पञ्चभिः शक्तिभिस्तस्य विग्रहं परमात्मनः ॥ ८९ ॥
वेदादिरादौ सर्वेषां तदन्ते बीजमुत्तमम् ।
बीजान्ते तु नमस्कारः परायेति पदं ततः ॥ ९० ॥
तस्यान्ते नाम संयोज्य नामान्ते त्वात्मनेपदम् ।
पञ्चोपनिषदो मन्त्राः कीर्तिता मुनिसत्तम ॥ ९१ ॥

---

८५. c : V. सर्वं for मन्त्री.
d : V. सेवा० for सेवां.
८६. c : A. युक्तम् for यत्तत्.
८७. a : A. M. रहस्यं for रहस्यः.
b. S. My. A. M. मा for न.
८९. b : V. परमेष्ठिनः for परमात्मनः.
c ; d : S. V. M. om.
९०. d : S. M. तदन्तरम् for पदं ततः.
९१. d : V. पञ्चसंज्ञिता for मुनिसत्तम.

(पञ्चोपनिषन्मन्त्रबीजनिर्देशः)

एषां बीजानि वक्ष्यामि परमेष्ठ्यादितः क्रमात् ।
षां विद्यात्परमेष्ठीति पुरुषां यां विदुर्बुधाः ॥ ९२ ॥

रां विश्वं तु निवृत्तिं वां सर्वं लामिति सर्वदा ।

(परिवारदेवतामन्त्रनिर्देशः)

अन्येषां परिवाराणां मन्त्रास्तु प्रणवादिकाः ॥ ९३ ॥

स्वाभिधानेन सर्वेषां नमोन्ताः विदिताः द्विज ।

(प्रासादादौ स्थितदेवतानां मन्त्रस्वरूपम्)

प्रासादे ये स्थिताः देवाः मण्डपे गोपुरेषु च ॥ ९४ ॥

एवं प्राकारभीत्यादौ कृताः देवाः सुधादिभिः ।
तेषां मन्त्राः समुद्दिष्टाः स्वनाम्ना परिवारवत् ॥ ९५ ॥

यद्यद्बीजं समुद्दिष्टं तत्तद्बीजान्वितं भवेत् ।
तथैव प्रणवाद्यं च मुनिश्रेष्ठ प्रकीर्तितम् ॥ ९६ ॥

(अङ्गमन्त्रोद्धारप्रकारः)

कीर्त्यन्ते सर्वमन्त्राणामङ्गानि मुनिपुङ्गव ।
यस्य मन्त्रस्य यद्बीजं तत्स्वरेण समन्वितम् ॥ ९७ ॥

---

९२. c : S. My. A. M. तु for ०ति.
 d : A. ०षो for ०षां.
९३. a : V. रं for रां.
 b : V. A. याम् for लाम्.
९४. c : S. My. A. M. देवालये for प्रासादे ये.
९५. a : S. येवा for एवं.
९७. a : My. ०त्रैव S. ०त्रस for सर्व.
 d : S. तत्परेण for तत्स्वरेण.

हृदयं तु द्वितीयेन चतुर्थेन शिरो भवेत् ।
षष्ठेनैव शिखा ज्ञेया कवचं द्वादशेन तु ॥ ९८ ॥
चतुर्दशेन नेत्रं तु षोडशेनास्त्रमुच्यते ।
स्वेन नाम्नान्वितं सर्वं जात्यन्तं तु यथाक्रमम् ॥ ९९ ॥

(जातिस्वरूपनिर्देशः)

नमः स्वाहा वषट् वौषट् हुं फडेते तु जातयः ।

(अध्यायोपसंहारः)

विष्णोर्मन्त्रस्य बीजैस्तु हृदयादीनि सप्त वै ॥ १०० ॥
प्रधानमन्त्रवत्तस्य कीर्तितं लक्षणं द्विज ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
मन्त्रलक्षणविधानं नाम पञ्चमोऽध्यायः

---

९८. c : S. ०सैव for ०नैव.
९९. b : My. A. एव च for उच्यते.
c : S. देवं for सर्वं.
१००. b : S. M. सम्पत्स्यते for हुं फडेते.

# षष्ठोऽध्यायः

## [मुद्रालक्षणनिरूपणाध्यायः]

### (मुद्रालक्षणनिरूपणोपक्रमः)

**गौतम :—**

मुद्राणां लक्षणं ब्रूहि समासान्मुनिसत्तम ।
यासु बद्धासु कुरुते साधकस्य हितं हरिः ॥ १ ॥

**श्रीनारद :—**

लक्षणं ते प्रवक्ष्यामि मुद्राणाम् ऋषिसत्तम ।

(वासुदेवमुद्रायाः लक्षणम्)

अञ्जलिस्तु ललाटस्था वासुदेवस्य कीर्तिता ॥ २ ॥

(सङ्कर्षणमुद्रायाः लक्षणम्)

हृदयस्था तु सा मुद्रा स्मृता सङ्कर्षणस्य तु ।

(प्रद्युम्नमुद्रायाः लक्षणम्)

ऊर्ध्वाङ्गुष्ठं तु वामेन मुष्टिं कृत्वा तथा हृदि ॥ ३ ॥
ऊर्ध्वाङ्गुष्ठं दक्षिणेन बद्धाङ्गुष्ठेन मुष्टिना ।
बद्धा प्रद्युम्नमुद्रेयं सर्वकामप्रदायिनी ॥ ४ ॥

---

A. कोषे अध्यायप्रारंभे ‘श्रीरस्तु, अविघ्नमस्तु’ इति अधिकः पाठः ।

१. b : A. पुङ्गव for सत्तम.
   d : My. हरः for हरिः, S. My. om श्रीनारदः.

३. b : M. कृता for स्मृता.

४. a : V. अङ्गुष्ठौ for अङ्गुष्ठम्.
   b : My. तूर्ध्वाङ्गु० for बद्धाङ्गु०.
   c : S. My. A M. एषा for इयम्.
   d : A. My. ०वरा for ०यिनी.

(अनिरुद्धमुद्रायाः लक्षणम्)

एषा विपर्ययया प्रोक्ता त्वनिरुद्धस्य सम्मता ।

(वासुदेवादिमुद्राचतुष्टयफलम्)

एताश्चतस्रो मुद्रास्तु धर्मकामार्थमोक्षदाः ॥ ५ ॥

(हृदयमुद्रायाः लक्षणम्)

हृदादीनां तु वक्ष्यामि मुद्राणां लक्षणं स्फुटम् ।
अनामिकामध्यमयोः प्रवेश्याङ्गुष्ठमायतम् ॥ ६ ॥
कुर्वीत हृदये मुष्टिं हस्ताभ्यां हृदयस्य तु ।

(शिरोमुद्रायाः लक्षणम्)

बद्ध्वा तु मुष्टिमायुक्तादङ्गुष्ठाग्रेण तर्जनीम् ॥ ७ ॥
स्थापयित्वा ललाटान्ते कराग्रं शिरसः स्मृता ।

(शिखामुद्रायाः लक्षणम्)

एवं बद्ध्वा दृढं मुष्टिं कृत्वा चाङ्गुष्ठमूर्ध्वगम् ॥ ८ ॥
स्थापयित्वा शिखामध्ये हस्ताभ्यां तु शिखा मता ।

(कवचमुद्रायाः लक्षणम्)

अन्तः प्रवेश्य चाङ्गुष्ठं वेष्टयित्वा समन्ततः ॥ ९ ॥

---

५. a : A. विनिमयात्, S. My. विधिपरा for विपर्यया.
६. a : V. अङ्गा for हृदा०.
c : My. अनामिकां मध्यमया.
७. b : S. My. A. M. हृदयेन्यसेत् for हृदयस्य तु.
c : S. A. M. आयुष्यं for आयुक्तात्.
d : A. ऊर्ध्वाङ्गुष्ठ My. ऊर्ध्वगात्म for अङ्गुष्ठाग्रेण.
८. b : V. कराभ्यां for कराग्रं, S. A. M. शिरसि for शिरसः.
c : V. एताश्चतस्रो मुद्रास्तु.
९. a ; b ; c ; d : S. M. om.
d : V. समस्ततः A. समन्वतः for समन्ततः.

संहरेत् तर्जनीं भूयो हस्ताभ्यां कवचस्य तु ।

(अस्त्रमुद्रायाः लक्षणम्)

अग्रहस्तं परामृश्य बद्ध्वा नाराचमुष्टिवत् ॥ १० ॥
विसृज्य पार्श्वयोस्तद्वत् हस्ताभ्यां शस्त्र (अस्त्र?) मुद्रिका ।

(नेत्रमुद्रायाः लक्षणम्)

एकाग्रमङ्गुलीः कृत्वा हस्ताभ्यां नेत्रयोः स्पृशेत् ॥ ११ ॥
विज्ञेया नेत्रयोः मुद्रा कराभ्यामेव पूर्ववत् ।

(उदरमुद्रायाः लक्षणम्)

हस्तमूले तु संलग्ने त्वंगुलीस्तु प्रसारयेत् ॥ १२ ॥
पद्मवत् कुक्षिमध्ये तु कृत्वा मुद्रोदरस्य तु ।

(पृष्ठमुद्रायाः लक्षणम्)

पाणिभ्यां तु स्पृशेत्पृष्ठं पृष्ठमुद्रेति कीर्तिता ॥ १३ ॥

(बाहुमुद्रायाः लक्षणम्)

मुष्टिनाङ्गुष्ठकं ग्राह्यं वामहस्तस्य बुद्धिमान् ।
बाहुमुद्रेति सा ज्ञेया विपरीता द्वितीयके ॥ १४ ॥

(ऊरुजङ्घापादमुद्राणां लक्षणनिर्देशः)

प्रसारिताङ्गुलीः सर्वाः हस्ताभ्यां स्तनयोर्द्वयोः ।
न्यसेदूर्वोस्तु मुद्रेयं कीर्तिता द्विजसत्तम ॥ १५ ॥

---

१०. a : S. A. My. अङ्गुलीभिर्विचलयेत्.
c : V. ०वृत्य for ०मृश्य.
११. b : S. M. हस्त V. सप्त for शस्त्र, A. मुष्टिका My. मुलिका for मुद्रिका.
c : S. V. ०लिं for ०ली:.
१२. a : A. M. विज्ञेयं for विज्ञेया.
c : S. चल A. वल My. चले for मूले.
d : A. My. M. अङ्गुलिं for अङ्गुली:.
१४. a : S. मुष्टिं सा० for मुष्टिना, A. M. My. गृह्य for ग्राह्यं.

जङ्घयोस्तु तथा न्यस्य जङ्घामुद्रा प्रकीर्तिता ।
पादयोश्च तथा न्यस्य पादमुद्रा प्रकीर्तिता ॥ १६ ॥

(वासुदेवमुद्रायाः लक्षणम्)

हस्तौ संश्लेषयित्वा तु हृदये स्थाप्य कूर्परौ ।
सङ्गृह्य चाङ्गुलीः सर्वाः विमुक्तोर्ध्वकनिष्ठिका ॥ १७ ॥

वासुदेवस्य मुद्रेयं सर्वकामप्रदा शुभा ।

(सङ्कर्षणप्रद्युम्नानिरुद्धमुद्राणां लक्षणनिर्देशः)

विमुक्तानामिका सा तु मुद्रा सङ्कर्षणस्य च ॥ १८ ॥

विमुक्तमध्यमा ज्ञेया प्रद्युम्नस्य प्रिया सदा ।
निर्मुक्ततर्जनी विप्र अनिरुद्धस्य कीर्तिता ॥ १९ ॥

(शार्ङ्गमुद्रायाः लक्षणम्)

हस्ताभ्यां हृदये देशे कृत्वा वै सम्पुटाञ्जलिम् ।
अङ्गुष्ठौ तु ततः कृत्वा कनिष्ठोभयमूलकौ ॥ २० ॥

ईषद्वै दोलयेत्तौ तु शार्ङ्गमुद्रा प्रकीर्तिता ।

(श्रीमुद्रायाः लक्षणम्)

अनामामूलकाङ्गुष्ठमुद्रा ज्ञेया श्रियाः शुभा ॥ २१ ॥

---

१६. c : A. My. M. ०स्तु for ०श्च.
d : My. ०द्रेति for ०द्रा प्र.
१७. a : A. My. हस्ते for हस्तौ, A. संशोष० for संश्लेष०.
b : A. कूर्परे for कूर्परौ.
d : V. ०र्ध्वं A. ०र्ध्वा for ०र्ध्व, My. कनिष्ठिके for कनिष्ठिका.
१८. c : S. हस्ते संशोषयित्वा तु ; V. अनामिकाभ्यां for अनामिका सा.
d : S. A. तु for च.
१९. c : A. My. विमुक्त for निर्मुक्त.
d : S. A. M. त्वनि for अनि.
२१. c : S. V. A. अनामिकामूलकाङ्गुष्ठ.

(सरस्वतीमुद्रायाः लक्षणम्)

मध्यमामूलगौ कृत्वा सरस्वत्याः शुभा मता ।

(रतिमुद्रायाः लक्षणम्)

तर्जनीमूलगौ कृत्वा रतिमुद्रा प्रकीर्तिता ॥ २२ ॥

(शङ्खमुद्रायाः लक्षणम्)

बद्ध्वा तु दक्षिणाङ्गुष्ठं वामहस्तस्य मुष्टिगम् ।
कृत्वा चाङ्गुष्ठतर्जन्यौ संयुक्ते प्रथमे समे ॥ २३ ॥
तिस्रस्तु दक्षिणस्यान्या बध्नीयात् मुष्टिमूर्ध्वतः ।
मुद्रा शङ्खस्य विज्ञेया सर्वकर्मसु पूजिता ॥ २४ ॥

(चक्रमुद्रायाः लक्षणम्)

मणिबन्धसमौ हस्तौ तिर्यक् संभ्राम्य चक्रवत् ।
पर्यायेन प्रयोक्तव्या चक्रमुद्रा सुखप्रदा ॥ २५ ॥

(गदामुद्रायाः लक्षणम्)

मुष्टिं कृत्वा तु हस्ताभ्यामङ्गुष्ठौ विनतावुभौ ।
युक्तौ संभ्राम्य निर्मुक्तौ गदामुद्रेति कथ्यते ॥ २६॥

(पद्ममुद्रायाः लक्षणम्)

प्रसार्य करजादूर्ध्वं मणिबन्धसमोद्यतौ ।
अन्तः प्रवेश्य चाङ्गुष्ठौ पद्ममुद्रेति कीर्तिता ॥ २७॥

---

२२. a : S. मूलगा A. V. मूलगो M. मूलगां for मूलगौ.
 b : S. My. A. M. शक्तिमुद्रा प्रकीर्तिता.
२३. b : M. ०कम् for ०गम्.
 d : S. A. My. प्रसृतः समे for प्रथमे समे.
२४. b : S. A. My. A. बद्धयेत् for बध्नीयात्.
२५. a : S. M. ०नकौ for समौ.
 b : S. M. सम्भृत्य for सम्भ्राम्य.
२६. b : A. My. ०लौ for ०ष्ठौ.
२७. b : A. बन्धौ for ०बन्ध०, M. ०यदि for द्यतौ.

(मुसलमुद्रायाः लक्षणम्)

वाममुष्टौ न्यसेदूर्ध्वं मुष्टिं वै दक्षिणस्य तु ।
मुसलस्य तु मुद्रेयं सर्वदुष्टभयङ्करी ॥ २८ ॥

(खड्गमुद्रायाः लक्षणम्)

मुष्टिं तु दक्षिणां बद्ध्वा मुञ्चन्मध्याञ्च तर्जनीम् ।
खड्गमुद्रेति विज्ञेया सर्वकर्मसु पूजिता ॥ २९ ॥

(शार्ङ्गमुद्रायाः लक्षणम्)

मुष्टिं कृत्वा तु वामेन मुक्तोर्ध्वं तर्जनीं तथा ।
मध्यां तदग्रगां कुर्यात् शार्ङ्गमुद्रा प्रकीर्तिता ॥ ३० ॥

(वनमालामुद्रायाःलक्षणम्)

बद्ध्वा मुष्टिं तु हस्ताभ्यां तर्जन्यौ संप्रसार्य च ।
अंसयोः स्पृश्य ताभ्यां तु गुल्फयोश्च स्पृशेदधः ॥ ३१ ॥
मुद्रेयं वनमालाख्या प्रोक्ता सौभाग्यवर्धिनी ।

(वासवाद्यष्टमुद्रालक्षणम्)

मुष्टिं कृत्वा तु हस्ताभ्यां विनाङ्गुष्ठं पृथक् पृथक् ॥ ३२ ॥
प्रदेशिनीं समारभ्य दक्षिणस्य यथाक्रमम् ।
वामप्रदेशिनीं यावत् मुक्तोर्ध्वं वासवादिभिः ॥ ३३ ॥

---

२८. d : S. A. My. M. भयप्रदा for भयङ्करी.
२९. a : A. My. M. ०णं for णां.
३०. b : S. A. कृत्वोत्थं for मुक्तोर्ध्वं.
 c : My. M. मध्यात् for मध्यां.
 d : A. My. M. अङ्ग for शार्ङ्ग.
३१. b : S. My. M. तर्जन्यासं प्रयुज्य च.
 d : S. A. M. ०स्तु for ०श्च, A. ०थ for ०धः.
३२. a : S. A. My. M. ०लायाः for ०लाख्या.
३३. c : V. याम्मुक्तो for यावत्.
 d : S. A. मुक्त्यार्ध V. उक्तोर्ध्वं for मुक्तोर्ध्वं, V. ०दिना for ०दिभिः.

मुद्राणामष्टका प्रोक्ता ईशानान्ता द्विजोत्तम ।

(कुमुदादिमुद्रालक्षणम्)

मुद्रा तु कुमुदादीनां वाममुष्टिकटिस्थिता ॥ ३४ ॥

(वैनतेयमुद्रायाः लक्षणम्)

उभे कनिष्ठिके बद्ध्वा प्रादेशिन्यावुभे तथा ।
हस्तावुभौ परावृत्तौ अङ्गुष्ठाग्रौ समावुभौ ॥ ३५ ॥
मध्यमानामिके कुर्यादभितः पक्षयुग्मवत् ।
वैनतेयस्य मुद्रेयं सर्वोपद्रवनाशिनी ॥ ३६ ॥

(विष्वक्सेनमुद्रायाः लक्षणम्)

नासिकाग्रसमीपस्थां कृत्वा वामस्य तर्जनीम् ।
दण्डवद्दक्षिणे कुर्यात् दक्षिणस्य प्रदेशिनीम् ॥ ३७ ॥
विष्वक्सेनस्य मुद्रेयं कीर्तिता मुनिसत्तम ।

(विष्णवादीनां मुद्रानिर्देशः)

विष्णवादीनां क्रमाज्ज्ञेया मुद्रा वै हृदयादयः ॥ ३८ ॥

(मत्स्यकूर्मयोः मुद्रालक्षणनिर्देशः)

अधोमुखं वामतले न्यसेद्वै दक्षिणं तथा ।
संहताश्चाङ्गुलीः कृत्वा अङ्गुष्ठौ पार्श्वयोः स्थितौ ॥ ३९ ॥

---

३४. a : S. A. ०ष्टमं for ष्टका, S. My. M. प्रोक्तं for प्रोक्ता.
b : S. A. My. M. ०नान्तं for नान्ता.
३५. b : S. A. ०मुभे for ०वुभे.
३७. b : S. समाहस्तस्य for कृत्वा वामस्य.
३८. b : M. कीर्तितोत्तमा for मुनिसत्तम.
३९. b : S. M. तत् for वै.
c : V. सहपञ्चाङ्गुलीः कृत्वा.
d : A. My. त्व for अ०.

चालयेन्मत्स्यमुद्रेयं स्मर्तव्या जलमध्यतः ।
कूर्मस्य सैव मुद्रा तु चालयित्वा कनिष्ठिके ॥ ४० ॥

(वराहमुद्रायाः लक्षणम्)

वामहस्तं तथोत्तानं कृत्वोर्ध्वं नामयेच्छनैः ।
मुखेन कूर्परं स्पृष्ट्वा मुद्रेयं कोलरूपिणः ॥ ४१ ॥

(नृसिंहमुद्रायाः लक्षणम्)

अङ्गुष्ठोपकनिष्ठान्तं नामयित्वोभयोः क्रमात् ।
पराङ्मुखमधोवक्रम् अङ्गुलित्रितयं भवेत् ॥ ४२ ॥
एषा नृसिंहमुद्रा तु सर्वदुष्टविनाशिनी ।

(वामनमुद्रायाः लक्षणम्)

ऊर्ध्वाङ्गुष्ठं दक्षिणेन मुष्टिं कृत्वा विचक्षणः ॥ ४३ ॥
वामनस्य तु मुद्रेयं व्यवहारे जयप्रदा ।

(जामदग्न्यमुद्रायाः लक्षणम्)

हृदयस्था शिरोमुद्रा जामदग्न्या सुकीर्तिता ॥ ४४ ॥

(दाशरथिराममुद्रायाः लक्षणम्)

मुष्टिं कृत्वा तु वामेन न्यसेद्वै श्रवणान्तिके ।
राममुद्रेति विज्ञेया

(कृष्णमुद्रायाः लक्षणम्)

कृष्णस्यैवाधुनोच्यते ॥ ४५ ॥

---

४१. c : V. कोर्पकां My. कोर्परं for कूर्परम्.
४२. S. M. om इतः आरभ्य एकपञ्चाशत् श्लोकसंख्यां यावत् ।
a : A. My. अङ्गुष्ठेन for अङ्गुष्ठोप.
b : A. ०त्वोर्ध्वयोः My. त्वाङ्ग्यो for ०त्वोभयोः.
c : V. My. वक्लं for वक्रम्.
४३. b : A. M. My. S. दुष्ट for दुःख.
४४. c : V. om स्था शि०.
d : A. My. जामदग्न्यस्य for जामदग्न्या सु०.
४५. b : A. My. श्रवणादिके for श्रवणान्तिके.

कृत्वाञ्जलिपुटं सम्यक् हृदये विनिवेशिता ।
कृष्णस्य मुद्रा विज्ञेया

(बुद्धमुद्रायाः लक्षणम्)

बुद्धस्याथ प्रकीर्त्यते ॥ ४६ ॥

तर्जन्यङ्गुष्ठयोरग्रे स्पर्शयित्वा हृदि न्यसेत् ।
बुद्धमुद्रेति विज्ञेया सिद्धिकृन्मन्त्रिणः सदा ॥ ४७ ॥

(कल्किमुद्रायाः लक्षणम्)

वामपाणिमनुत्तानमधोमुखतलाङ्गुलम् ।
कनिष्ठाङ्गुष्ठके कुर्यात् ऊर्ध्वाग्रं पार्श्वयोः द्वयोः ॥ ४८ ॥
मुद्रेयं कल्किविष्णोस्तु सर्वकर्मसु पूजिता ।

(अन्येषां देवानां मुद्रालक्षणम्)

ऊर्ध्वाग्रा हृदयस्था तु मुद्रान्येषामुदाहृता ॥ ४९ ॥

(मुद्राविनियोगावसरकीर्तनम्)

एताः मुद्राः प्रयोक्तव्याः न्यासकाले तु साधकैः ।
तथैवावाहिते देवे भोगैः सम्पूजिते तथा ॥ ५० ॥
तद्वन्निवेद्यदानान्ते पूजान्ते सम्भृते हरौ ।
स्नपनादौ तथान्ते च उत्सवाद्यन्तयोस्तथा ॥ ५१ ॥
एवं लक्षणमुद्दिष्टं मुद्राणां लेशतस्तव ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
मुद्रालक्षणं नाम षष्ठोऽध्यायः

---

४६. d : V. S. प्रकीर्तिता for प्रकीर्त्यते.
५०. d : A. सम्पूज्यते for सम्पूजिते.
५१. a : A. My. तत्त्व० for तद्व०.
b : V. om पूजान्ते, My. भरौ for हरौ.
c : S. स्तवनादेः for स्नपनादौ.
d : S. ह्युत्स० A. प्युत्स० for उत्स०.
५२. b : V. तथा for तव.

# सप्तमोऽध्यायः

## [दीक्षाविधिनिरूपणाध्यायः]

### (दीक्षामाहात्म्यवर्णनम्)

गौतम :—

भगवन् श्रोतुमिच्छामि दीक्षायाः विधिमुत्तमम् ।
कस्य चेयं भवेद्दीक्षा का वा दीक्षा महामुने ॥ १ ॥

एतत्सर्वं समासेने कथयस्व यथाक्रमम् ।

नारद :—

साधु साधु त्वया पृष्टं गुह्याद्गुह्यतरं हितम् ॥ २ ॥
महापातकसंयुक्ताः उपघातकिनस्तथा ।
समुक्तिं ते व्रजन्त्याशु दीक्षिताः विष्णुमण्डले ॥ ३ ॥
कर्मदुष्टा क्षये केचित् बीजदुष्टास्तथा परे ।
आहारेण तथा दुष्टास्तथा सङ्करकारकाः ॥ ४ ॥
ते मुच्यन्ति तु तैः सर्वैः दीक्षिताश्चैकदाध्वरैः ।
न विप्रास्तां गतिं यान्ति यज्ञदानरतास्तु वै ॥ ५ ॥
यां गतिं यान्ति लोकेऽस्मिन् दीक्षिताः विष्णुमण्डले ।
साधारिणो हि ये जीवाः पाशबन्धास्तु ये द्विज ॥ ६ ॥
भ्रमन्ति योनिमार्गेषु प्रविष्टाः पाशपञ्जरैः ।
दीक्षया दिक्क्षयं यान्ति दीक्षा निर्वाणदा भवेत् ॥ ७ ॥
अतः पशूनां पतये दीक्षां तां न्यस्य कस्यचित् ।
चञ्चलस्यास्य चित्तस्य शोधनमपि विन्दति ॥ ८ ॥

---

१. c : V. कार्या for कस्य.

२. c : इतः आरम्य १५ श्लोकसंख्यायाः b : पर्यन्तं स्थितः पाठः केवलं V. कोषे एवोपलभ्यते.

उपाय उच्यते दीक्षा बन्धनस्य द्विजोत्तम ।

(दीक्षाविधिसम्पादनार्थं स्थलसंस्कारः)

अथ दीक्षाविधिं वक्ष्ये शृणुष्वैकमना मुने ॥ ९ ॥

दोषे वर्णास्तिके हीने ? रम्यं चित्तप्रसादनम् ।
रत्नं च स्फटिकं सानुतरिमुर्धानमेव वा ? ॥ १० ॥

समुद्रगाभिस्सरिभिस्सङ्गमं यन्मनोरमम् ।
महोदधितटं रम्यं यत्र वा रमते मनः ॥ ११ ॥

तत्र भूमिं परीक्ष्यादौ पांसुनाधिकमुत्तमम् ।
समं तु मध्यमं प्रोक्तं निम्नं यत्नेन वर्जयेत् ॥ १२ ॥

अङ्गारतुषशल्यास्थिभिन्नां यावत्खनेत् क्षितिम् ।
शुद्धेन पांसुनापूर्य पलाशास्वत्थमुद्गरैः ॥ १३ ॥

आसिञ्च्य कुट्टयेत्तावत् समादर्शनसन्निभम् ।
कृत्वा तु मण्डलं तत्र लक्षणाढ्यं सुशोभनम् ॥ १४ ॥

तस्मिन् प्रचक्षयेद्दीक्षामिष्ट्वा देवं यथा पुरा ।

(दीक्षाक्रमे शरीरशोधनविधिः)

संहृत्य च यथाशास्त्रं यागद्रव्यं समस्तकम् ॥ १५ ॥

स्नात्वा शुचिस्संयतात्मा पादौ प्रक्षाल्य वाग्यतः ।
आचम्य देवं संस्मृत्य प्रविशेद्यागमण्डपम् ॥ १६ ॥

बद्ध्वा पद्मासनं तत्र धारणादिक्रमाद्वपुः ।
शोधयित्वा ततो मन्त्रान् न्यस्य देहे यथाक्रमम् ॥ १७॥

'नारसिंहेन'संहृत्य शतवारं तु सर्षपान् ।
'फट्कारा'न्तेन तेनैव 'रक्षोघ्नान्' सर्वतः क्षिपेत् ॥ १८ ॥

---

१५. c : V. दशम्यामुपसंहृत्य.
१७. b : S. My. A. अभि for आदि.

सर्वौषधीस्समाहृत्य विकिरानभिमन्त्रयेत् ।
शतवारं शुभे पात्रे 'वासुदेवे'न साधकः ॥ १९ ॥

संयोज्य पञ्चगव्यं तु 'पञ्चमन्त्रै'र्यथाक्रमम् ।
तेन संप्रोक्षयेन्मन्त्री 'पञ्चमन्त्रैः' समन्ततः ॥ २० ॥

विकिरान् 'वासुदेवे'न क्षिपेदुत्तानपाणिना ।
त्रिधा पूर्वमुखस्तिष्ठन् ध्यायन् विष्णुं सदा हृदि ॥ २१ ॥

(कुम्भपूजाप्रकारः)

सरत्नं निर्व्रणं रम्यं कलशं कर्करीयुतम् ।
वारिपूर्णं तु संस्थाप्य पीठन्यासक्रमेण तु ॥ २२ ॥

साङ्गं सम्पूजयेद्देवं गन्धपुष्पैर्यथाक्रमम् ।
विलिप्य बाह्यतो गन्धैः पल्लवैरुपशोभितम् ॥ २३ ॥

'अस्त्रे'ण शतवारं तु मन्त्रयित्वा तु वर्धनीम् ।
अच्छिन्नधारया सिंचेत् कुर्याच्छेषं प्रदक्षिणम् ॥ २४ ॥

ईशानान्तं परिभ्रम्य तत आरभ्य साधकः ।
कलशं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि ॥ २५ ॥

संहृत्य विकिरान् सर्वान् विकीर्णान् पत्रैगः सह ।
पुनः सम्पूज्य कुंभेशं पुष्पैर्वर्मिऽथ कर्करीम् ॥ २६ ॥

वस्त्रेणालभ्य संच्छाद्य शुभेन सदशेन तु ।
वस्त्रयुग्मेन कुंभेशमेकेन करकं ततः ॥ २७ ॥

---

१९. b : S. My. A. M. विहितान् for विकिरान्.
२०. b : S. V. गव्यैः for मन्त्रैः.
२२. a : My. सरक्तं for सरत्नं.
    b : S. कर्मरी for कर्करी.
२४. b : S. M. V. मूर्धनि for वर्धनीम्.
२६. a : A. M. V. संभृत्य for संहृत्य.
    b : S. M. विकिरान् A. My. विक्रियान् for विकीर्णान्.
    d : S. M. च for ऽथ.

तोरणध्वजदिग्द्वारदेवान् पूज्य स्वनामतः ।
संमृज्य स्थण्डिले देवमर्चयित्वा यथाक्रमम् ॥ २८ ॥

(दीक्षाङ्गहोमकुण्डलक्षणम्)

ततो होमं प्रकुर्वीत वह्निकुण्डे सुशोभने ।
चतुरश्रेऽथवा वृत्ते अर्धचन्द्रसमेऽपि वा ॥ २९ ॥

पद्माकारेऽथवा कुण्डे तल्लक्षणमिहोच्यते ।
चतुरभ्यधिकं विंशदङ्गुलं चतुरश्रकम् ॥ ३० ॥

सूत्रेण सूत्रयित्वा तु क्षेत्रं तावत्खनेत् समम् ।
खातस्य मेखलाः कार्याः त्यक्त्वा चैवाङ्गुलत्रयम् ॥ ३१ ॥

प्रथमा सात्विकी ज्ञेया द्वितीया राजसी स्मृता ।
तृतीया तामसी पूर्वा द्वादशाङ्गुलमुन्नता ॥ ३२ ॥

अष्टाङ्गुला द्वितीया तु तृतीया चतुरङ्गुला ।
चतुरङ्गुलविस्ताराः सर्वाः कार्याः सुसन्नताः ॥ ३३ ॥

योनिर्दशाङ्गुला रम्या षट् चतुर्द्व्यङ्गुलान्विता ।
क्रमान्निम्ना तु कर्तव्या पश्चिमाशा व्यवस्थिता ॥ ३४ ॥

अश्वत्थपत्रसदृशा किञ्चित्कुण्डे निवेशिता ।
आयता सा तु कर्तव्या सम्यक् पञ्चदशाङ्गुलैः ॥ ३५ ॥

नाहं तस्यास्तु कर्तव्यं चतुरङ्गुलमायतम् ।
मूलं त्रियङ्गुलं ज्ञेयम् अग्रं तस्य षडङ्गुलम् ॥ ३६ ॥

---

२८. a ; b : S. My. A. M. om.
d : S. My. A. M. ०रुचि for ०क्रमम्.
२९. d : S. M. च for वा.
३१. d : A. तत्त्व चै० for त्यक्त्वा चै०, V. द्वयम् for त्रयम्.
३२. a : S. My. M. चैव for ज्ञेया.
३४. b : A. ०ग्रताः for ०न्विता.
३६. a ; b ; c ; d : S. My. A. M. om.

एकहस्तस्य कुण्डस्य लक्षणं कथितं त्विदम् ।
द्विहस्ते द्विगुणं कुर्यात् नाभिं चैव तु मेखलाम् ॥ ३७॥
एकमेखलकं वापि कुण्डं संक्षेपकर्मणि ।

(वर्तुलाकारकुण्डकल्पनप्रकारः)

कुण्डार्धे तु स्थितं सूत्रं कोणे यदतिरिच्यते ॥ ३८ ॥
तदर्धं दिशि संस्थाप्य भ्रामितं वर्तुलं भवेत् ।

(अर्धचन्द्राकारकुण्डकल्पनक्रमः)

कुण्डार्धं कोणभागार्धं दिशि चोत्तरतो बहिः ॥ ३९ ॥
पूर्वपश्चिमतो यत्नात् लाञ्छयित्वा तु मध्यतः ।
संस्थाप्य भ्रामितं कुण्डम् अर्धचन्द्रं भवेच्छुभम् ॥ ४०॥

(पौण्डरीकाग्निकुण्डकल्पनप्रकारः)

पद्माकारे दलानि स्युर्मेखलायां तु वर्तुले ।

(आहवनीयाद्यग्निकुण्डविनियोगविवेकः)

चतुरश्रं तु चानित्यं नैत्यिके हस्तमात्रकम् ॥ ४१ ॥
तथा पवित्रयागादौ पुष्पयागे तथैव च ।
शान्तिकर्मणि बल्यङ्गमर्धचन्द्राभमेव वा ॥ ४२ ॥
पौष्टिके कर्मणि तथा ग्रहशान्तिविधौ तथा ।
प्रायश्चित्तं तथा वृत्ते चतुरस्रेऽथवा द्विज ॥ ४३ ॥
उत्सवेऽप्येवमेवं हि दीक्षायां तु यथा क्वचित् ।
अथवा चतुरश्रं वा वृत्तं वा सर्वतो भवेत् ॥ ४४ ॥

---

३८. a : b : S. My. A. M. om.
३९. c : S. My. A. M. कोणार्धं for कुण्डार्धं.
४०. a : V. दक्षिण for पश्चिम.
४२. a : इतः आरभ्य ४६ पर्यन्तं स्थितः पाठः केवलं V. कोषे उपलभ्यते.

(लक्षणरहितकुण्डदोषाः)

अप्रमाणेऽतिसन्तापः मरणं छिन्नमेखले ।
मेखलारहितं शोकं स्वधि ? चित्तसंक्षयः ॥ ४५ ॥
अधन्यं च धनं वापि कुण्डं योन्या विना कृतम् ।
तस्मात्प्रमाणसंयुक्तं होमकुण्डं विधीयते ॥ ४६ ॥

(कुण्डाल्पत्वविशालत्वव्यवस्थाविवेकः)

होमसंख्यां विदित्वा तु कुण्डाल्पत्वं विशालताम् ।
अधिकारवशाद्विप्र कुर्यात्कुण्डं न चान्यथा ॥ ४७ ॥
लक्षहोमे तु कर्तव्यं चतुर्हस्तं सुमेखलम् ।
कोटिहोमे तु कर्तव्यम् अष्टहस्तं शुभं महत् ॥ ४८ ॥
महाहोमे तथा स्वल्पं स्वल्पे होमे महत्तथा ।
न कुर्यात् ईदृशं कुण्डं यद्वै दोषकरं भवेत् ॥ ४९ ॥
एवं ज्ञात्वा तु कुण्डानां लक्षणं देशिकोत्तमः ।
ततस्तु कारयेद्विद्वान् दीक्षायां स्थापनादिषु ॥ ५० ॥
एवं लक्षणसंयुक्तं कुण्डं कृत्वा तु मण्डपे ।

(दिगनुसारं कुण्डकल्पनफलनिर्देशः)

पूर्वस्यां जयदं कुण्डम् आग्नेय्यां धनदं भवेत् ॥ ५१ ॥
कुण्डं दक्षिणदिग्भागे मेधाकरमुदाहृतम् ।
कुण्डं नैर्ऋतदिग्भागे मोक्षकामस्य शस्यते ॥ ५२ ॥

---

४८. a : S. My. A. M. लक्षस्य होतुः कर्तव्यम्.
c : S. My. A. M. होतुः for ०होमे.

४९. a : S. होतुः for होमे.
c : S. V. यः for न.
d : S. हि for वै.

५०. c : V. मन्त्री for विद्वान्.

पश्चिमस्यां तु यत्कुण्डमायुष्करमुदाहृतम् ।
वायव्यां तु धनापायमनायुष्करमार्तिदम् ॥ ५३ ॥

उत्तरस्यां तु यत्कुण्डं सर्वसम्पत्समृद्धिदम् ।
ईशान्यां तु कृतं कुण्डं श्रीकरं पुण्यदं द्वयम् ॥ ५४ ॥

पवित्रारोहणे चैवाप्येवमेव फलप्रदम् ।

(कुण्डसंस्कारप्रकारः)

उपलिप्य समुल्लिख्य ततोद्धृत्योक्ष्य वारिणा ॥ ५५ ॥

पूर्वाग्रमुत्तराग्रं वा विष्टरं तत्र निक्षिपेत् ।
ततो विभावसुं भ्राम्य योनिमध्ये विनिक्षिपेत् ॥ ५६ ॥

'द्वादशाक्षर'मन्त्रेण संस्कारं तत्र कारयेत् ।
एकैकेन तु बीजेन गर्भाधानादिकं क्रमात् ॥ ५७ ॥

गर्भाधानं तु प्रथमं ततः पुंसवनं भवेत् ।
सीमन्तोन्नयनं कर्म जातकर्म ततः परम् ॥ ५८ ॥

नामान्नप्राशनं चौलं व्रतबन्धमतः परम् ।
वेदव्रतानि चत्वारि समावर्तनमेव च ॥ ५९ ॥

पत्नीयोगाधिकारश्च संस्काराः कथिताः पृथक् ।

(कुण्डसंस्कारान्ते होमः)

संस्कारान्ते तथा विप्र पूर्णाहुतिमथाचरेत् ॥ ६० ॥

---

५३. c : S. My. A. M. मतं कुण्डम् for धनापायं.
५४. a : S. कृतं for यत्.
c : V. सुखदं कुण्डं for तु कृतं कुण्डं ;
d : S. My. A. M. कुण्डलं च यत् for पुण्यदं द्वयम्.
५७. d : S. My. A. M. आदितः for आदिकं.
५९. a : S. My. चाथ for चौलं.

(ध्यानार्थं वह्निस्वरूपवर्णनम्)

वासुदेवतनुं वह्निं पञ्चवक्त्रं विचिन्तयेत् ।
पूर्ववक्त्रं सुवर्णाभं कृष्णाभं दक्षिणामुखम् ॥ ६१ ॥

पश्चिमं चन्द्रसंकाशं रक्तवर्णमुदङ्मुखम् ।
शुद्धस्फटिकसंकाशमूर्ध्ववक्त्रं महामुने ॥ ६२ ॥

अष्टात्रिंशत्कलोपेतं सोमसूर्यविलोचनम् ।
पञ्चवक्त्रं गतास्तस्य सप्तजिह्वाविभावसोः ॥ ६३ ॥

अग्निकुण्डप्रमाणं तु मुखं सञ्चिन्तयेत् स्फुटम् ।
ज्वालामालासहस्रास्यं वासुदेवात्मकं मुखम् ॥ ६४ ॥

ऊर्ध्ववक्त्रं तु यद्वह्नेः तत्र होमं समाचरेत् ।

(वह्नेः सप्तानां जिह्वानां लक्षणम्)

जिह्वानां लक्षणं वक्ष्ये तच्छृणुस्व द्विजोत्तम ॥ ६५ ॥

प्रथमा नीलवर्णा तु जिह्वा वै कालरूपिणी ।
पश्चिमास्य गता सापि तस्यां होमो न शोभनः ॥ ६६ ॥

ताम्रवर्णा द्वितीया तु पूर्वास्ये ब्रह्मरूपिणी ।
धनधान्यप्रदा सा तु सर्वसम्पत्तिदा सदा ॥ ६७ ॥

तृतीया सोमदेवत्या शुक्ला मध्यास्य वामगा ।
सर्वं प्रीणयते सा तु जगत्स्थावरजङ्गमम् ॥ ६८ ॥

---

६१. b : V. चैव कुण्डे for पञ्चवक्त्रं.
c : V. अंगं for आभं.
d : M. V. दक्षिणात्मकम् for दक्षिणामुखं.
६२. a : V. पश्चिमे for पश्चिमं.
६३. b : S. My. A. M. सुलोचनं for विलोचनम्.
६४. c : A. M. My. V. आढ्यं for आस्यं.
६५. b : S. My. A. M. तस्य for तत्र.
६७. c : V. सौ for सा.
६८. c : S. My. प्रषूयते A. प्रणवते for प्रीणयते.

यास्यां चतुर्थी कृष्णाभा दक्षिणास्य गता सदा ।
सर्वगोत्रक्षयकरी सर्वकर्मविनाशिनी ॥ ६९ ॥
पञ्चमी वैष्णवी जिह्वा सातसीकुसुमप्रभा ।
उत्तरास्य गता सा तु धनधान्यसमृद्धिदा ॥ ७० ॥
सुतवित्तप्रदा चैव धर्मकामप्रदा सदा ।
षष्ठी तु शुक्लवर्णाभा सा ज्ञेया सूर्यदेवता ॥ ७१ ॥
मध्यास्यदक्षिणे पार्श्वे संस्थिता शान्तिपुष्टिदा ।
आरोग्यमतिवृद्धिञ्च ज्ञानं चैव प्रयच्छति ॥ ७२ ॥
सप्तमी सर्वदेवत्या मध्यवक्त्रस्य मध्यगा ।
सर्वदेवी तु विज्ञेया धर्मकामार्थमोक्षदा ॥ ७३ ॥

(वह्निजिह्वाविनियोगक्रमः)

अस्यां पूर्णाहुतिर्ज्ञेया देशिकैर्मन्त्रवित्तमैः ।
शान्तिहोमं तु पूर्वास्ये प्रायश्चित्तं तु पश्चिमे ॥ ७४ ॥
उत्तरे सर्वकामार्थी होमं कुर्याद्यथाविधि ।
दक्षिणे त्वाभिचारार्थी होमं कुर्यान्मुखे द्विज ॥ ७५ ॥
सर्वथा मध्यमास्ये तु होतव्यं सिद्धिमिच्छता ।
एवं जिह्वाविभागज्ञो होमकर्मसमाचरेत् ॥ ७६ ॥

---

७०. c : V. शुद्धा for सा तु.
७२. a : S. मध्यस्य for मध्यास्य०.
b : A. सु० for सं०.
c : S. अमितं वृद्धिं M. महतीं वृद्धिं for अतिवृद्धिं च.
७३. c : V. सर्वसौख्यप्रदानन्तु.
७४. a : S. My. A. M. पूर्वा० for पूर्णा०.
७५. a : S. M. कामार्थैः for कामार्थी.
b : S. My. A. मुखे द्विज for यथाविधि.
७६. a : A. My. M. सर्वदा for सर्वथा.
c : V. विभेद० for विभाग०.
d : S. My. A. M. आरभेत for आचरेत्.

(जिह्वाभेदानभिज्ञस्याग्निकर्मनिष्फलत्वम्)

जैह्वाभेदमजानन्वै जुहुयात् जातवेधसि ।
यद्यदारभते कर्म तत्तत्सर्वं तु निष्फलम् ॥ ७७ ॥

यो न जिह्वाविभागज्ञो न चासौ देशिको भवेत् ।

(चरुकल्पनप्रकारः)

होमं कृत्वा विधानेन तन्त्रान् सन्तर्प्य पूर्ववत् ॥ ७८ ॥

चरुं संश्रापयेत् पश्चात् वैष्णवं शालितण्डुलैः ।
प्रक्षाल्य 'पुण्डरीकेन' विलिप्यान्तः सुगन्धिना ॥ ७९ ॥

निरस्तदोषां निर्णिक्तां निर्व्रणां मृण्मयीं शुभाम् ।
ताम्रजां वा द्विजश्रेष्ठ हेमरूप्यविनिर्मिताम् ॥ ८० ॥

उक्ता (स्थाली?)माज्येन सम्पूर्य गोक्षीरेण तु साधकः ।
आरोप्य 'परमेष्ठयान्त्या' ततः 'पुंसा' महामुने ॥ ८१ ॥

तण्डुलानाज्यसंस्पृष्टान् क्षिपेत् क्षीरे सुसंस्थिते ।
'विश्वेन'तु समालोक्य(ड्य?) दर्व्या संघट्टयेच्छनैः ॥ ८२ ॥

(चरुविनियोगप्रकारः)

पक्वमुद्धृत्य तं पश्चात् 'निवृत्या'मुनिसत्तम ।
ततः'सर्वेण' मन्त्रेण प्रक्षाल्यालिप्य सर्वतः ॥ ८३ ॥

चतुर्दिक्षु ततः कुर्यात् ऊर्ध्वपुण्ड्रं तु भस्मना ।
चतुर्धा तद्विभजयैकं भागं देवाय कल्पयेत् ॥ ८४ ॥

---

७७. a : V. ०दिकं for भेदम्.
७९. d : V. न लिप्यान्तः सुगन्धिका.
८०. d : My. हेम्नाशपि for हेमरूप्य.
८१. a : A. My. M. उत्तराज्येन for उक्तामाज्येन.
c : S. My. परमेढ्योक्त्यां for परमेष्ठयान्त्या.
८३. b : My. A. निर्वृत्या for निवृत्या.
८४. a : S. My. A. M. पश्चात् for कुर्यात्.

अभिघार्य गृहीत्वा तु हविः प्रत्यभिघार्य च ।
अभिघार्याक्षतं तद्वत् कलशस्थाय कल्पयेत् ॥ ८५ ॥

भागद्वितीयमन्येन जुहुयान्मूलविद्यया ।
कृत्वाभिघार्यमाज्येन प्लुतं तत्राहुतित्रयम् ॥ ८६ ॥

पञ्चगव्यं पुरा पीत्वा 'प्रणवे'न ततश्चरुम् ।
शेषं शिष्यैः सहाश्नीयात् गुरुः कायविशुद्धये ॥ ८७ ॥

(दन्तकाष्ठपातेन शुभाशुभविज्ञापनप्रकारः)

'मूल'मन्त्रेण संमन्त्र्य भक्षयेत् क्षीरवृक्षजम् ।
आचार्यः सह शिष्यैस्तु दंतकाष्ठं तु निर्व्रणम् ॥ ८८ ॥

भंजयित्वा क्षितौ क्षिप्रमग्रपातं विलोकयेत् ।
ऐन्द्रवारुणकौवेर्यामीशानाभिमुखं यदि ॥ ८९ ॥

शस्तं तु विपरीतश्चेत् विपदं तु विनिर्दिशेत् ।

(दन्तकाष्ठपाताशुभशान्तिः)

तत्रापि 'नारसिंहे'न पश्चिमास्ये तु सर्पिषा ॥ ९० ॥

अष्टोत्तरशतं कुर्यात् होममूर्ध्वशुभं भवेत् ।

(भगवद्विज्ञापनक्रमः)

आचम्य तु शुचिर्भूत्वा देवागारं प्रविश्य तु ॥ ९१ ॥

---

८५. a : S. My. A. M. तत् for तु.
c ; d : S. om.
८६. a ; b ; c ; d : S. om.
८७. a : S. My. A. M. नीत्वा for पीत्वा.
c : S. My. सम for सहा०.
८८. b : V. सप्तधा for भक्षयेत्.
८९. a : My. भक्षयित्वा for भञ्जयित्वा.
९०. b : S. M. विपत्कर्तुः for विपदं तु.

सकलीकृत्य चात्मानं संपूज्य पुरुषोत्तमम् ।
प्रदक्षिणमुपावृत्य नमस्कृत्य प्रसाद्य च ॥ ९२ ॥

संसारार्णवमग्नानां पशूनां पाशमुक्तये ।
त्वमेव शरणं देव सर्वदा भक्तवत्सल ॥ ९३ ॥

देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः ।
पाशितान् मोचयिष्यामि त्वत्प्रसादात्पशूनिमान् ॥ ९४ ॥

इति विज्ञाप्य देवेशं

(दीक्षार्थं नामचयनप्रकारः)

सम्प्रवेश्य पशून् ततः ।
धारणादिभिः संशोध्य पूर्ववज्जननादिना ॥ ९५ ॥

संस्कृत्य मूर्त्या संयोज्य नेत्रे बद्ध्वा प्रवेशयेत् ।
पुष्पपूर्णाञ्जलिं तत्र 'क्षिपस्वे'ति नियोजयेत् ॥ ९६ ॥

अमन्त्रमर्चनं तत्र पूर्ववत् कारयेत्क्रमात् ।
यस्यां मूर्तौ पतेत् पुष्पं तस्य तन्नाम निर्दिशेत् ॥ ९७ ॥

(शिष्यदेहेऽध्वषट्कन्यासनिर्देशः)

ततोऽध्वषट्कं तद्देहे न्यसेत्सृष्टिक्रमेण तु ।

(भूतेभ्यः बलिदानक्रमः)

'नमो भूतेभ्य' इत्येतं मन्त्रमुच्चार्य देशिकः ॥ ९८ ॥

---

९३. b : S. M. पापपाशविमुक्तये.
d : My. सदास्या for सर्वदा.
९४. b : S. V. कलत्रैः for प्राकृतैः.
९६. a : V. संसृत्य for संस्कृत्य.
d : S. My. A. M. तं क्षिपेति for क्षिपस्वेति.
९७. a : A. समन्त्र० for अमन्त्र०.
b : S. My. A. कारयेत्पूर्ववत् for पूर्ववत्कारयेत्.
d : S. तस्यां कामनिदर्शयेत्.
९८. c : S. My. A. M. एकं for एतं.

माषौदनेन भूतेभ्यो बलिं दत्त्वा विधानतः ।

(स्वप्नार्थं शयनम् अशुभे स्वप्ने शान्तिप्रकारश्च)

ततश्शयीत तैश्शिष्यैः कुशानास्तीर्य देशिकः ॥ ९९ ॥

तस्मिन् विष्णुं जगद्योनिं स्मरेत् तद्गतमानसः ।

शिष्यः प्रातः समुत्थाय स्वप्नं दृष्ट्वा शुभाशुभम् ॥ १०० ॥

अशुभे शान्तिहोमं तु गुरुः कुर्वीत पूर्ववत् ।

(देवविसर्जनक्रमः)

स्नात्वा जप्त्वा यथान्यायं ततो देवं विसर्जयेत् ॥ १०१ ॥

स्थण्डिले तु ततो मन्त्री कुम्भे चैव हृदन्तरे ।

(मण्डलकल्पनार्थं मण्डपालङ्करणम्)

ऊर्ध्वतश्चक्रचिह्नेन वितानेन विभूषयेत् ॥ १०२ ॥

वस्त्रैर्नानाविधैः स्तम्भान् भूषयित्वा यथाविधि ।

चित्रं सुविपुलं रम्यं श्वेतद्वारे प्रकल्पयेत् ॥ १०३ ॥

नानाविधपताकाभिः मण्डपं समलङ्कृतम् ।

स्थापयेत् कलशान् शुभ्रान् सोदकान् सोपकुंभकान् ॥ १०४ ॥

---

९९. c : S. शायीत for शयीत, My तं शिष्यं for तैश्शिष्यैः.

१००. a : My. त्वं हि for तस्मिन्.
c : S. M. प्रातः समुत्थाय शिष्यः.

१०१. a : S. M. A. शान्तिकृद्धोमं for शान्तिहोमं तु.

१०२. a : V. स्थण्डिलस्थं for स्थण्डिले तु.
b : V. शाय्या for चैव.
c : S. My. A. M. श्चाग्र for चक्र.

१०३. a : S. My. A. M. कुम्भान् for स्तम्भान्.
b : V. रुचि for विधि.

१०४. a ; b ; c ; d : S. My. A. M. om.

गरके वादिकान् अन्यान् बाह्यकोणे प्रकल्पयेत् ।
मण्डपं भूषयित्वा तु यथा विभवविस्तरम् ॥ १०५ ॥

शुष्कगोमयसंमृष्टां भूमिं दर्पणसन्निभाम् ।
कृत्वा तत्र लिखेद्विद्वान् मण्डलं भद्रकं शुभम् ॥ १०६ ॥
चक्राब्जं वा सुविस्तीर्णं सर्वलक्षणसंयुतम् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
दीक्षाविधानं नाम सप्तमोऽध्यायः

---

१०५. a : b : S. My. A. M. om.
१०६. a : S. My. A. M. संस्पृष्टां for संमृष्टां.

# अष्टमोऽध्यायः

## [मण्डललक्षणविधानाध्यायः]

(मण्डललक्षणप्रतिपादनार्थं नारदं प्रति गौतमकृताभ्यर्थना)

गौतम :—

लक्षणं मण्डलस्यास्य ब्रूहि देवमुने मम ।
भद्रकस्य च भेदं च चक्राब्जस्य तथैव च ॥ १ ॥

(मत्स्यलाञ्छनपूर्वकं चतुरश्रक्षेत्रकल्पनप्रकारः)

नारद :—

प्राक् प्रत्यक् संस्थितं सूत्रमादाय स्थापयेत्समम् ।
मध्ये बिन्दुं निवेश्यादौ ऊर्ध्वाधो लाञ्छयेत्समम् ॥ २ ॥

द्वादशाङ्गुलमानेन ताभ्यां वै दक्षिणोत्तरे ।
मध्यमं लाञ्छयित्वा तु मत्स्यलाञ्छेन लाञ्छयेत् ॥ ३ ॥

प्राक् प्रत्यक् संस्थितं पूर्वं प्रत्यक् प्राक् संस्थितं पुनः ।
ताभ्यामास्फालयेत् पश्चात् आयतं दक्षिणोत्तरे ॥ ४ ॥

द्विहस्तमेकहस्तं वा ज्ञात्वा मानं तु लाञ्छयेत् ।
मण्डलस्य प्रयत्नेन दिक्षु कोणप्रसिद्धये ॥ ५ ॥

---

१. c : S. My. A. M. तु for च.
२. b : A. M. V. स्फालयेत् for स्थापयेत्.
c ; d : S My. A. M. om.
३. b : S. My. A. M. तस्यां for ताभ्यां.
c : My. लोप० for लाञ्छ.
४. a : M. कुर्यात् for पूर्वम्.
c : My. तस्यां for ताभ्याम्.

द्वाभ्यां द्वाभ्यामथैकैकं लाञ्छयेत्कोणमन्यकम् ।
दिक्सूत्राणि क्रमात्तेषु प्रसार्यास्फालयेत्समम् ॥ ६ ॥
चतुरश्रीकृतं क्षेत्रं चतुष्कोष्ठं समं शुभम् ।
स्वजातिभेदभिन्नानि मण्डलान्यखिलानि तु ॥ ७ ॥
लिख्यन्ते कोष्ठकैरत्र चक्राब्जाद्येतराणि वा ।

(भद्रकमण्डलकल्पनार्थं षट्पञ्चाशदुत्तरशतद्वयकोष्ठकल्पनार्थं सूत्रपातः तत्र पङ्कजक्षेत्रम्)

ततः षोडशधा दिक्षु लाञ्छयित्वा समन्ततः ॥ ८ ॥
प्रसार्यास्फाल्य यत्नेन समं सूत्राणि साधकः ।
कोष्ठानां द्विशतं तत्र षट्पञ्चाशत्तथोत्तरम् ॥ ९ ॥
षट्त्रिंशद्भिर्लिखेन्मध्ये कोष्ठकैः पङ्कजं शुभम् ।

(पीठवीथिकयोः क्षेत्रम्)

बहिः पङ्क्त्या भवेत्पीठं ततो द्वाभ्यां तु वीथिका ॥ १० ॥

(शोभोपशोभादिक्षेत्रनिर्देशः)

शोभोपशोभयुक्तानि द्वाराणि च ततः परम् ।

(पद्मकल्पनप्रकारः)

वर्तुलं भ्रमयित्वा तु पद्मक्षेत्रं पुरोदितम् ॥ ११ ॥
पद्मार्थे भ्रामयित्वा तु भागद्वादशकं भवेत् ।
विभज्य भ्रामयेच्छेषं चतुः क्षेत्रं तु वर्तुलम् ॥ १२ ॥

---

६. b : My. मध्य० for अन्य.
c : M. तत् for दिक्.
७. b : S. A. M. चतुष्केषु My. चतुर्ष्वेषु for चतुष्कोष्ठं.
९. a : S. My. M. स्फालयेत्तेषु for स्फाल्य यत्नेन.
१०. b : S. My. A. M. कमलं for पङ्कजम्.
१२. b : A. S. भ्रम S. भ्रमं for भाग, V. बहिः for भवेत्.

प्रथमं कर्णिकाक्षेत्रं केसराणां द्वितीयकम् ।
तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम् ॥ १३ ॥
प्रसार्य कोणसूत्राणि कोणदिङ्मध्यमं ततः ।
निधाय विधिनाग्रे तु दलसंधिं तु लाञ्छयेत् ॥ १४ ॥
पातयित्वा तु सूत्राणि तत्र पत्राष्टकं लिखेत् ।
दलसन्ध्यन्तरालं तु मानं मध्ये निधाय तु ॥ १५ ॥
दलाग्रं भ्रामयेत्तेन तदग्रं तदनन्तरम् ।
तदन्तरालं तद्बाह्ये कृत्वा बाह्यभ्रमेण तु ॥ १६ ॥
केसरे तु लिखेद्द्वौ द्वौ दलमध्ये ततः सुधीः ।
एतत्साधारणं प्रोक्तं पद्मानां लक्षणं मया ॥ १७ ॥

(द्वादशदलपद्मकल्पनप्रकारः)

कर्णिकार्धेन मानेन प्राक्संस्थं भ्रामयेत्क्रमात् ।
तत्पार्श्वेन तु कुण्डस्य कुण्डल्यः षड्भवन्ति हि ॥ १८ ॥
एवं द्वादश मत्स्याः स्युः तेषु सूत्राणि योजयेत् ।
तत्पत्राणि लिखेत्सन्धिसूत्राण्यास्फाल्य यत्नतः ॥ १९ ॥
एवं द्वादशपत्रस्य कमलस्य प्रकीर्तितम् ।
अनयैव दिशा चान्यत् स्वयमभ्यूह्य संलिखेत् ॥ २० ॥

(पीठकल्पनप्रकारः)

व्योमरेखा बहिः पीठं तत्र कोष्टानि योजयेत्
त्रीणि कोणेषु पादार्धद्विद्विकान्यपराणि च ॥ २१ ॥

---

१४. b : S. M. चतुर्भिः My. दिगन्तं for कोणदिङ्.
c : S. केसराग्रेषु for विधिनाग्रे तु.
१७. a : My. वि० for तु.
१८. a : My. अन्तेन for अर्धेन.
१९. b : S. My. A. M. पातयेत् for योजयेत्.
c : S. सूत्राणि for पत्राणि.
२०. d : S. My. A. मध्यमन्तु विलोपयेत्.
२१. a ; b ; c ; d : S. My. A. M. om.

चतुर्दिक्षु विक्लृप्तानि गात्राणि च भवन्त्युत ।

(वीथिकल्पनम्)

ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थं तु विलोपयेत् ॥ २२ ॥

(द्वारशोभोपशोभानां कल्पनप्रकारः)

द्वाराण्याशासु कुर्वीत चत्वारि चतसृष्वपि ।
द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः ॥ २३ ॥

तत्पार्श्वे उपशोभास्तु तावत्यः परिकीर्तिताः ।
समीप उपशोभानां कोणास्तु परिकीर्तिताः ॥ २४ ॥

चतुर्दिक्षु ततो द्वे द्वे विलिम्पेन्मध्यकोष्ठके ।
चत्वारि बाह्यतो मृज्यात् एकैकं पार्श्वयोरपि ॥ २५ ॥

शोभार्थं पार्श्वयोस्त्रीणि मिलुम्पेन्मण्डलस्य तु ।
तद्वद्विपर्ययात् कुर्यात् उपशोभास्तः परम् ॥ २६ ॥

कोणस्यान्ते बहिस्त्रीणि विलुम्पेन्निर्विभेदतः ।
द्वारशोभोपशोभानाम् एवं भेदः प्रकीर्तितः ॥ २७ ॥

एतत् षोडशकोष्ठस्य लक्षणं समुदाहृतम् ।

(द्वादशकोष्ठमण्डलस्वरूपम्)

यथा द्वादशभिर्भागैः तत्संक्षेपेण पठ्यते ॥ २८ ॥

---

२२. a ; b ; c ; d : S. My. A. M. om.
२५. a : S. द्वे च M. ०र्ध्वे च for द्वे द्वे.
२६. a : S. My. A. विंशता for शोभार्थं.
b : S. My. A. लुम्पेद्वा for विलुम्पेत्.
२७. a : S. My. M. अन्तः for अन्ते.
b : My. लिम्पेत् for लुम्पेत्.
२८. c : S. My. A. M. यद्वा द्वादशभागैस्तु.
d : S. My. A. M. संक्षेपेण तु पठ्यते.

मध्ये षट्त्रिंशता पद्मं पङ्क्तिरेका तु वीथिका ।
पराभ्यां द्वारशोभे तु पङ्क्तिभ्यां परिकल्पयेत् ॥ २९ ॥
पूर्ववत्परिसम्मार्ज्य द्वारकोष्ठानि मार्जयेत् ॥
अन्तरेकं बहिः पञ्च शोभां शेषैस्तु कल्पयेत् ॥ ३० ॥
पद्मक्षेत्रे तु परितः चतुरङ्गुलमात्रकम् ।
पादगात्रविभेदेन पीठं तत्परिकल्पयेत् ॥ ३१ ॥

(मण्डलमानापेक्षया पद्मप्रमाणनिर्देशः)

द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ।
द्विहस्ते हस्तमात्रं स्यात् द्विहस्तं तु चतुष्करे ॥ ३२ ॥

(भद्रकस्य पीठसहितत्त्वविधानम्)

सर्वं सपीठं कर्तव्यं भद्रकं प्रोक्तलक्षणम् ।

(चक्राब्जमण्डलकल्पनार्थं क्षेत्रविभागः)

आपीठं चतुरश्रं स्याद्द्विकरं चक्रपङ्कजम् ॥ ३३ ॥
पद्मार्थं नवभिः प्रोक्तं नाभिस्तु तिसृभिः क्रमात् ।
अष्टाभिः अरकान् कुर्यात् नेमिं तु चतुरङ्गुलैः ॥ ३४ ॥
मानेऽस्मिंश्चक्रमुद्दिष्टमेकनाभ्येकनेमि च ।
लिखित्वा पूर्ववत्पद्मम्

(चक्राब्जमण्डले अरलेखनप्रकारः)

अरकानथ संलिखेत् ॥ ३५ ॥

---

२९. b : My. A. ०रेखा for ०रेका.
d : S. My. A. पद्मयां च for पङ्क्तिभ्यां.
३०. a ; b ; c ; d : S. My. A. M. om.
३१. a ; b ; c ; d : S. My. A. M. om.
३२. a : S. My. M. पद्मैः for पद्मम्.
d : V. चतुष्टये for चतुष्करे.
३४. a : S. My. V. पद्मार्धं, for पद्मार्थं.
b : S. नवभिस्ति० My. अभितस्ति० for नाभिस्तु ति.

दलतुल्यारके चक्रे दलरेखाः प्रसार्य तु ।
तास्वरांस्तु लिखेद्यत्नात् द्वादशारं यथा भवेत् ॥ ३६ ॥

अष्टपत्रं पुरो लिख्य द्वादशच्छदलक्ष्मवत् ।
त्रिधा विभज्यारक्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत् ॥ ३७ ॥

मत्स्यवत्त्वरसिद्ध्यर्थं तेष्वास्फाल्य लिखेदरान् ।
इन्दीवरदलाकारानथवा मातुलुङ्गवत् ॥ ३८ ॥

पद्मपत्रायतांश्चापि लिखेदिच्छानुरूपतः ।
भ्रामयेदनुमूलं तु सन्धिमध्ये व्यस्थितः ॥ ३९ ॥

अरमध्ये स्थितौ मध्यमराणां भ्रामयेत्समम् ।
एवं सिद्ध्यन्त्यराः सम्यक् मातुलुङ्गनिभाः सदा ॥ ४० ॥

एकनाभेरिदं लक्ष्म

(द्विनाभियुक्तस्य चक्राब्जमण्डलस्य लक्षणम्)

द्विनाभेश्चाथ कथ्यते ।
पञ्चहस्तत्रिभागोनं पञ्चहस्तमथापि वा ॥ ४१ ॥

क्षेत्र षोडशवत् भातु द्व्युत्तर.........दङ्गुलम् ? ।
षट्त्रिंशद्वाथ पद्मार्थं भ्रामयेच्चक्रसिद्धये ॥ ४२ ॥

तच्चतुर्थ्या विभज्यास्स्युः विंशलीकसमोदराः ? ।
तत्रेदं लक्षणं सन्ध्योः सन्धिसूत्राणि पातयेत् ॥ ४३ ॥

अष्टादशानि कोष्ठानि त्रिधा भक्तानि पूर्ववत् ।
द्वाभ्यां द्वाभ्यां तु मूलाग्रे चतुर्भिरुदरं भवेत् ॥ ४४ ॥

---

३७. a : S. My. A. अष्टपत्राम्बुजे लिख्य.
३८. b : S. A. M. आलिख्य for आस्फाल्य.
c ; d : S. My. A. M. om.
३९. ४०. ४१. ४२. ४३. a ; b : S. My. A. M. om.
४४. b : S. A. M. भक्तेतु for भक्तानि.
d : S. कुरवं A. क्रूरदं for उदरं.

अरस्य सन्धेरुद्दिष्टं तद्विपर्ययलक्षणम् ।
नाभौ पद्मं लिखेद्विद्वान् वीथिद्वाराणि पूर्ववत् ॥ ४५ ॥

एवं मण्डलविस्तारः संक्षेपात् परिकीर्तितः ।

(मण्डलवर्णन्यासविवेकः)

रजसा पूरयेत्पश्चात् वर्णन्यासस्तु कथ्यते ॥ ४६ ॥

कर्णिका पीतवर्णा स्यात् रेखाः सर्वाः सिताः समाः ।
द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते मध्यमया मिता ॥ ४७ ॥

तत्पादेन तदर्धे स्युः पद्मं शुक्लेन पूरयेत् ।
श्यामेन वाथ कृष्णेन दलसन्धींस्तु पूरयेत् ॥ ४८ ॥

केसरास्तु तले मूले सिताः स्युः पृथवोरुणाः ।
मध्ये चाग्रे तथा पीताः तदग्रे सितभूषणाः ॥ ४९ ।

वर्णश्रेष्ठेन रक्तेन कोणान् सम्पूर्य साधकः।
भूषयेद्योगपीठं तु यथेष्टं सर्ववर्णकैः ॥ ५० ॥

लतावितानपत्राद्यैर्वीथिकाम् उपशोभयेत् ।
पीतेनापूर्य रजसा द्वारं शुक्लेन पूरयेत् ॥ ५१ ॥

रक्तेन शोभामापाद्य पीतेनाप्युपशोभिकाः ।
नीलेन कोणान् संच्छाद्य लिखेच्छङ्खान् समुज्ज्वलान् ॥ ५२ ॥

---

४५. c : My. धीमान् for विद्वान्.

४६. d : S. विन्यासस्तस्य कथ्यते.

४७. a : S. कर्णिसं My. M. कर्णिनं for कर्णिका.
d : S. My. M. मध्ये हस्तमया मिता.

४८. d : S. संख्याः for सन्धीं०.

५०. b : S. My. A. M. कोणान् सम्पूरयेत्ततः.
c : S. M. पूजयेत् for भूषयेत्.

५२. b : S. A. अभि for अपि.

भद्रकस्य विनिर्दिष्टमेवमेवोत्तरेष्वपि ।

(द्विनाभ्यादिमण्डलवर्णन्यासक्रमः)

द्विनाभौ रक्तपीताभ्यामेकस्मिन्नरुणेन तु ॥ ५३ ॥

त्रिनाभौ पीतरक्तेन कृष्णेन च विभूषयेत् ।
वर्णैः सितारुणैः श्यामैररकान् पूरयेत्क्रमात् ॥ ५४ ॥

अन्तर्गोरोचनाभास्तु सर्वेऽरास्तु समुज्वलाः ।
पूरयित्वारसन्धींस्तु पुष्पैर्यद्वाथ वर्णकैः ॥ ५५ ॥

एकनेमौ द्विजश्रेष्ठ मध्यं कृष्णेन पूरयेत् ।
द्विनेमौ रक्तकृष्णेन पीतरक्तेन चोज्वलम् ॥ ५६ ॥

त्रिनेमौ तद्द्विजश्रेष्ठ एवमेव तु पूरयेत् ।

(मण्डलबहिरावरणरेखाकल्पननिरूपणम्)

त्रिरेखं चतुरेखं वा पञ्चरेखमथापि वा ॥ ५७ ॥

त्रिरेखे शुक्लतो रक्तं कृष्णेनैव गुणत्रयम् ।
सितरक्तान् सितपीतांश्च चतुर्वर्णं तु मण्डले ॥ ५८ ॥

सितश्यामारुणैः कृष्णपीताभ्यां पञ्चरेखके ।

(मण्डलवर्णन्यासार्थं वर्णोपादानद्रव्यनिर्देशः)

शालिपिष्टं सितं प्रोक्तं कौसुम्भं रक्तकं भवेत् ॥ ५९ ॥

हारिद्रं पीतमुद्दिष्टमीषच्छुक्लेन संयुतम् ।
व्रीहिभिः पुटदग्धैस्तु कृष्णं चैवोज्वलं रजः ॥ ६० ॥

---

५३. b : My. अन्तरेषु for उत्तरेषु.

५६. a : V. नेमिं पीतारुणाभ्यां तु.
d : S. चासितम् My. वासितम् for चोज्वलम्.

५८. a : S. M. त्रिरेखं for त्रिरेखे.
c : V. सितरक्तान् तथा पीतान्.

५९. c : V. ०पिण्डं for ०पिष्टं.

श्यामं श्यामच्छदैः कुर्याद् याज्ञिके रज उज्वलम् ।

(मण्डलार्चने देवतास्थाननिर्देशः)

विशेषमधुना वक्ष्ये मण्डलार्चनकर्मणि ॥ ६१ ॥

गरुडं द्वारयोर्न्यस्य पूर्वपश्चिमसंस्थयोः ।

दक्षिणे हेतिराजं तु सहस्रारं तु पूजयेत् ॥ ६२ ॥

उत्तरे तु गदा पूज्या देवशक्तिरनूपमा ।

आग्नेयादिषु कोणेषु पाञ्चजन्यं तु पूजयेत् ॥ ६३ ॥

देवस्य वामभागे तु शार्ङ्गं च धनुरुत्तमम् ।

इषुधिं दक्षिणे न्यस्य देवदेवस्य शोभने ॥ ६४ ॥

तत्रैव पूजयेद्विप्र असिं देवारिसूदनम् ।

वामतः खेटकं तस्य समवृत्तं सुशोभनम् ॥ ६५ ॥

वनमालां न्यसेदग्रे रथ्यायाम् ऋषिसत्तम ।

न्यसेद्द्वादशपत्रेषु द्वादशाङ्गान्यनुक्रमात् ॥ ६६ ॥

कर्णिकायां न्यसेद्देवं द्वादशान्तर्गतं विभुम् ।

श्रियं दक्षिणतस्तस्य पुष्टिमुत्तरतो न्यसेत् ॥ ६७ ॥

विन्यसेद्वनमालायाः उत्तरे दक्षिणे तथा ।

श्रीवत्सं कौस्तुभं चैव दिक्पालान् मण्डलाद्बहिः ॥ ६८ ॥

---

६१. d : S. My. A. M. समाराधनकर्मणि.
६३. c : A. M. S. आग्नेयां दिशि कोणे तु.
६५. c : S. My. A. M. तत्र for तस्य.
d : S. My. A. M. सुसंवृत्त सुशोभनम्.
६६. c ; d : S. My. A. M. om.
६७. a ; b : S. My. A. M. om.
d : My. A. M. दले for न्यसेत्.

पूर्वादिवीथिषु प्राज्ञः प्रकृत्यादीनि विन्यसेत् ।
अधरोत्तरसंस्थेषु तत्त्वानि क्रमयोगतः ॥ ६९ ॥

सूर्यं द्वादशधा भक्तमरान्ते विनियोजयेत् ।
धातार्यमा विधाता च मित्रश्च वरुणो भगः ॥ ७० ॥

इन्द्रो विवस्वान् सविता पूषा त्वष्टा तथैव च ।
विष्णुश्च द्वादशैते तु पूजनीयाः यथाक्रमम् ॥ ७१ ॥

सोमं सर्वकलाभिस्तु शुक्लेतरविभागतः ।
विभक्तं मन्त्ररूपाभिः एकैकस्मिंस्तु मध्यमे ॥ ७२ ॥

दैवभागे ह्यरक्षेत्रे विष्ण्वाद्या द्वादशैव तु ।
नाभौ वाथ समाख्याता ईशानब्रह्मविष्णवः ॥ ७३ ॥

(मण्डलदेवतार्चनमन्त्रः)

एषां मन्त्राः स्वनाम्नैव नत्यन्तेन द्विजोत्तम ॥

(मण्डलविनियोगावसरविवेकः)

एतेषु मण्डलेष्वेकं दीक्षायां तु यथारुचि ॥ ७४ ॥
प्रतिष्ठायां तथा ब्रह्मन् शान्तिके पौष्टिके तथा ॥
प्रायश्चित्ते तु चक्राब्जमाभिचारे तथैव च ॥ ७५ ॥
व्याध्यनिष्टविनाशाय भद्रकं तु विधीयते ॥

(पवित्रारोहणे मण्डलार्चनक्रमः)

पवित्रारोहणे कुर्यात् चक्राब्जं भद्रकं तु वा ॥ ७६ ॥

---

६९. a. My. V. पथि for वीथि०.
c : S. A. तु for ०षु.
७०. c : My. V. च मित्रश्च for विधाता च.
d : My. V. वरुणेनौ भगस्तथा.
७२. c : A. विभक्त्यन्त्यधिरूपाभिः.
d : My. ०तः for ०मे.

एकबेरविधाने तु मण्डलं केवलं यजेत् ॥
बहुबेरविधाने तु विशेषमधुनोच्यते ॥ ७७ ॥
न्यस्य मण्डलमध्ये तु पूर्वस्यां प्रतिमां शुभाम् ॥
विना स्थानं समाराध्य भागैः कालानुकूलतः ॥ ७८ ॥
तस्यां पवित्राण्यारोप्य सर्वान् कामानवाप्नुयात् ।

(पुष्पयागे मण्डलार्चनक्रमः)

पुष्पयागे तु चक्राब्जं मण्डलं विहितं त्विदम् ॥ ७९ ॥
तत्तद्वर्णैस्तु कुसुमैः दद्भिर्वा पूरयेच्छुभैः ॥
सर्वत्र पुष्पयागे तु मण्डलं पुष्पसंयुतम् ॥ ८० ॥
पूजयेत् पूर्ववद्भक्त्या तीर्थयात्रा ततः परम् ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां मण्डललक्षणविधानं
नाम अष्टमोऽध्यायः

---

७८. d : S. My. M. कालानुसारतः for कालानुकूलतः.
८०. d : S. A. M. V. बिम्ब for पुष्प.

# नवमोऽध्यायः

## [दीक्षाविधिनिरूपणाध्यायः]

(दीक्षाविधिनिरूपणार्थं नारदं प्रति गौतमस्य प्रार्थना)

**गौतम :—**

दीक्षाविधानमाचक्ष्व येन सिद्धिरवाप्यते ।
शृण्वतो येन तृप्तिः स्यात् ततो देव मुनीश्वर ॥ १ ॥

(दीक्षार्थं शिष्यदेहे सृष्टिलयकल्पनक्रमः)

**नारद :—**

एवं तु मण्डलं कृत्वा चक्राब्जं भद्रकं तु वा ।
तत्रेशं परया भक्त्या गन्धपुष्पैः मनोरमैः ॥ २ ॥

प्रवालमुक्ताभरणैः हेमपुष्पैः समुज्वलैः ।
तथा निवेद्यैः विविधैः प्रभूतैराज्यसंयुतैः ॥ ३ ॥

इष्ट्वैवमच्युतं सम्यक् तथा सन्तर्प्य पावकम् ।
तत आहूय सच्छिष्यान् दीक्षयेद्देशिकोत्तमः ॥ ४ ॥

देवं सम्पूजयित्वा तान् बद्धपद्मासनस्थितान् ।
सम्प्रोक्ष्य विष्णुहस्तेन मूर्धानं संस्पृशेत् क्रमात् ॥ ५ ॥

---

अध्यायस्य प्रारंभे A. कोषे-'श्रीरस्तु अविघ्नमस्तु' इत्यधिकः पाठः।

१. c : S. My. A. M. मे न for येन ; S. My. om नारदः.

२. a : A. om मण्डलम्.
   b : S. My. A. पद्मकं for भद्रकम्.
   d : V. मनोहरैः for मनोरमैः.

३. d : A. पायसैः for प्रभूतैः.

४. c : V. क्रमादाहूय सच्छिष्यान्.
   d : S. My. A. शिक्ष for दीक्ष.

५. d : S. My. A. M. तद्गुत्थानं स्पृशक्रेमात्.

प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैविकाम् ।
सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत् क्रमात् ॥ ६ ॥
तन्मात्रभूतां सकलां जीवेन समतां गताम् ।

(सृष्टीशादिहोमक्रमः)

अग्नेः समीपमागत्य पार्श्वे तान् सन्निवेश्य च ॥ ७ ॥
'मूल'मन्त्रेण सृष्टीशमाहुतीनां शतेन तु ।
उदासीनमथापाद्य पूर्णाहुत्या तु देशिकः ॥ ८ ॥
शुक्लं रजः समादाय 'मूले'न शतमन्त्रितम् ।
समुद्धृत्य 'हृद'न्तेन हुंफट्कारान्तसंयुतैः ॥ ९ ॥
वियोगपदसंयुक्तविविधैस्तत्त्वनामभिः ।
पृथिव्यादीनि तत्त्वानि विश्लेष्य जुहुयात्ततः ॥ १० ॥
वह्नावखिलतत्त्वानाम् आलयेऽप्याकृतौ यथा ।
लीयमानं क्रमात् सर्वतत्त्वाधानं स्मरेत्ततः ॥ ११ ॥

---

६. b : My. A. M. आधि० for साधि०.
c : S. My. दृष्टि० for सृष्टि०.
d : S. My. A. M. संस्मरेत् for संहरेत्.
७. d : V. तं for तान्, S. My. A. तु for च.
९. a : M. यजुः for रजः.
c : S. M. सन्तर्प्य हृदयं तेन ; My. A. सप्तव्याहृदयं तेन.
d : S. स्वं M. स० for हुं ; V. संयुतम् for संयुतैः.
१०. c : S. A. My. M. विश्लेष्य for तत्त्वानि.
d : S. M. गत्वा A. तत्त्वानि for विश्लेष्य.
११. a : V. वह्नौ निखिल for वह्नावखिल.
b : V. लघदव्याकृते हरौ ; S. M. प्राकृतौ for ०प्याकृतौ.
c : S. My. A. सर्वं for सर्व.
d : S. My. A. M. तत्त्वानां संस्मरेत्ततः.

ताडनेन वियुक्ते तु आदाय जुहुयाद्गुरुः ।
शुद्धं ततः समुद्धृत्य पूर्णाहुत्या च देशिकः ॥ १२ ॥

साधयेद्धि परे तत्त्वे यावदव्याकृतं क्रमात् ।
तत्परं ज्ञानयोगेन विलाप्य परमात्मनि ॥ १३ ॥

विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे ।
निर्वृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः ॥ १४ ॥

दद्यात् पूर्णाहुतिं पश्चादेवं होमक्रमः स्मृतः ।

(तत्त्वशोधनक्रमः)

तत्त्वहोमं प्रवक्ष्यामि मन्त्रहोमसमन्वितम् ॥ १५ ॥

यकारे गन्धतन्मात्रं पृथिव्या सह शोधयेत् ।
अपस्तु रसतन्मात्रं वाकारेण विशोधयेत् ॥ १६ ॥

देकारेण तथा तेजो रूपतन्मात्रमेव च ।
सुकारेण तथा वायुं स्पर्शतन्मात्रमेव च ॥ १७ ॥

शब्दतन्मात्रसहितं वाकारे व्योम एव च ।
बुद्धीन्द्रियाणि विप्रेन्द्र तथा कर्मेन्द्रियाणि च ॥ १८ ॥

---

१२. a : S. My. तदनेन वियुक्ते तु, A. M. तदनेय वियुक्ते ते.
c : S. M. गन्धं for शुद्धम्.
d : S. My. A. तु for च.

१३. a : S. My. A. M. सिद्धये विपरीतत्वे.
b : S. My. M. यावदुव्यां कृतं क्रमात्.

१४. c : S. A. M. निवृत्तं परमात्मानं.
d : S. My. A. M. देह for शुद्धे ; My. A. M. स्तरेत् for स्मरेत्.

१५. b : S. My. A. M. ततः for स्मृतः.

१६. b : My. योजयेत् for शोधयेत्.

१७. a : V. द० for दे०.
b : S. My. M. एव for ०मेव.

तेकारमादितः कृत्वा मकारान्तं विशोधयेत् ।
अहंकारं तथा बुद्धिं मनश्चैवोभयात्मकम् ॥ १९ ॥

नकारेण द्विजश्रेष्ठ होमयेच्च विचक्षणः ।

(तत्त्वविभागपूर्वकं क्षेत्रक्षेत्रज्ञवर्णनम् तद्बुद्धिविषयत्वे
द्वादशाक्षरतत्त्वस्य कारणत्वञ्च)

एतत् क्षेत्रं विनिर्दिष्टं भोगायतनमेव च ॥ २० ॥
पदं चतुर्विंशतिकमेकत्रिगुणमुच्यते ।
तामसः कारणं विप्र तद्गुरुर्जपतः पशोः ॥ २१ ॥
राजसस्तु परिज्ञेयः तत्रस्थः पञ्चविंशकः ।
गुणभोक्ता स विज्ञेयः क्षेत्रज्ञश्च निगद्यते ॥ २२ ॥
द्वादशं यत्परं तत्त्वं मन्त्रेऽस्मिन् द्वादशाक्षरे ।
तेनासौ बुद्धिमायाति ग[ब ?]न्धपाशं च यत्स्फुटम् ॥ २३ ॥

(सत्त्वस्थपुरुषस्य वासुदेवस्य लक्षणम्)

सत्त्वस्थः पुरुषो ह्यन्यः शुद्धश्चात्मनि संस्थितः
षड्विंशः स विज्ञेयः बहिरन्तश्च संस्थितः ॥ २४ ॥
द्वादशान्तर्गतः सूक्ष्मो वासुदेवः परः शिवः ।
सर्वकारणभूतस्तु सर्वशक्तिकलात्मकः ॥ २५ ॥
स देवः सर्वगः शान्तः कलात्मा पुरुषोत्तमः ।
सर्वव्यापिपरो विष्णुः वासुदेवो निरञ्जनः ॥ २६ ॥

---

१९. a : S. प्रकारमण्डितं कृत्वा, A. M. हेकार for तेकार.
२०. d : A. होमा० for भोगा.
२१. a : My. A. पादं for पदं.
c : My. A. ततः स्म M. तमस्क for तामसः.
d : S. My. A. M. मद्गुरुभवते पशो.
२३. c : M. सिद्धि for बुद्धि०.
d : S. My. वासं for पाशं.

(निर्वाणाख्यवासुदेवपदे लीनस्य शुद्धदेहस्य पशुत्वालाभः शुद्धदेहत्वे कारणञ्च)

तत्र युक्तः परे शान्ते वासुदेवपदे द्विजः ।
न भूयः पशुतामेति दग्धबीजं यथाङ्कुरम् ॥ २७ ॥

स शिष्यः शुद्धदेहस्तु तत्त्वहोमेन जायते ।
निर्वाणाख्ये पदे लीनो न पुनर्जायते पशुः ॥ २८ ॥

(तत्त्वहोमसंख्याविवेकः)

एकैकस्य तु तत्त्वस्य आहुतीनां शतं शतम् ।
अष्टोत्तरं तथा हुत्वा दद्यात्पूर्णाहुतिं ततः ॥ २९ ॥

पूर्णाहुतिं द्वादशकं दद्यात् शिष्यस्य सन्निधौ ॥
हुत्वा धारामविच्छिन्नां होमान्ते होमयेत्पुनः ॥ ३० ॥

हुत्वा तु समयज्ञैश्च साधकैः पुत्रकैः सह ।
अच्छिद्रं तु पदे पश्चात् गुरुः सर्वैः समागतैः ॥ ३१ ॥

तत्त्वहोमं विधायैवमाचार्यः शिष्यसन्निधौ ।

(प्रतितत्त्वं पाशच्छेदशोधनयोः अन्ते ब्रह्मणि योजनस्य विधानम्)

पार्थिवं तत्त्वमारभ्य यावत्तत्त्वं निरामयम् ॥ ३२ ॥

---

२७. a : V. अत्र for तत्र.
d : S. समा० for यथा.
२९. c : S. तदा for तथा.
३०. c : S. My. A. M. अथाज्यानां for अविच्छिन्नाम्.
३१. a : S. समयैश्चैष My. M. समयैश्चैव for समयज्ञैश्च.
b : My. पुरुषैः M. My. पात्रकैः for पुत्रकैः.
c : S. My. A. अच्छिद्र for अच्छिद्रम्.
d : S. My. A. M. गुरुभिस्तु for गुरुस्सर्वैः.

पाशच्छेदं क्रमात् कुर्यात् तत्त्वे तत्त्वे विशोधिते ।
तथा चाग्रे चरेत् शक्त्या योजयित्वा तु तत्त्वतः ॥ ३३ ॥

तत्त्वे तत्त्वे तु निक्षिप्य तत्त्वं तत्त्वं समुद्धरेत् ।
पश्चान्नियोजयेत् योगी निरालम्बे पदे शुभे ॥ ३४ ॥

निष्प्रपञ्चे निराभासे निष्क्रिये शाश्वते ध्रुवे ।
परे ब्रह्मणि विप्रेन्द्र सर्वकारणकारणे ॥ ३५ ॥

(शिखाच्छेदस्य भावः स्वरूपं च)

शिखाच्छेदं ततः कृत्वा ज्ञानशस्त्रेण तत्त्ववित् ।
अज्ञानं तु शिखा प्रोक्ता न तु केशमयी शिखा ॥ ३६ ॥

कुशैस्तु कल्पयित्वा तां छित्वा 'शस्त्रे'ण होमयेत् ।
शिखाच्छेदो भवेदेवं शिष्यस्य गुरुणा कृतः ॥ ३७ ॥

[हुत्वा धारामविच्छिन्नां होमान्ते होमयेत् पुनः ।
हुत्वा तु समयज्ञैश्च साधकैः पुत्रकैः सह ॥]

पूर्णाहुतिं विधायाथ वर्णार्घ्वं होमयेत्ततः ।

(वर्णाध्ववर्णनम्)

कादिमान्ताश्च ये वर्णाः पञ्चविंशत् प्रकीर्तिताः ॥ ३८ ॥

---

३३. c : S. My. A. M. तथा च गोपुरे शक्त्या.
d : S. My. A. M. ततः पुनः for तु तत्त्वतः.

३४. c : V. ०योम्नि for योगी.
d : V. परे for पदे.

३५. b : S. M. निर्णये for निष्क्रिये.

३६. a : V. कुर्यात् for कृत्वा ;

३८. b : S. वर्णार्थे My. A. वर्णार्थं for वर्णार्घ्वं.
d : S. My. A. M. ०विंशा for विंशत्.

तच्छरीरं समाख्यातं मु[पु?]द्गलस्य न संशयः ।
चटवर्गौ स्मृतौ तस्य एकस्य दशके गुणे ॥ ३९ ॥
तन्मात्राणि तवर्गस्तु पवर्गो वायवस्तथा ।
प्राणाद्याः व्यानपर्यन्ताः पञ्चदेहस्य पालकाः ॥ ४० ॥
यकाराद्यास्तु ये वर्णाः अन्तः करणसंज्ञिताः ।
मनोबुद्धिरहंकारः प्रधानं च द्विजोत्तम ॥ ४१ ॥
शकारादिक्षकारान्ता ऊर्मिषट्के स्थिता त्वमी ।
अकारस्तु समाख्यातः आकारः काल उच्यते ॥ ४२ ॥
धर्माधर्मविकारस्तु ईकारो जाति संज्ञितः ।
उकारश्च तथा नाम ऊकारो जातिसंज्ञकः ॥ ४३ ॥
कामः क्रोधस्तथा लोभो मोहो रागस्तथैव च ।
मायापिशुनभावश्च स्वरेष्वन्येषु वी[वो?]भयोः ॥ ४४ ॥
ककारादिक्षकारान्ताः वर्णाः देवस्य वै तनु ।
वर्णाध्वा वै समाख्यातो

(भुवनाध्ववर्णनप्रतिज्ञा)

भुवनाध्वा प्रकीर्त्यते ॥ ४५ ॥

---

३९. b : S. उद्गलस्य for मुद्गलस्य.
c ; d : V. om ; My. स्मृतः for स्मृतौ.
d : A गणे for गुणे.
४०. a : V. om ; S. तन्मात्राणां for तन्मात्राणि.
b ; c : V. om.
d : S. देहस्थ for देहस्य.
४२. b : My. ऊर्मिपङ्क्ते for ऊर्मिषट्के.
४३. a : S. धर्माधर्मादिका वस्तु.
b : S. M. A. संज्ञकः for संज्ञितः.
d : My. संज्ञितः for संज्ञकः.
४४. d : A. वीचिभोः for वीभयो.

अप्रमाणानि तत्त्वानि यैर्व्याप्तं सचराचरम् ।

(स्थूलतः पञ्चतत्त्वानां परिगणनादिकम्)

पृथिवी वायुराकाश आपोज्योतिश्च पञ्चमम् ॥ ४६ ॥

अनन्ताधारतः सर्वे व्यापकाः परिकीर्तिताः ।

(स्थूलतः पृथिव्यादिपञ्चभूतवर्णनम्)

अनन्ता पृथिवी देवी सर्वसत्त्वधरा धरा ॥ ४७ ॥

नाना जनपदाकीर्णा नैकाधिष्ठानपत्तना ।
नाना नदनदीशैला नैकजातिशतावृता ॥ ४८ ॥

आपोऽनन्तास्तथा सर्वा नदीनदसमुद्रगाः ।
पर्वताकारसंस्थाश्च अन्तर्भूमिगताश्च याः ॥ ४९ ॥

अनन्तः पठ्यतेऽग्निस्तु व्यापकः सर्वसंभवः ।
तथा वायुश्च सम्प्रोक्तो व्यापकः सर्वगस्तथा ॥ ५० ॥

आकाशमप्यनालम्बं नाना संश्रयसंस्थितम् ।

(भूतेषु वासुदेवस्य स्थित्यादिवर्णनम्)

एवं भूतविभागेन वासुदेवो व्यवस्थितः ॥ ५१ ॥

भूमिरापोऽग्निवायू च वियत्तत्त्वं परस्परम् ।
संस्थाने संस्थितिस्तेषाम्

(पातालस्य सप्ततलानां नामकीर्तनम्)

सप्तमेऽस्मिन् रसातले ॥ ५२ ॥

---

४७. a : S. अनन्त for अनन्ता ; A. अनन्तायारतः सर्वे.
४९. d : My. अन्तस्तूभय चोच्चयम्.
५०. a : My. पर्वतो for पठ्यते.
b : S. My. A. M. पावकः for व्यापकः.
५२. b : My. विविक्ततत्वम् for वियत्तत्त्वम्.

आभासं परतालं च नितलं सगभस्तिमत् ।
महातलं च सुतलं सप्तमं तु रसातलम् ॥ ५३ ॥

(पातालस्य सामान्यवर्णनम्)

त्रिखण्डं सर्वमुक्तं हि पातालं तेजसावृतम् ।

(अनन्तस्य स्थाननिर्देशः)

हृत्पद्मावस्थितोऽनन्तः सर्वव्यापी परः पुमान् ॥ ५४ ॥
सुशक्ताधारभूतस्तु देवः सङ्कर्षणात् परः ।

(सङ्कर्षणस्य स्थानम्)

तस्योर्ध्वं भगवान् कालः कालः सङ्कर्षणो विभुः ॥ ५५ ॥

(कालरुद्राणां स्थित्यादिवर्णनम्)

सङ्कर्षणांशजास्त्वन्ये दशदिक्षु व्यवस्थिताः ।
रुद्रास्ते कालरुद्राद्याः रुद्रकोटिसमावृताः ॥ ५६ ॥
ज्वालामालापरिक्षिप्ताः कालवह्निस्वरूपिणः ।
तदूर्ध्वं तु निरालम्बाः दशपञ्च च कोटयः ॥ ५७ ॥

(नरकाणां स्थितिः संख्यादिश्च)

तेषामूर्ध्वे महाघोराः नरकाः यातनालयाः ।
चत्वारिंशच्च नरकाः शतं चैव तु संख्यया ॥ ५८ ॥
तेषां चैव तु राजानो द्वात्रिंशन्नरकाः स्थिताः ।
रौरवस्योर्ध्वगाः सर्वे अवीचेरव्यवस्थिताः ॥ ५९ ॥

---

५३. b : S. सुतलं for नितलम्.
५५. a : My. त्रिजमालतम् for सुशक्ता.
d : My. ०णाभिघः S. ०णोविधिः for ०णो विभुः ।
५७. a : S. ०क्षिप्ता for क्षिप्ताः.
c : S. M. त्वनिरालम्ब My. च तिरोलम्ब for तु निरालम्बाः.
५८. b : My. नरकायतनालयाः.
५९. b : My. A. M. om द्वात्रिंशत्.

एकलक्षोच्छ्रिताः सर्वे कुम्भीपाकस्तु मध्यमः ।
रौरवोतिकूरुश्चैव तम......होपमत् ? ॥ ६० ॥

उष्णतातपसंतापकमलाख्यातिदुस्तरः ।
कम्पिनी नीलसूत्रं च सूच्यग्रः [क्षुत्पिपासकः ?] ॥६१॥

खड्गतालवनश्चोग्रः कुम्भीपाकश्च मध्यमः
तदूर्ध्वमम्बरीषश्च तप्ताङ्गारस्तदन्ततः ॥ ६२ ॥

तप्तलाक्षारसश्चैव लालापङ्कश्च भीषणः ।
त्रपुलीलः पलाशश्च उच्छ्वासश्च परः स्मृतः ॥ ६३ ॥

निरुच्छ्वासो युग्मवहो धाराधारोऽतिदुस्तरः ।
शाल्मली क्षुत्पिपासा च क्रिमीणां निचयस्तथा ॥ ६४ ॥

लोहस्तम्भोऽग्निचूर्णश्च तथा वैतरणी नदी ।
अवीचिरूर्ध्वगतस्तेषां चतुर्भेदेन ते स्थिताः ॥ ६५ ॥

योजनैरन्तरं ख्यातं लक्षयोजनसंख्यया ।
राजराजेश्वराणां तु विविधं कथितं तव ॥ ६६ ॥

(कुष्माण्डस्य स्थितिः)

त्रिगुणेनायुतेनोर्ध्वं कुष्माण्डभवनं भवेत् ।
दिव्यभोगायनं दिव्यं दिव्यस्त्रीभिर्विभूषितम् ॥ ६७ ॥

---

६०. b : S. My. A. M. ०पाकञ्च for ०पाकस्तु.
६१. S. My. A. M. om.
६२. a ; b : S. My. A. M. om.
d : My. A. तटं ततः for तदन्ततः.
६३. c : S. My. रुद्रदीपः for त्रपुलीलः.
६४. V. om.
६५. a : V. om. S. कोटि for लोह.
६७. a : S. My. A. M. अर्धं for ऊर्ध्वं.
d : S. My. M. सुभूषितं for विभूषितं.

(पातालसप्तकानां स्थितिः तेषां खण्डाश्च)

नवलक्षान्तरेणोर्ध्वं स्थितं पातालसप्तकम् ।
त्रिखण्डं कथितं पूर्वमेकैकं तु जनाश्रितम् ॥ ६८ ॥

(पाताले प्रथमादिखण्डनिवासिनः)

प्रथमे दानवावासो नागाश्चैव द्वितीयके ।
राक्षसाश्चापरे भागे निवसन्ति न दुःखिताः ॥ ६९ ॥

(आभासनिवासिवर्णनम्)

आभासे सङ्कुकर्णस्य निवासो हाटकोपमे ।
क्रूरनागासुरास्तत्र वसन्ति दिव्यभोगिनः ॥ ७० ॥
अनन्तगुलिकाद्यास्तु नागकन्यासमावृताः ।
विकटः शूलदन्तश्च लोहिताक्षादयो परे ॥ ७१ ॥
राक्षसीभिः सहोपेताः निवसन्ति बलान्विताः ।

(परतालस्थप्रथमखण्डस्य वर्णनम्)

योजनानां सहस्राणि दशचोर्ध्वं निरालयम् ॥ ७२ ॥
परतालं स्थितं चोर्ध्वं पद्मरागधरातलम् ।
प्रह्लादश्च इलादश्च वह्निजिह्वादयस्तथा ॥ ७३ ॥
दिव्यस्त्रीभोगसम्पन्ना आसुरीभिः समावृताः ।

(परतालस्थद्वितीयखण्डस्य वर्णनम्)

द्वितीये वासुकिश्चैव शङ्खपालस्तथा स्थितः ॥ ७४ ॥

---

६९. a : V. प्रथमः for प्रथमे.
b : V. द्वितीयकः for द्वितीयके.
c : S. चातुरे for चापरे.
d : स for न.
७०. d : S. V. M. दिवि for दिव्य.
७१. c : S. My. A. शील० for शूल०.
७२. a : My. V. समोपेता for सहोपेताः.

नागकन्यासमायुक्ताः धृतराष्ट्रादयोऽपरे ।

(परतालतृतीयखण्डवर्णनम्)

विद्युन्माली तृतीये तु ताम्रजिह्वस्तथापरः ॥ ७५ ॥

राक्षसीभिस्तथा सार्धं हिरण्याक्षादयस्तथा ।

(नितलस्य वर्णनम्)

इन्द्रनीलधरापृष्ठं नितलं तु ततः परम् ॥ ७६ ॥

तत्र खण्डे प्रथमके शिंशुमाराण्डकादयः ।
करकश्चातुलोपेताः दानवाः निवसन्ति हि ॥ ७७ ॥

द्वितीये तु स्थिताः नागाः कम्बलाश्वतरादयः ।
यमदंष्ट्रोग्रदंष्ट्रौ च विषलाभश्च भीषणः ॥ ७८ ॥

राक्षसाः भोगसम्पन्नाः स्त्रीसहस्रसमावृताः ।

(गभस्तिमत्तलस्य वर्णनम्)

गभस्तिमच्चतुर्थं तु पातालं पुष्पभूषितम् ॥ ७९ ॥

महिषादयस्तु प्रथमे तत्र खण्डे वसन्ति हि ।
कार्कोटकः पद्मरागो खण्डकश्च फलासनः ॥ ८० ॥

मध्यखण्डे वसन्त्येते तृतीये तु निबोध मे ।
महोदरो महाकायः तथा चैव महोत्कटः ॥ ८१ ॥

---

७५. c : My. A. M. विद्यामाली for विद्युन्माली.
d : S. My. A. M. परे for परः.
७६. d : S. A. M. सुतलं for नितलम्.
७७. c : A. M. V. करकश्चापलोपेताः.
७८. c : V. यमदंष्ट्रानुदंष्ट्रौ च.
८०. d : S. My. A. M. फलाशकः for फलासनः.
८१. a : My. खण्डे वसाने for खण्डे वसन्त्येते.

दिव्यदेहाः महाकायाः दानवाः निवसन्ति हि ।

(महातलवर्णनम्)

महातलं तथा चाम्यं भवेत्तद्युग्मभूषितम् ? ॥ ८२ ॥
धनञ्जयसुकालाद्याः पूर्वखण्डे तु दानवाः ।
अणिमत्तीक्ष्णजिह्वाद्याः काद्रवेयाः द्वितीयके ॥ ८३ ॥
ज्वालास्यः पद्मनो गुह्यः तृतीये राक्षसास्तथा ।

(त्रिखण्डयुक्तस्य सुतलस्य वर्णनम्)

सुतलं नाम तस्योर्ध्वं सर्वरत्नमयं भवेत् ॥ ८४ ॥
तत्राद्ये तु वसेत्खण्डे दैत्यः शङ्खोदरः प्रभुः ।
द्वितीये नागराजो वै श्वेतभद्रो महोरगः ॥ ८५ ॥
सुदर्शनो दुर्मुखश्च तथान्ये तु महाबलाः ।
मेघनादो महाभागो भीमो भीमबलो परः ॥ ८६ ॥
तिष्ठन्त्येतैश्च संयुक्ताः तृतीये राक्षसास्तथा ॥

(रसातलस्थितिः तस्य स्वरूपं तत्खण्डत्रयवर्णनञ्च)

सप्तपञ्चोपरिष्टात्तु भुवनं बहुभिः स्थितम् ॥ ८७ ॥
मुक्ताभूमितलं दिव्यं कथितं तु रसातलम् ।
दीर्घिकोद्यानपुष्पाढ्यं हेमप्राकारशोभितम् ॥ ८८ ॥

---

८२. a ; b : S. महातलंह्य विभूषितम् ; My. A. M. महातले पञ्च तद्विभूषितम्
८३. c : V. अणिमन्नीक्षजिह्वाभ्याम्.
८४. a : M. V. ज्वालास्या for ज्वालास्यः, M. V. ग्राह्या for गुह्य.
b : S. My. A. M. स्थिता for तथा.
८५. a : S. My. A. M. प्रथमे निवसेत् खण्डे.
b : S. My. A. M. धन्यः for दैत्यः.
८६. a : A. दुर्मदः for दुर्मुखः.
c : S. महाबाहो V. महाभावो for महाभागो.
८७. d : S. My. A. M. भवद्भिः for भुवनम्.
८८. d : S. My. A. M. तोरणं for शोभितम्.

तत्र सिद्धास्तथा नागाः निवसन्ति महर्द्धिकाः ।
तत्रास्ते सालवन्ध्योत्र दिव्यस्त्रीपरिवारितः ॥ ८९ ॥

तक्षकश्च महानागो बहुनागसमावृतः ।
अपरे राक्षसाः भागे लोहिताक्षादयः स्थिताः ॥ ९० ॥

तस्योर्ध्वे हाटकाख्यस्य रुद्रस्यायतनं भवेत् ।
ये हताः दानवाः दृप्ताः विष्णुना प्रभविष्णुना ॥ ९१ ॥

तेषां तु प्रमदाः दिव्याः रूपयौवनगर्विताः ।
हटकाय प्रदत्तास्ताः स्वयं देवेन विष्णुना ९२ ॥

सङ्कर्षणेन स्वांशाय भोगार्थं च पुनः कृताः ।
गीतनृत्तादिभिर्देवमुपासन्ते मदोद्धताः ॥ ९३ ॥

तत्पद्महेमरत्नाढ्यं दिव्यस्त्रीभोगभूषितम् ।
नियमव्रतसंयुक्ताः मन्त्रसाधनतत्पराः ॥ ९४ ॥

साधकाः भगवद्भक्ताः गुरुदेवाग्निपूजकाः ।
समयाचारसंयुक्ताः तत्र भोगान् लभन्ति ते ॥ ९५ ॥

हठाद्भिन्दन्ति यन्त्राणि हठाद्भोगान् ददत्यपि ।
तेन सङ्कर्षणांशोऽसौ हाटकेश्वरसंज्ञकः ॥ ९६ ॥

---

८९. b : S. मर्षिका: for महर्द्धिकाः.
c : S. वध्वो for वन्ध्यो.
d : S. A. दीर्घ for दिव्य.
९०. a : V. भागो for नागो.
c : My. A. भागाः for भागे.
९१. a : S. ०कलास्थ A. M. कालस्य for ०काख्यस्य.
९४. a : V. तत्परम् for तत्पद्म०.
९५. c : V. युक्ता ये for संयुक्ताः.
९६. a : S. छिन्दन्ति for भिन्दन्ति.
b : A. भोगं for भोगान्; S. My. A. M. दिशन्ति for ददति.
d : S. A. M. V. संज्ञितः for संज्ञकः.

(पृथिव्याः स्थितिः तस्याः विस्तारश्च)

तस्योपरिष्टात् पृथिवी सप्तद्वीपवती द्विज ।
शतार्धकोटिसुमिता योजनानां तु सर्वतः ॥ ९७ ॥

(भूमण्डलस्य विभागः)

भूमण्डलविभागं तु कथ्यमानं निशामय ।
जम्बूशाककुशक्रौञ्चशाल्मली तु तथापरः ॥ ९८ ॥
गोमेदपुष्कराख्यश्च द्वीपाः सप्त तथोदिताः ।
एकैको द्विगुणेनैव समुद्रेण समावृतः ॥ ९९ ॥
द्वीपाः सप्तसमुद्रैस्तैस्सप्तसप्तभिरावृताः ।

(सप्तसमुद्रवर्णनम्)

क्षारः क्षीरोदधिः सर्पिरिक्षुश्चैव सुरा दधि ॥ १०० ॥
स्वच्छोदश्च स्थितोऽप्यन्ते पुष्कराख्यस्य बाह्यतः ।
द्विगुणाः द्विगुणाः सर्वे द्वीपाश्चोदधिभिः सह ॥ १०१ ॥

(जम्बूद्वीपविस्तारः)

लक्षयोजनविस्तारो जम्बूद्वीपस्तु सर्वतः ।

(मेरोः स्थानम्)

तस्य मध्यगतो मेरुः कर्णिकाकृतिसंस्थितः ॥ १०२ ॥

(जम्बूद्वीपखण्डसंख्या)

नवखण्डः सुविस्तीर्णो जम्बूद्वीपस्तु वै द्विज ।

---

९८. a : S. My. A. विशालं for विभागम्.
९९. a : S. कामोदः My. A. गोमोद for गोमेद.
c : M. एकशः for एकैको.
१००. c : M. क्षीरोदकः for क्षीरोदधिः.
d : V. सुरोदधि for सुरा दधि.
१०१. d : My. A. द्वीपाः उदधिभिः सह.

(मेरोः स्वरूपादिवर्णनम्)

वर्धमानाकृतिः मेरुः सर्वहेममयः शुभः ॥ १०३ ॥

उच्छ्रायेण सहस्राणि योजनानां प्रमाणतः ।
अशीतिर्द्विजशार्दूल चतुर्भिरधिका भवेत् ॥ १०४ ॥

षोडशान्यानि विप्रेन्द्र सहस्राणि क्षितेरथ ।
एवं योजनलक्षेण अथोर्ध्वं सुव्यवस्थितम् ॥ १०५ ॥

(मेरुशृङ्गवर्णनम्)

सौवर्णं राजतं चैव रत्नजं च तृतीयकम् ।
शृङ्गानि तस्य शोभन्ते मूर्तिभेदेन विष्णुना ॥ १०६ ॥

सेवितानि द्विजश्रेष्ठ स्थानासनविभागतः ।
राजतं भजते सौम्य आग्नेरयि तु काञ्चनम् ? ॥ १०७ ॥

आग्नेयी वैष्णवी मूर्तिः शृङ्गं भवति रत्नजम् ।

(अष्टानां देवपुरीणामवस्थितिः)

तदधो देवपुर्यस्तु अष्टौ दिक्षु व्यवस्थिताः ॥ १०८ ॥

अमरावती वासवी तु अग्नेस्तेजोवती तथा ।
वैवस्वती पुरी याम्या तथा रक्षोवतीपुरम् ॥ १०९ ॥

---

१०३. d : A. M. सर्वं हेममयं शुभम्.
१०४. b : S. My. A. M. द्विजोत्तम for प्रमाणतः.
१०५. a : S. My. M. ०स्यानि for ०न्यानि.
d : A. अधोर्ध्वं V. अतोर्ध्वं for अथोर्ध्वम्.
१०७. a : S. My. A. M. सेविताल द्विजश्रेष्ठ.
b : S. My. A. M. स्थानविभागशः.
d : My. A. om.
१०८. d : S. My. A. अष्ट० for अष्टौ.
१०९. a : S. My. A. च for तु.
b : S. My. A. तेजोमयी for तेजोवती.
c : S. My. विवस्वति for वैवस्वती.
d : S. My. M. om.

आख्याता राक्षसाशा च वारुणीं कथयाम्यहम् ।
शुद्धेन्दुकिरणाभा तु नाम्ना शुद्धवती शुभा ॥ ११० ॥
वायौ गन्धवती चान्या शुभा हरितभूषिता ।
महोदया च सौम्यायां सोमस्य शुभलक्षणा ॥ १११ ॥
ऐशान्यां शङ्करस्यान्या संस्थिता तु यशस्विनी ।

(वर्षपर्वतानां स्थितिः)

पूर्वादौ संस्थिताः मेरोः चत्वारो वर्षपर्वताः ॥ ११२ ॥

(मन्दरस्य स्थित्यादिः)

मन्दरः पूर्वतस्तस्य कदम्बः शिखरे तरुः ।
अरुणोदसरश्चैव तथा चैत्ररथं वनम् ॥ ११३ ॥

(गन्धमादनस्य वर्णनम्)

मेरोर्दक्षिणतो विप्र पर्वतो गन्धमादनः ।
जम्बूवृक्षसमोपेतं सरस्तत्र तु पुष्करम् ॥ ११४ ॥
वनं वैवर्णिनी रम्यम् अस्य संपरिकीर्तितम् ।

(विपुलस्य वर्णनम्)

विपुलः पश्चिमे मेरोः तत्राश्वत्थो महातरुः ॥ ११५ ॥
सितोदकं सरो दिव्यं वैभ्राजं च वनोत्तमम् ।

(सुपार्श्वस्य वर्णनम्)

मेरोरुत्तरदिग्भागे सुपार्श्वो नाम पर्वतः ॥ ११६ ॥

---

११०. c : S. My. A. ०भासा for भा तु.
१११. c : V. ०थ for च.
११२. b : V. सुस्थिता for संस्थिता.
c : S. My. A. आदि for आदौ.
११३. c : S. नरः V. रसः for सरः.

न्यग्रोधस्तत्र तु नगो नन्दनं च तथा वनम् ।
मानसं च सरो दिव्यं देवभोग्यं मनोहरम् ॥ ११७ ॥

(मेरोः पूर्वादिदिक्षु स्थिताः नगाः)

सितान्तं चक्रमुञ्जश्च माल्यवान् कुकुरी नगः ।
वैकङ्कतस्तथा मेरोः पूर्वे चैते नगाः स्थिताः ॥ ११८ ॥

शिंशरश्च पतङ्गश्च रुचकश्च त्रिकूटवान् ।
निषधश्च समाख्यातः दक्षिणेनाचलाः स्थिताः ॥ ११९ ॥

वैडूर्यश्च विवासश्च कपिलो गन्धमादनः ।
मारुधिश्च नगश्रेष्ठः पश्चिमे संस्थिताः नगाः ॥ १२० ॥

हंशोऽथ वृषभश्शङ्कुः कुम्भनागस्तथाचलः ।
अञ्जनश्च तथा कालः सौम्यायां दिशि संस्थिताः ॥१२१॥

एते मेरोश्चतुर्दिक्षु संस्थिताः केशराचलाः ।
निषधो हेमकूटश्च हिमवांश्चेति याम्यतः ॥ १२२ ॥

नीलःश्वेतगिरिश्चैव शृङ्गवानपि चोत्तरे ॥
मेरोश्चतुर्दिशः ख्याताः तथा ये केसराचलाः ॥ १२३ ॥

गिरीणामन्तरा रम्या सिद्धावासनिसेविता ।
भुवनानि सुरम्याणि पुष्टानि वरकिन्नरैः ॥ १२४ ॥

---

११८. b : V. कुरुदी for कुकुरी ; S. My. A. नभः for नगः.
c : A. प्रमुखाः for ०तस्तथा.
d : S. मूले चैते V. पूर्वेणैते for पूर्वे चैते.

११९. a : S. A. यदङ्ग for पतङ्ग.
b : S. रुचकश्चकूटवान्, A. रुचकश्चित्रकूटवान्, My. रुचकश्च त्रिकूटवान्, M. रुचक-श्चककूटवान्.
c : M. निषाधश्च तथा ख्यातो.

१२३. d : S. My. स्तव for तथा ये.

१२४. c : S. च for सु.
d : A. V. जुष्टानि for पुष्टानि, S. M. चर for वर.

देवतायतनान्यत्र चतुर्दिक्षु स्थितानि तु ।

(भद्राश्वादिदेशानां स्थितिः)

पद्मायाः पूर्वतो दिव्यं विष्णोश्चैव तु दक्षिणे ॥ १२५ ॥

अग्नेः पश्चिमतश्चैव शम्भोरुत्तरतस्तथा ।
भद्राश्वः केतुमालश्च भारतं कुरवस्तथा ॥ १२६ ॥

मेरोमषादि ? पूर्वादौ स्थितानि द्विजसत्तम ।

(भद्राश्वादिदेशेषु पूज्याः देवाः)

एतेषु भगवान् विष्णुः परमात्मा सनातनः ॥ १२७ ॥

सर्वस्याधारभूतेशो तत्रास्ते पुरुषोत्तमः ।
वासुदेवः परो देवो मूर्तिभेदेन संस्थितः ॥ १२८ ॥

बहुरूपधरो विष्णुः तन्निवासिभिरिज्यते ।
हयशीर्षो महायोगी भद्राश्वे पूज्यते हरिः ॥ १२९ ॥

केतुमाले वराहस्तु कूर्मो वै भरते तथा ।
उक्तः कुरुषु गोविन्दो मत्स्यरूपी जनार्दनः ॥ १३० ॥

एवं सर्वेश्वरो विष्णुः परमात्मा सनातनः ।
सर्वस्याधारभूतोऽसौ तत्रास्ते पुरुषोत्तमः ॥ १३१ ॥

(महानद्याः उद्भवः विभागश्च)

तस्य विष्णोः पदाब्जात्तु विनिष्क्रान्ता महानदी ॥
चन्द्रमण्डलमासाद्य गता ब्रह्मपुरीं ततः ॥ १३२ ॥

मेरोरूर्ध्वे निपतिता सा चतुर्धा गता पुनः ।

(महानद्याः विभागचतुष्टयम्)

सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ॥ १३३ ॥

---

१२५. b : M. च for तु.

१२९. a : V. चतुर्व्यूहं तगः सर्वैः.
c : S. My. A. ०भोगी for योगी.

(सीतादिनदीनां प्रवाहदेशाः)

पूर्वेण भारतं सीता प्लावयित्वा गतार्णवम् ।
दक्षिणेऽलकनन्दापि केतुमालं गतार्णवम् ॥ १३४ ॥

भद्राश्वान् पश्चिमे चक्षुः प्लावयित्वा गतार्णवम् ।
भद्रा तथोत्तरं कूरुं गता नद्युत्तरार्णवम् ॥ १३५ ॥

(चतुष्पत्री भुवनपद्मवर्णनम्)

अनिलः निषधायामो माल्यवान् गन्धमादनः ।
कर्णिकाकारसंस्थाने तन्मध्ये मेरुपर्वतः ॥ १३६ ॥

भारतः केतुमालश्च भद्राश्वाः कुरवस्तथा ।
नीलोत्पलस्य पत्राणि मर्यादाशैलबाह्यतः ॥ १३७ ॥

(वर्षस्य लक्षणम् भारतादिवर्षाणां विस्तारश्च)

शैलाच्छैलान्तरं यच्च स देशो वर्ष उच्यते ।
हिमशैलसमुद्रान्तं भारतं चाप्यवस्थितम् ॥ १३८ ॥

अष्टयोजनसाहस्रं वर्षं किंपुरुषं ततः ।
हरिवर्षं तथा चान्यन्नव साहस्रमुच्यते ॥ १३९ ॥

मेरोर्दक्षिणतस्त्रीणि वर्षाणि कथितानि ते ।

(मेरोः उत्तरस्थितानां वर्षाणां स्थितिः तेषां विस्तारश्च)

मेरोरुत्तरतो विप्र रम्यकं वर्षमुच्यते ॥ १४० ॥

ततो हिरणमयं नाम कुरवश्चोत्तरास्तथा ।
नव साहस्रमेकैकं प्रमाणैर्योजनैर्शुभम् ॥ १४१ ॥

---

१३४. c : V. च for ऽपि.
१३५. c : My. V. कूलं for कुरुं.
१३९. b : My. A. पुरुषाह्वयं for पुरुषं ततः.
१४०. b : V. च for ते.
१४१. c : M. सच for नव.

(भारतविभागकीर्तनम्)

भारतं तु विभागेन नवधा परिकीर्तितम् ।
इन्द्रः कसेरुस्ताम्रश्च गभस्ती नाम सौम्यकाः ॥ १४२ ॥
गन्धर्वश्चारणाश्चैव कान्यकाद्वीप वारुणः ।

(भारतस्थकन्यकाद्वीपवर्णनम् अन्येषां च प्रमाणम्)

द्वीपे वै कन्यकाख्ये तु चातुर्वर्ग्यः प्रकीर्त्यते ॥ १४३ ॥
आयामेन स्थितं तद्धि योजनानां प्रमाणतः ।
सहस्रार्धं समाख्यातं समोच्चानीतराणि तु ॥ १४४ ॥

(भारते स्थिताः महाचलाः)

महेन्द्रो मलयस्सह्यः कीर्तिमान् ऋक्षपर्वतः ।
विन्ध्यश्च परियात्रश्च कन्यकाख्यो महाचलः ॥ १४५ ॥

(भारत एव युगावस्थावर्णनम्)

इह चैव युगावस्था कृता चान्यत्र न क्वचित् ।

(भारते स्थितानां नद्यादीनां संक्षेपेण वर्णनम्)

नद्यः पापहरास्तत्र सन्त्यनेकाः सरांसि च ॥ १४६ ॥

---

१४२. c : S. M. इन्द्रो मन्द्रस्ततो भूमे, My. A. इन्द्रो मद्रस्ततो भूमे, V. उपेन्द्रो कसेरुस्ताम्रा.
d : S. My. A. शुभस्तीर्नामसौम्यकम्.

१४३. b : S. My. A. M. भावनः V. वाव च for वारुणः.
c : S. My. A. शैले for द्वीपे.
d : S. My. A. चतुर्वर्णं प्रवर्तते.

१४४. c : My. सहस्राख्यं for सहस्रार्धम्.
d : M. सदो० for समो०.

१४५. b : S. A. V. शुक्तिमान् M. शक्तिमान् for कीर्तिमान्, S. रुक्ष for ऋक्ष.

१४६. a : A. इहैव च for इह चैव; V. गहा० for युगा.
c : A. M. S. चैव for तत्र.

विष्णोरीशस्य दिव्यानि पुण्यान्यायतनानि च ।
भागीरथी च यमुना नर्मदा च सरस्वती ॥ १४७ ॥
कावेरी ताम्रपर्णी च गोदा वेगा महानदी ।
शतं नद्यः समाख्याताः संक्षेपात् पापनाशनाः ॥ १४८ ॥

(भारते स्थितानां सरसां वर्णनम्)

अतन्तं पङ्कजाख्यं च सरः पुण्यजनाश्रयम् ।
चन्द्राह्वयं सरः पुण्यमागस्त्यं पुष्करं सरः ॥ १४९ ॥
सरांस्येतानि पुण्यानि सर्वपापहराणि वै ।

(भारते स्थितानां तीर्थानां वर्णनम्)

सालग्रामं द्वारवती चक्रदानं कुरुप्रियम् ॥ १५० ॥
रङ्गं च सौकरं कण्ठं काञ्ची स्थानं शिवप्रियम् ।
विष्णोरायतनान्येतान्याख्यातानि समासतः ॥ १५१ ॥
सालग्रामे मुकुन्दाख्यं द्वारवत्यां तु केशवम् ।
चक्रदाने चक्रधरं माधवं तु कुरुप्रिये ॥ १५२ ॥
रङ्गे तु वासुदेवं च सौकरे सौकराननम् ।
कण्ठे जनार्दनाख्यं तु पूजयन्ति विपश्चितः ॥ १५३ ॥
काञ्च्यां तु वरदं स्थाने पद्मनाभं यजन्ति च ।
शिवप्रिये हरिं देवं पूजयन्ति समाहिताः ॥ १५४ ॥

---

१४८. b : V. नन्दा for वेगा.
१४९. a : V. पादपं पङ्कजाढ्यं च.
c : My. चण्डाह्वयं for चन्द्राह्वयम्.
१५०. d : S. M. चक्रवाकं for चक्रदानम्.
१५१. a : My. A. कर्णं for कण्ठम्.
b : M. काशी for काञ्ची.
१५२. c : S. चक्रवाके M. चक्रवाले for चक्रदाने, My. रथं for ०धरं.
१५३. c : My. A. कर्णे for कण्ठे.
१५४. a : V. ध्यानदूने महास्थाने.
c : S. My. A. चैव for देवम्.

एतेषु ये यजन्ति तु वासुदेवं सुभाविताः ।
इह भोगान् परान् भुक्त्वा ततः कैवल्यमाप्नुयुः ॥ १५५ ।

(भारतवर्षे स्थितानां शिवक्षेत्राणां वर्णनम्)

शिवस्यायतनान्यत्र शृणुष्व गदतो मम ।
वाराणसी च कालाकः चक्रदाने गतं शिवम् ॥ १५६ ॥
वासुकीश्वरमाराध्य वरदं वटचिह्नितम् ।
आदिमुक्तीश्वरं पुण्यमार्तिहानिकरं तथा ॥ १५७ ॥
स्थानेष्वेतेषु धर्मिष्ठाः पूजयन्ति शिवं सदा ।
दानं तपः तथा होमो यज्ञश्चात्र प्रवर्तते ॥ १५८ ॥
पशुपाशविमुक्ता च दीक्षा चात्रैव नान्यतः ।

(भारतवर्षस्य कर्मभूमित्वं वैशिष्ट्यञ्च)

जम्बूद्वीपे द्विजश्रेष्ठ भारतं वर्षमुत्तमम् ॥ १५९ ॥
कर्मभूमिरियं ख्याता अन्या वै भोगभूमयः ।
नात्राल्पपुण्यो लभते कदाचिज्जन्म मानुषम् ॥ १६० ॥
अनेकजन्मसाहस्रं भूत्वा संसारपद्धतिम् ।
ततः कदाचित्पुण्येन भारते जन्म मानुषम् ॥ १६१ ॥

---

१५५. a : S. My. A. M. वैजयन्तीषु for ये यजन्ति तु.
c : S. सर्वान् for परान्.

१५६. b : My. शृणुध्व for शृणुष्व.
c : S. My. वर्णारसी for वाराणसी; S. चन्द्रभागे for च कालाकः.
d : My. चक्रदानं गतं शिवम्, S. M. V. चन्द्रदानो गदं शिवम्.

१५७. b : S. My. A. वट for वर०.
c : My. A. M. अवि for आदि०, S. My. A. मुक्ते० for मुक्ती०.

१६०. a : S. My. A. इति for इयम्.

लब्ध्वा यज्ञपतिं देवं वासुदेवमनामयम् ।
ये नार्चयन्ति विप्रेन्द्राःतेषां जन्म निरर्थकम् ॥ १६२ ॥

एवमेतत् समाख्यातं लेशोद्देश्येन भारतम् ।

(जम्बूद्वीपे स्थितानां द्वीपान्तराणां वर्णनम्)

द्वीपान्तराण्यनेकानि सुखदानि बहूनि हि ॥ १६३ ॥

अङ्गद्वीपसमाख्यं च मलयं शङ्खसंज्ञकम् ।
कुमुदं च वराहं च भोगाख्यानि सुखानि तु ॥ १६४ ॥

द्वीपे तु मलये दिव्ये मलयाचलशोभिते ।
दिव्यहेमपुरी लङ्का क्रूरभूतालयस्थिता ॥ १६५ ॥

एवमुद्देशतः ख्यातो जम्बूद्वीपस्तवानघ ।

(सप्तद्वीपस्थितिवर्णनक्रमे जम्बूद्वीपं विहाय अन्येषां षण्णां द्वीपानां स्थितिवर्णनम्)

बाह्यतस्तस्य संवेष्टय क्षारोदस्संव्यवस्थितः ॥ १६६ ॥

लक्षयोजनविस्तारात् क्षार एकस्तु (प्लक्षद्वीपस्तु?) बाह्यतः ।
द्विगुणश्चानु विप्रेन्द्र तत्र वर्णचतुष्टयम् ॥ १६७ ॥

तैस्तत्र भगवान् विष्णुरिज्यते मोक्षकांक्षिभिः ।
क्षीरोदस्तस्य परितः तत्प्रमाणो स्थितो मुने ॥ १६८ ॥

---

१६३. b : M. देश० for लेश.
१६४. d : V. भोगाध्वानि for भोगाख्यानि ; My. A. च for तु.
१६५. c : My. हर्म्या for हेम ; V. दिव्याभैर्माधुरी लंकां.
१६६. c : S. A. वैरुक्षा for संवेष्टय.
d : S. क्षार एक सुबाह्यतः, V. क्षाराशोकस्तु बाह्यतः.
१६७. c : S. My. A. om द्विगुणः.

क्षीरोदाद्द्विगुणेनैव कुशद्वीपेन वेष्टितः।
कुशद्वीपस्य परितः दध्योदस्तत्समो भवेत् ॥ १६९ ॥
तस्मात्तु द्विगुणः क्रौञ्चः सर्पिषा बाह्यतो वृतः।
ततस्तु शाल्मलिद्वीपो वृत्तश्चेक्षुरसेन तु ॥ १७० ॥
बाह्यतस्तस्य गोमेदः सुरोदस्तस्य बाह्यतः।
ततस्तु पुष्करद्वीपः स्वच्छोदेनावृतो बहिः ॥ १७१ ॥
परस्परस्य द्विगुणाः द्वीपास्तु कथितास्तव।
तत्तुल्योदधिभिस्सर्वैः सर्वतो वेष्टितो बहिः ॥ १७२ ॥

(स्वादूदकान्तबहिर्भूमिवर्णनम्)

ततः स्वादूदकान्तेषु बहिर्भूमिर्हिरण्मयी।
द्विपञ्चकोटिसुमिता तद्बहिर्भूस्तथामयी ॥ १७३ ॥
स्वादुना द्विगुणा विप्र सर्वप्राणिविराजिता।

(लोकालोकशैलस्थानादिवर्णनम्)

लोकालोकस्ततः शैलो बाह्यमावृत्य संस्थितः ॥ १७४ ॥
दशयोजनसाहस्रविस्तारोच्छ्रायतः समम्।
अन्तस्तस्य इमे लोकाः न लोकास्तस्य बाह्यतः ॥ १७५ ॥
लोकालोकस्तथाख्यातो सर्वस्योपरि वर्तुलः।

(तमसः स्थितिकथनम्)

ततः तमस्तु परितः शैलमावृत्य संस्थितम् ॥ १७६ ॥

---

१६९. a : S. क्षीरोदो for क्षीरोदात्.
१७०. a : S. तस्माद्धि for तस्मात्तु.
१७३. c : S. A. द्वीपञ्च कोटि सुमिता, My. M. समितः for सुमिता.
d : S. A. तद्बहिर्भूतभामयी.
१७४. b : S. My. A. M. सर्वप्राणिविवर्जिता.
d : My. आलम्ब्य for आवृत्य.
१७६. b : V. सर्वत्रापि निवर्तुल.
c : S. My. A. ततस्तु परतः शैलम्.

तमसा तु कटाहेन समन्तात् परिवेष्टितम् ।

(पृथिव्याः विस्तारादिः)

सूर्याचन्द्रमसौ यावत् दीप्येते तौ स्वतेजसा ॥ १७७ ॥

तावती पृथिवी ज्ञेया द्वीपोदधिसमन्विता ।

(पृथिवीस्थानात् सूर्यादीनामन्तरवर्णनम्)

यावत्प्रमाणा पृथिवी ततस्तावत्प्रमाणतः ॥ १७८ ॥

सूर्यो योजनलक्षेण ऋक्षं चक्रं व्यवस्थितम् ।

लक्षद्वये बुधस्तस्मात् तन्माने भार्गवः स्मृतः ॥ १७९ ॥

कुजोऽपि लक्षद्वितये संस्थितो भगवत्परः ।

जीवस्तु परतस्तद्वत् शनिस्तद्वत् परेण तु ॥ १८० ॥

लक्षेण मुनयस्तस्मात् ततस्तेभ्यो व्यवस्थिताः ।

(सप्तलोकानाम् परस्परान्तरवर्णनम्)

भूर्भुवः स्वस्ततस्तस्मात् लक्षाः पञ्चदश स्मृताः ॥१८१॥

त्रैलोक्यमेतत् कथितं स्थानं वेदोक्तयाजिनाम् ।

महर्लोकस्ततश्चोर्ध्वं कोटियोजनतस्स्थितः ॥ १८२ ॥

तत्परेण जनो लोकः स्थितः कोटिद्वयेन तु ।

अष्टकोट्युच्छ्रयो विप्र तपो लोकः व्यवस्थितः ॥ १८३ ॥

तपो लोकात्सत्यलोको ज्ञेयः षोडशकोटिभिः ।

(ब्रह्मस्थानस्थितिः)

कोटित्रये तु परतो ब्रह्मस्थानं व्यवस्थितम् ॥ १८४ ॥

---

१७७. a : My. तद्रासा for तमसा.
 c : My. सूर्य for सूर्या०.

१७८. d : S. तत्समा तत्प्रमाणतः.

१७९. d : My. A. ततः for स्मृतः.

१८२. d : V. संस्थितः for ०तस्स्थितः.

१८३. c : S. My. M. लक्ष for कोटि.

सर्वात्मनो भगवतो विद्धि वै संभवस्य तु ।

(हरेः स्थाननिर्देशः)

तस्मात्कोटित्रयेणोर्ध्वं निवृत्यात्मा हरिः स्थितः ॥ १८५ ॥

(सङ्कर्षणस्य स्थाननिर्देशः)

विश्वात्मनो भगवतः सङ्कर्षणस्य वै ततः ।
चतुर्भिः कोटिभिः स्थानं विज्ञेयं देशिकोत्तमैः ॥ १८६ ॥

(ब्रह्माण्डस्थितिः)

तदर्धकोटिसुमितं ब्रह्माण्डं तु व्यवस्थितम् ।

(अण्डकटाहस्वरूपम्)

एते सप्त महालोकाः पातालानि तथैव च ॥ १८७ ॥
एते त्वण्डकटाहेन तिर्यक् चोर्ध्वमधस्तथा ।
समावृत्तं द्विजश्रेष्ठ कपित्थफलबन्धवत् ॥ १८८ ॥

(पृथिव्याः विस्तारादिः)

पञ्चाशत् कोटि विस्तारा सेयमुर्वी तथोदिता ॥
एतत् तत्पार्थिवं तत्त्वं

(जलतत्त्वस्थानि तीर्थानि)

जलेन परिवेष्टितम् ॥ १८९ ॥

दशोत्तरेण तु बहिः परीतो द्विजसत्तम ।
अमरेशः प्रभावश्च नैमिषः पुष्करं तथा ॥ १९० ॥

---

१८७. d : M. पातालादि for पातालानि.
१८८. a : S. एतम॰ My.M. एतद॰ for एते त्व.
d : S. ॰भक्ष for बन्ध.
१८९. c : S. एकतः for एतत्तत्.
१९०. d : S. प्रहरं for पुष्करम्.

तीर्थानि द्विजशार्दूल आपस्तत्त्वे स्थितानि तु ।
अपामावरणे ह्येतत् वह्निना वेष्टितं बहिः ॥ १९१ ॥

(तेजस्तत्त्वस्थस्थलनिर्देशः)

कोरा...दीनि तेजस्तत्त्वे स्थितानि तु ।

(वायुतत्त्वस्थितिः तीर्थानां वर्णनञ्च)

तेजसस्तु परं तत्त्वं वायुना वेष्टितं बहिः ॥ १९२ ॥
दशधा मुनिशार्दूल कदलीपुटवद्यथा ।
कुरुक्षेत्रं च विमलं प्रभासञ्च तथैव च ॥ १९३ ॥
स्थितानि वायुतत्त्वे तु सूक्ष्मात् सूक्ष्मतरं द्विज ।

(आकाशस्वरूपादिप्रतिपादनम्)

ततः भगवतो व्योम परतः मूर्तिवर्जितम् ॥ १९४ ॥
सङ्कल्पाख्यस्य मनसः बहिरावरणं हितम् ।
भूतादीनां बहुव्याप्तं भूतादिर्महता पुनः ॥ १९५ ॥
दशोत्तराणि सर्वाणि विज्ञेयानि द्विजोत्तम ।

(प्रधानस्य स्थित्यादिः)

महत्तत्त्वं समावृत्य प्रधानं समवस्थितम् ॥ १९६ ॥
अनन्तं तद्धि विज्ञेयं कारणं बहुधा ततम् ।

(प्रकृतेः वर्णनम्)

हेतुभूतमशेषस्य बीजं त्रिगुणमव्ययम् ॥ १९७ ॥

---

१९३. b : S. My. सह मया for ०वद्यथा.
d : S. A. M. मद्रभासं तथैव.
१९४. a : V. तत्त्वानि for तत्त्वे तु.
c : A. M. My. ततस्तु भगवतो for ततः भगवतो.
१९७. b : A. M. V. ततः for ततम्.
d : S. My. A. M. मध्यमम् for अव्ययम्,

परा सा प्रकृतिस्तत्त्वं

(मायाया: अन्त: ब्रह्माण्डस्य स्थिति:)

ततो मायातरुः स्मृतः ।

तस्यान्तःस्थमिदं सर्वं ब्रह्माण्डाख्यं मयोदितम् ॥ १९८॥

तेषामेवं विधानां तु ब्रह्माण्डानां द्विजोत्तम ।
कः सङ्ख्यामभिसंख्यातुं समर्थः स्यादच्युतं विना ॥१९९॥

दारुष्वग्निस्तिले तैलं मशकोदुम्बरे यथा ।
प्रधानेऽवस्थितस्तद्वत् पुरुषोऽप्यात्मवेदनः ॥ २०० ॥

(प्रधानपुरुषयो: विष्णुशक्त्या परित: व्याप्तत्वम्)

प्रधानपुरुषावेतौ विष्णुशक्त्या महामते ।
वर्तेते परितो व्याप्तौ सङ्किरन्तावुभावपि ॥ २०१ ॥

(तयो: पार्थक्ये कारणम्)

तयोश्चैव पृथग्भावकारणं परमं मुने ।
क्षोभञ्चानादिसर्गेषु सृज्यशक्तिर्हरेः परा ॥ २०२ ॥

(ज्ञानाख्यशक्ते: स्थिति:)

ततो निर्वाणदा शक्तिः ज्ञानाख्या परतः स्थिता ।

(ब्रह्मण: स्वरूपवर्णनम्)

ततः सर्वकलातीतशक्त्यतीतः परः शिवः ॥ २०३ ॥

---

१९८. b : My. M. स्थित: for स्मृत:.
c : V. तस्यान्त: स्थितमिदम्.
d : S. My. A. M. अनुत्तमम् for मयोदितम्.
१९९. c : S. My. A. सन्धातुं for संख्यातुं.
२००. c : My. तत्त्वं for तद्वत्.
२०१. b : S. A. M. शक्ते: My. शक्ति for शक्त्या.
d : My. सङ्किरन्ते for सङ्किरन्तौ.
२०२. c : V. क्षोभनाशादिसर्गेशा:.

निर्गुणो निर्मलः शान्तः परमात्मा सनातनः ।
तद्ब्रह्म परमं धाम सदसत्तत्परं पदम् ॥ २०४ ॥
सर्वशक्तिपदातीतं वासुदेवाख्यमव्ययम् ।
शून्यं सर्वगुणं शुद्धं सर्वलक्षणवर्जितम् ॥ २०५ ॥
महेश्वरपरं ब्रह्म शिवस्सर्वज्ञनामभिः ।
कूटस्थः परमात्मैकः व्यापिविष्णवच्युतादिभिः ॥ २०६ ॥
वासुदेवाजपरमः परमार्थपदोक्तिभिः ।
यदेभिरुच्यते वाक्यैः विष्णोस्तत्परमं पदम् ॥ २०७ ॥
स्वशक्तिकिरणाधारं सर्वं व्याप्य व्यवस्थितम् ।
नवरत्नपरं तस्मात् परापरविवर्जितम् ॥ २०८ ॥
सर्वज्ञानपदातीतमसन्दिग्धमवस्थितम् ।
न तस्य शक्यते वक्तुं संज्ञा भेदोऽथवा मुने ॥ २०९ ॥
तेन सर्वमिदं व्याप्तं कल्पनावस्तु लक्षणम् ।
न च तत्त्वान्तरं किञ्चित् तस्मात्तदतिरिच्यते ॥ २१० ॥

---

२०५. a : S. My. A. M. परा for पदा.
c : V. गतम् for गुणं.

२०६. c : M. इति for एकः.

२०७. a : S. My. A. M. वासुदेवानन्दपरं.
b : S. A. M. परमात्म for परमर्थि, S. My. A. M. पदार्थिभिः for पदोक्तिभिः.
d : S. My. A. M. तद्विष्णोः for विष्णोस्तत्.

२०८. a : S. My. A. स for स्व.
d : M. V. विकल्पितम् for विवर्जितम्.

२०९. b : S. My. A. न संदिग्धं for असंदिग्धं
c : V. न शक्यतेऽस्य ते वक्तुं.
d : S. चैव for भेदो.

ओतप्रोतमिदं सर्वं तस्मिन् सर्वात्मनि स्थितम् ।
अतः परतरं नास्ति वक्तव्यं मुनिसत्तम ॥ २११ ॥

(ब्रह्मणि ध्याने नियोजिते पुनर्जन्माभावः)

तस्मिन्नियोजिते ध्यानं पुनर्जन्म न विद्यते ।

(भुवनाध्वयागफलम्)

एष ते कथितः सर्वो भुवनाध्वा यथास्थितः ॥ २१२ ॥
यमिष्ट्वा लभते सिद्धिं मोक्षाख्यं परमं पदम् ।

(विषुवभेदाः तस्योत्कर्षवर्णनञ्च)

अतः परमिदं गुह्यं शृणु वत्स समाहितः ॥ २१३ ॥
येन विज्ञातमात्रेण स्वेच्छानुग्रहकृद्भवेत् ।
चतुर्विधं तु विषुवमुक्तं देवेन विष्णुना ॥ २१४ ॥
चतुर्धा सरहस्यं च तथैवोक्तं च मे पुरा ।
एतद्यो न विजानाति नासौ देशिक उच्यते ॥ २१५ ॥

(मन्त्रभेदकथनम्)

एकाक्षरः स्मृतो मंत्रो द्व्यक्षरस्त्र्यक्षरोऽपि वा ।
पञ्च षट् सप्त चाष्टौ च तथा बह्वक्षरो परः ॥ २१६ ॥

(एकाक्षरमन्त्रस्य प्रयोगप्रकारः)

तस्य प्रयोगमधुना अथ होमे निबोध वै ।
एकाक्षरस्य मन्त्रस्य व्रतमुच्चारणं भवेत् ॥ २१७ ॥

---

२११. b : A. M. V. तत्त्वात्मकं for सर्वात्मनि.
२१३. b : S. My. A. M. च परं for परमं.
२१४. b : My. स्वष्टा for स्वेच्छा.
२१५. a : A. समरस्वञ्च M. सामरस्यञ्च for सरहस्यं च.
b : S. A. M. तत्र for तथा.
२१६. d : S. बद्धाक्षरः My. A. बन्धाक्षरो for बह्वक्षरो.
२१७. b. My. मे for वै.

(पदानां [विग्रहाणां] स्थितिः)

आपादतलमूर्धानं व्याप्य सर्वं तु विग्रहम् ।

(सर्वात्मपदस्थितिः तत्प्राप्तिश्च)

आपादाद्धृदयं यावत् पदं सर्वात्मनो भवेत् ॥ २१८ ॥

तत्रस्थं तु वशं कृत्वा यदि पूर्णं प्रयच्छति ।

तदा तत्पदमाप्नोति इति सत्यं तवोदितम् ॥ २१९ ॥

(निवृत्तिपदप्राप्तिप्रकारादिः)

कण्ठे विरमते शब्दः सन्ताने विरतिं गते ।

तत्र पूर्णाहुतिं कृत्वा निवृत्तिं पदमाप्नुयात् ॥ २२० ॥

पार्थिवस्य तु तत्त्वस्य पुरस्तात् भोगभुग्भवेत् ।

(विश्वात्मपदं तत्प्राप्तिश्च)

अथ तालुगते नादे विरामो वास्य जायते ॥ २२१ ॥

तत्र पातयतः पूर्णं विश्वात्मपदमाप्नुयात् ।

(पुरुषात्मपदप्राप्तिप्रकारः)

मूर्ध्नि मानगतोच्चारो विरामं यदि गच्छति ॥ २२२ ॥

तत्र पूर्णां विनिक्षिप्य पुरुषात्मपदं लभेत् ॥

(परमेष्ठिपदं तत्प्राप्तिश्च)

तस्मादविरतश्शब्दो नासान्ते विरमेद्यदि ॥ २२३ ॥

---

२१८. c : S. तावत् for यावत्.

२१९. b : S. My. V. यमी A. यमि for यदि; V. My. A. पूर्णां for पूर्णम्.

२२०. a : A. कर्णे for कण्ठे.
b : S. A. M. सन्ताने विच्युतिं गते; V. पि च्युतिं for विरतिं.
c : S. My A. M. दत्त्वा for कृत्वा.

२२१. c : S. M. अथातो सुगते नादे.

२२२. a : S. पातीयतः for पातयतः, M. स्वर्णं for पूर्णं.

२२३. a : S. पूर्णं M. स्वर्णं for पूर्णां.
b : S. परमात्म for पुरुषात्म.

तदा तु पशुरभ्येत्य परमेष्ठिपदे लयः ।

(बह्वक्षरमन्त्रविधिः)

बह्वक्षरस्य मन्त्रस्य पूर्णायां विधिरुच्यते ॥ २२४ ॥

आद्यन्ते व्यापिनं कृत्वा प्लुतोच्चारस्ततः ततः ।
उच्चारणे तु मन्त्रस्य ध्वनिर्यत्र लयं व्रजेत् ॥ २२५ ॥

तत्स्थाने भोगवित् जीवो भवेद्धि पूर्ववत्पशुः ।
एतत् स्थूलं समाख्यातम्

(स्थूलसूक्ष्मयोः प्रकारः)

निर्वाणं कथयामि ते ॥ २२६ ॥

स्थूलं पञ्चविधं प्रोक्तं सूक्ष्ममेकविधं भवेत् ।
यं विदित्त्वा विमुच्यन्ते नराः संसारबन्धनात् ॥ २२७ ॥

(कलातत्त्वस्थपञ्चस्थूलतत्त्वपरिगणनम्)

सर्वात्मा च निवृत्यात्मा विश्वात्मा पुरुषात्मकः ।
परमेष्ठीति पञ्चैते कलातत्त्वे व्यवस्थिताः ॥ २२८ ॥

(स्थूलतया सूक्ष्मतत्त्वनिर्देशः)

स्थूलभेदेन विप्रेन्द्र सूक्ष्मतत्त्वं तथोच्यते ।
यत्रैव देवताः सर्वाः समुदायेन संस्थिताः ॥ २२९ ॥

व्यापियोगेन ज्ञातव्याः देवास्तु भवनाशनाः ।

(कलातत्त्वस्थसर्वात्मादितत्त्वेषु स्थितानां
सूक्ष्मादिपञ्चज्ञानशक्तीनां परिगणनम्)

परानुग्रहका शक्तिः ज्ञानाख्या पञ्चधा स्थिता ॥ २३० ॥

---

२२४. c : S. My. A. M. पद्यक्षरेषु मन्त्रेषु.
२२५. a : S. आद्यन्त० for आद्यन्ते.
२२६. a : S. My. A. M. भागवत् for भोगवित्.
२२८. a : S. निवृत्तात्मा for निवृत्यात्मा.
d : S. स्वादि My. पञ्च for कला.

सूक्ष्मा चैव सुसूक्ष्मा च मृता चैवामृता तथा ।
व्यापिनी परमा चान्या सर्वात्मादिषु संस्थिता ॥ २३१ ॥

(निर्वाणपदम् शक्त्यतीतविषुवनिरूपणञ्च)

ततस्तु परमं ज्ञेयं निर्वाणाख्यं परं पदम् ।
द्वादशान्तमिति ख्यातं तत्रासौ परमः पुमान् ॥ २३२ ॥

सदा तत्र स्थितो देवो वासुदेवः सनातनः ।
उच्चारणे यदा शब्दो हृत्पद्मादूर्ध्वतो व्रजेत् ॥ २३३ ॥

विरमेत् सः पुनः कण्ठे कण्ठस्थश्चोपरिष्टगः ।
तालुस्थश्च पुनर्गत्त्वा ललाटे तु लयं व्रजेत् ॥ २३४ ॥

बिन्दुस्थानं तु तज्ज्ञेयं तस्मादूर्ध्वं पुनर्गतः ।
अभिन्नोद्घातयोगेन ललाटे च प्रसर्पति ॥ २३५ ॥

नयतत्त्वे परे लीनो सः परं तेन गच्छति ।
तदा तत्परमं स्थानं तत्र पूर्णाहुतिं दिशेत् ॥ २३६ ॥

तत्त्वा सा परमा शक्तिः निर्वाणपदगामिनी ।
तत्पदं परमं ज्ञेयं निर्वाणाख्यममातृकम् ॥ २३७ ॥

---

२३१. a ; b : S. My. A. M. om.
२३३. a : S. My. A. तदा for सदा.
c : S. M. यथा for यदा.
२३४. d : S. आरामे for ललाटे.
२३५. b : V. पुनः पुनः for पुनर्गतः.
c : याति भागेन A. याति यागेन My. यातयोगेन for ०द्घातयोगेन.
d : S. My. A. ललाटेन for ललाटे च.
२३६. a : S. नयतत्त्वे परे लीना, My. यस्तत्त्वेन परे लीनं.
b : A. S. M. न for सः.
d : S. My. A. M. ददेत् for दिशेत्.
२३७. a : V. तपसा for तत्त्वा सा.
d : M. S. V. अमात्रकम् for अमातृकम्.

अनिवार्यमनालङ्घ्यं सर्वदोषादिवर्जितम् ।
तत्र लीनः परे तत्त्वे न पुनर्जन्म चाप्नुयात् ॥ २३८ ॥

यदेतत्कथितं शक्त्या शक्त्यतीतं परं पदम् ।
तस्मिन् स्थाने लयप्राप्तिः विषुवं तं विनिर्दिशेत् ॥ २३९ ॥

तत्प्राप्य न निवर्तन्ते ये लीनास्तत्र मानवाः ।
एतत् सर्वं परत्वेन कथितं तत्त्वमुत्तमम् ॥ २४० ॥

(मन्त्रविषुवलक्षणम्)

मन्त्राख्यं विषुवं वक्ष्ये रहस्यं तन्निबोध मे ।
मन्त्रमुच्चरतो विप्र यावन्नान्यमना भवेत् ॥ २४१ ॥

तावन्मन्त्रशरीरात्मा एकत्वं मानसान्ततः ।
'नमः स्वाहा'पदान्तस्थं तन्मन्त्रं विषुवं भवेत् ॥ २४२ ॥

(प्रशान्तविषुवलक्षणम्)

प्राणोऽपि सर्वस्थानानि समतीत्याव्ययात्परम् ।
प्रशान्तं तत्पदं प्राप्य सर्वशक्तिकलान्तकम् ॥ २४३ ॥

तदा तद्विषुवं विप्र प्राणाख्यं मोक्षदं परम् ।

---

२३८. a : S. A. अनिवार्यमनालम्ब्यम्.
b : My. A. M. उपाधि for दोषादि.
d : A. प्राप्नुयात् for चाप्नुयात्.

२३९. a : V. शक्या for शक्त्या.
b : My. अपेतं for अतीतं.
c : A. V. S. शून्ये for स्थाने; V. M. प्राप्ति for प्राप्तिः.
d : S. M. विषुवत्तं for विषुवं तम्.

२४१. c : My. मर्त्य for विप्र.
d : S. My. M. येन त्वं मनसा गतः, A. येन तत्त्वम्मन गत.

२४३. b : My. अजयात् A. अज्ययात् for अव्ययात्.
c : S. A. प्राप्त for प्राप्य.
d : S. My. A. M. तवा for कला.

(कालविषुवलक्षणम्)

उत्तरायणपूर्वं तु सव्यगं दक्षिणायनम् ॥ २४४ ॥
उभयोर्मध्यगे प्राणे कालाख्यं विषुवं स्मृतम् ।

(विषुवमाहात्म्यवर्णनम्)

चत्वारि विषुवाण्येते यो विजानाति देशिकः ॥ २४५ ॥
स तु मोचयते विप्र जन्मसंसारबन्धनात् ।
एवं सर्वं समाख्यातं समासेन मया द्विज ॥ २४६ ॥

(मन्त्रसमरसलक्षणम्)

मन्त्रे यद्येकतानेन लयोभवति मन्त्रिणः ।
मन्त्रः समरसः प्रोक्तो विष्णुना प्रभविष्णुना ॥ २४७ ॥

(नाडीसमरसस्य लक्षणम्)

नाडीमध्यगतं कृत्वा परशक्तिगतं विभुम् ।
देशिकः कर्म कुरुते नाडीसमरसस्तु सः ॥ २४८ ॥

(भूतसमरसस्य लक्षणम्)

सर्वभूतस्थमात्मानं ध्यात्वा कर्म करोति यः ।
स भूताख्यः समरसो मया विप्र तवोदितः ॥ २४९ ॥

---

२४४. d : S. My. सव्यकं A. सर्वकं for सव्यगम्.
२४५. b : My. कलाख्यं A. केवला V. मालाख्यं for कालाख्यम्.
c : V. चत्वारः for चत्वारि, A. S. V. विषुवा हि for विषुवाणि.
२४६. b : S. My. A. M. जनं for जन्म.
c : V. एतत् for एवम्.
२४७. c : A. समसमः for समरसः.
२४८. a : A. नाभि for नाडी.
२४९. b : S. My. A. M. कर्म ध्यात्वा for ध्यात्वा कर्म.
c : S. M. समारूढो for समरसो.

(तत्त्वसमरसस्य लक्षणम्)

परं समरसानां तु निबोध द्विजसत्तम ।
आत्मानं परतत्त्वस्थं विधाय विधिना मुने ॥ २५० ॥
तत्त्वस्थः सर्वकर्माणि करोति यदि देशिकः ।
तत्त्वाख्यः समरसो योऽसौ यथावत्कथितस्तव ॥ २५१ ॥
इत्येते समरसाः सर्वे समाख्याताः सुदुर्लभाः ।

(मन्त्रसाधनप्रकारः प्रायश्चित्तहोमप्रकारश्च)

मन्त्राणां साधनं विप्र तथैव ह्यध्वरे यथा ॥ २५२ ॥
अग्निं तु वैष्णवं हुत्वा तिलाज्येन विधानतः ।
प्रायश्चित्तं तु होतव्यं पद्मनाभेति विभ्रमम् ॥ २५३ ॥

(प्रायश्चित्तावसरनिर्देशः)

सूत्रच्छिन्ने रक्तशिवाविच्छिन्ने सङ्कुले कृते ।
स्थूले कृशे च पतिते रजस्युपहतेऽपि वा ॥ २५४ ॥
केशकीटैर्द्विजश्रेष्ठ पापदृष्टेऽथ मण्डले ।
दन्तकाष्ठे तथा कुण्डे स्रुक्स्रुवे विधिवर्जिते ॥ २५५ ॥
शिष्ये वा कुमतौ पापे दीक्षिते भक्तिवर्जिते ।

(आत्मशुद्ध्याद्यर्थं होमक्रमः)

आत्मशुद्धौ तु होतव्यमाज्याहुतिशतं द्विज ॥ २५६ ॥

---

२५१. a : S. My. A. M. तन्त्रस्थ for तत्त्वस्थ.
२५२. d : S. A. V. M. ०धुना for यथा.
२५३. d : A. S. V. विभ्रमः for विभ्रमम्.
२५४. a : S. M. शिव for शिवा.
b : S. नकुले for सङ्कुले.
d : S. My. A. M. रहसि for रजसि.
२५६. a : S. वापि for पापे.
c : S. सिद्धौ for शुद्धौ.

'द्वादशाक्षर'मन्त्रेण मन्त्री चाष्टाधिकं पुनः।
सन्धानं च परे तत्त्वे निर्वाणाख्ये विधाय च ॥ २५७ ॥

तत्त्वे समरसो भूत्वा त्वरया विषुवे स्थितः।
'प्रणवा'न्तेन मन्त्रेण वासुदेवमनुस्मरन् ॥ २५८ ॥

पूर्णाहुतिं तु वै दत्त्वा शुद्धो भवति देशिकः।

(द्वादशाद्यक्षरमन्त्रोद्धारकः)

वासुदेवेन पूर्वं तु उद्धृतो 'द्वादशाक्षरः' ॥ २५९ ॥
तेनै'वाष्टाक्षरो' मन्त्रः प्रणवश्च तथोद्धृतः।

(द्वादशाक्षराष्टाक्षरमन्त्रयोः स्वरूपनिर्देशः)

'ओं नमो भगवते वासुदेवाय'। 'ओं नमो नारायणाय'।

(द्वादशाक्षरमन्त्रमहिमा)

नास्मात् परतरो मन्त्र इति सत्यं निबोध मे ॥ २६० ॥
चिन्तनात् स्मरणाद्ध्यानात् पूजनात् जपतोऽपि वा।
'द्वादशाक्षर'वेदी सः को न मुच्येत बन्धनात् ॥ २६१ ॥

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः।
अद्यापि न निवर्तन्ते 'द्वादशाक्षर'चिन्तकाः ॥ २६२ ॥

(शिष्यपापोपलक्षकनिमित्तज्ञापनप्रकारः)

आत्मशुद्धिं विधायैवं कुर्यादालम्भनं पशोः।
उच्चार्य 'मूल'मन्त्रं तु हुं फट्कारसमन्वितम् ॥ २६३ ॥

---

२५७. b : My. वा for चा.
c : S. My. A. M. तु for च.
२५८. b : S. A. M. त्वरये V. तूर्येण for त्वरया.
d : S. My. A. स्मरेत् for स्मरन्.
२६०. b : S. M. ततो॰ for तथो॰,
२६१. b : A. च for वा.
२६३. b : S. M. आलम्बनं for आलम्भनम्.

जिज्ञासार्थं तु शिष्यस्य हुत्वा मन्त्राहुतीर्दश ।
द्व्यधिकां द्विजशार्दूल ततः पूर्णां तु होमयेत् ॥ २६४ ॥
पूर्णाहुत्यां तु दत्तायां निमित्तान्युपलक्षयेत् ।
वह्नेर्विकारात् पापानि यान्यस्मिन् सुकृतानि वै ॥ २६५ ॥
धूमेन विस्फुलिङ्गैश्च विज्ञातव्यानि देशिकैः ।

(ब्रह्महन्तृत्वोपलक्षकचिह्नम्)

हूयमानस्य यस्याग्नेर्धूमश्च दिवि जायते ॥ २६६ ॥
कुरुते जर्जराशब्दं स्फुलिङ्गैश्च न राजते ।
एवं तु लक्षणं दृष्ट्वा विद्याद्ब्रह्महता कृतम् ॥ २६७ ॥

(सुरापातृत्वोपलक्षकचिह्नम्)

नीलबभ्रुनिभो यस्य धूमश्चैवात्मनोऽनलात् ।
हूयमानस्य निश्शब्दो सुरापं तं विनिर्दिशेत् ॥ २६८ ॥

(स्तेयकर्तृत्वोपलक्षकचिह्नम्)

समिद्धे तु हुते वह्नौ दध्ना चैव परिप्लुते ।
क्षणे ज्वलति निर्वाति स्तेयकारं तु तं विदुः ॥ २६९ ॥

---

२६४. b. S. आहुतेः for आहुतीः.
२६५. c : V. वह्नेर्विकारोत्पातानि.
d : A. संस्कृतानि for सुकृतानि.
२६७. a : S. My. A. M. शिखायाः जरजरः शब्दः.
b : S. My. A. स्फुलिङ्गः for स्फुलिङ्गैः
d : S. कृता V. गतं for हता.
२६८. b : S. My. A. M. आत्मगो for आत्मनो.
c : S. V. यश्शब्दो for निश्शब्दो.
२६९. a : S. My. A. सुसमिद्धो for समिद्धे तु.
b : S. My. A. M. दत्त्वा for दध्ना.
c : My. A. क्षयो for क्षणे.

(गुर्वङ्गनागन्तृत्वोपलक्षकचिह्नम्)

शब्दं तु विस्वरं कृत्वा सधूमो विलिखेन्महीम् ।
ज्ञात्वा लक्षणमेतद्धि अतो गुर्वङ्गनागमम् ॥ २७० ॥

(सर्वपापरतत्वोपलक्षकचिह्नम्)

धत्ते सर्वाणि रूपाणि हूयमानो यदानलः ।
यस्य शिष्यस्य तं विद्धि सर्वपापरतं परम् ॥ २७१ ॥

(उपपातककर्तृत्वोपलक्षकचिह्नानि)

ध्वाङ्क्षस्वरोर्ध्वबाहुककाकोलूकखरस्वनः ।
उष्ट्रगृध्रस्वरो घोरः शिवावानरनिःस्वनः ॥ २७२ ॥

शरेण धूमनिचयो भूमिं विलिखतेऽसकृत् ।
ज्वलतेऽत्र घुराशब्दैः फट्कारं कुरुतेऽसकृत् ॥ २७३ ॥

ईदृशानि तु यस्याग्नौ लक्षणान्युपलक्षयेत् ।
उपपातकिनः सर्वे ते ज्ञेयाः देशिकेन तु ॥ २७४ ॥

(पाशसंग्रहणप्रकारः)

उपलभ्य तु चिह्नानि पापानि गुरुरात्मवान् ।
कृत्वा कुशमयं सूत्रं 'प्रणवे'न समारभेत् ॥ २७५ ॥

आरभ्य शिष्यपादाग्रादाशिखाग्रं प्रसारयेत् ।
तेन पाशांस्तु संगृह्य ग्रन्थिबन्धं तु कारयेत् ॥ २७६ ॥

---

२७१. b : S. यथा for यदा.
२७२. a : My. स्वन for स्वर.
२७३. c : S. M. V. कुघरा A. कुथुरा for ०त्र घुरा.
d : My. वीं कारं for फट्कारं.
२७४. d : S. A. M. तैः for ते.
२७५. a : V. उपलक्ष्य for उपलभ्य.
२७६. a : My. A. आलभ्य for आरभ्भ.
d : S. पिण्डं for बन्धम्.

सम्पुटीकृत्य तान् पाशान् गृह्य संहारमुद्रया ।

(दामोदरादिसप्तसु पदेषु तत्त्वशोधनक्रमः)

कालतत्त्वात्परं यावात् तत्त्वं तत्त्वेन बन्धयेत् ॥ २७७ ॥

संहारक्रमयोगेन मन्त्रबीजानि विन्यसेत् ।
'मूल'मन्त्रस्य विप्रेन्द्र तत्त्वहोममथारभेत् ॥ २७८ ॥

एकैकस्मिंस्ततः तत्त्वे अहुतीनां शतम् शतम् ।
आत्मस्थं तु पशुं कृत्वा दामोदरपदं नयेत् ॥ २७९ ॥

अनुग्राहकशक्त्या तु अविकारे नियोजयेत् ।
पञ्चविंशतिराहुत्यो दत्त्वा भोगपदं नयेत् ॥ २८० ॥

दत्त्वा तत्रापि तावत्यः ततो लयपदं नयेत् ।
पश्चाद्दशाहुतीर्दत्त्वा पाशच्छेदं तु कारयेत् ॥ २८१ ॥

पूर्णाहुतिं ततो हुत्वा ततस्तस्माद्वियोजयेत् ।
आत्मस्थं तु पशुं कृत्वा पद्मनाभपदं नयेत् ॥ २८२ ॥

आविकारे तथा भोगे लये च द्विजसत्तम ।
प्रणवोभययुक्तेन वाकारेण तु होमयेत् ॥ २८३ ॥

---

२७७. a : S. पश्चात् for पाशान्.
d : M. तत्त्वात्तवेन for तत्त्वं तत्त्वेन; S. पिण्डयेत् for बन्धयेत्.

२८०. a : V. च for तु.
b : S. A. अविकारी for अविकारे.
c : A. om; S. My. M. विंशतिम् for विंशतिः.

२८१. a : A. om. S. My. M. गत्वा for दत्त्वा; S. M. नापश्यं for तावत्यः.
b : A. om; S. My. M. यान for लय०.

२८२. a : S. My. A. दत्त्वा for हुत्वा.
c : My. ततः for पशुम्.

२८३. a : S. My. A. M. ततो for तथा.
c : V. प्रणवेन य युक्तेन.

आहुतीनां शतं विप्र हुत्वा पूर्णाहुतिं हुनेत् ।
द्वादशान्तमनुप्राप्तं गृह्य संहारमुद्रया ॥ २८४ ॥

कृत्वात्मस्थं पशुं मन्त्री हृषीकेशपदं नयेत् ।
आविकारे तथा भोगे लये होमं विधाय तु ॥ २८५ ॥

'प्रणवे'नैव तत्रापि दत्त्वा पूर्णाहुतिं विभोः ।
वियोजयित्वा तत्रापि आत्मस्थं कारयेत् क्रमात् ॥ २८६ ॥

श्रीधराख्ये पदे योज्य होमं कृत्वा तु पूर्ववत् ।
पूर्णाहुतिं ततो दत्त्वा तं वामनपदं नयेत् ॥ २८७ ॥

त्रिविक्रमपदे योज्य योजयेन्मधुसूदनम् ।
तत्त्वबीजं तु भुवने भुवनाधिपतिक्रमात् ॥ २८८ ॥

विशोध्य मन्त्री मन्त्रज्ञः ततः पाशं च छेदयेत् ।

(गोविन्दादिपदशोधनक्रमः)

वैष्णवं तु पदं शोध्य गोविन्दाख्यं तु शोधयते ॥ २८९ ॥

माधवस्य पदं प्राप्य पुनर्नारायणं न्यसेत् ।
पूर्वक्रमेण होमं तु तत्र कृत्वा तु देशिकः ॥ २९० ॥

---

२८४. b : S. My. A. M. ददेत् for हुनेत्.
d : S. गुह्यं A. ग्राह्यं for गृह्य.
२८५. b : S. M. ऋषीकेशः for हृषीकेश.
२८६. a : V. प्रणवेन तु for प्रणवेणैव, My. तत्त्वापि M. तत्त्वानि for तत्रापि.
b : S. My. A. M. द्विज for विभोः,
c : V. योजयित्वा M. नियोजयित्वा for वियोजयित्वा.
२८८. a : S. A. M. योज्ये V. योज्यो for योज्य.

केशवाख्ये पदे पश्चात् योजयेत् साधकः पुनः ।

(पापनिर्दहनप्रकारः)

पापनिर्दहनार्थाय विधानं परमं शृणु ॥ २९१ ॥

कुशमुष्टिमथादाय 'मूल'मन्त्रेण मन्त्रवित् ।
रूपकं तु ततः कृत्वा तैर्दर्भैर्मन्त्रमन्त्रितैः ॥ २९२ ॥

आलभ्य तत्त्वैस्तं रूपं तत्र ध्यानं तु विन्यसेत् ।
मन्त्रवर्णकलातत्त्वं भुवनानि पदात्मकम् ॥ २९३ ॥

'प्रणवं' योजयेत्तत्र ग्रहणे ताडने तथा ।
उत्क्षेपे योजने चैव तथा चैव वियोजने ॥ २९४ ॥

पुनश्च तत्त्वसन्धाने परतत्त्वनियोजने ।
विषुवे तु परे स्थित्वा तत्त्वे समरसाङ्गतः ॥ २९५ ॥

स्थानात्स्थानविभागेन पुनर्व्यापिनमुच्चरन् ।
पञ्चवक्त्रस्य वह्नेस्तु जिह्वाख्यं पञ्चमं मुखम् ॥ २९६ ॥

शतमाहुतयस्तत्र सुहोतव्या विभावसोः ।
रूपकं तत्र होतव्यं प्राज्याज्येन परिप्लुतम् ॥ २९७ ॥

---

२९१. c : My. पापानि दहनार्थाय.
d : A. S. अपरम् for परमं.

२९२. c : V. कुर्यात् for कृत्वा.
d : S. M. दहेत् My. देहैः A देहं for दर्भैः.

२९३. c : V. मन्त्रा for मन्त्र.

२९५. c : S. M. ०षु for तु ; S. पदे for परे.

२९६. b : S. My. A. पर्व M. सर्व for पुनः.
c : V. पञ्चवक्त्रे तु वह्नौ तु.
d : S. My. A. जिह्वां for जिह्वाख्यं ; V. त्रिजिह्वं पञ्चमं मुने.

२९७. a : V. तत्र या सर्वदेवत्या.
b : S. सुपात्रस्य M. सुहोत्रस्य V. जिह्वामध्या for सुहोतव्या.
c : A. तेन for तत्र.
d : S. प्राण्या for प्राज्या, V. परिष्कृतम् for परिप्लुतम्.

होमात्तस्मात् भवेत् शुद्धः सर्वपापविवर्जितः ।
वह्निमध्ये यथा क्षिप्तं विशुद्धं कनकं भवेत् ॥ २९८ ॥

एवं संशुद्धदेहो वै भवेदत्र न संशयः ।
महापातकसंयुक्ता उपपातकिनोऽपि वा ॥ २९९ ॥

दीक्षयैव विशुद्ध्यन्ति सुवर्णमिव वह्निना ।

(शिखाच्छेदप्रकारः)

शिखाच्छेदं ततः कुर्यात् मन्त्रेणाद्येन वै मुने ॥ ३०० ॥

ध्यात्वा तु परमं तत्त्वं मुक्त्वा तु चतुरङ्गुलम् ।
बहिःस्थाप्य पुनःशीर्षं परिधाप्यात्मनोन्तिकम् ॥ ३०१ ॥

आनाय्य दक्षिणं पार्श्वं कुशस्तंबं समाहितम् ।
ध्यात्वा तु परमां शक्तिं ज्ञानाख्यां गुरुरात्मवान् ॥ ३०२ ॥

निष्क्रिये निर्मले शान्ते सर्वकारणकारणे ।
वासुदेवपदे व्योम्नि निरालम्बे निरञ्जने ॥ ३०३ ॥

योजयित्वा परे तत्त्वे ध्यात्वा तु परमां कलाम् ।
निर्वाणाख्यां परां शुद्धां तत्र पूर्णाहुतिं क्षिपेत् ॥ ३०४ ॥

(छिन्नशिखस्य दीक्षितस्य जीवन्मुक्तत्वादिवर्णनम्)

तया भवति संशुद्धो योजितः परमे पदे ।
धर्माधर्मविनिर्मुक्तो ज्ञानशक्तिकलात्मके ॥ ३०५ ॥

---

२९८. a : S. My. A. M. अस्मात् for तस्मात्, V. शुद्धिः for शुद्धः.
२९९. a : V. ऽसौ for वै.
३००. c : S. My. A. M. कृत्वा for कुर्यात्.
d : S. My. A. अनेन for आद्येन ; S. My. वा for वै.
३०१. c : V. बहिः for वह्नि.
३०२. a : S. My. A. पार्शं for पार्श्वं.
c : S. च for तु.
३०४. d : S. My. M. प्राणाहुतिं for पूर्णाहुतिम्.
३०५. a : S. M. तथा for तया.
d : S. कलात्मिके A. V. कालान्तिके for कलात्मके.

तस्मिन् लीनः परे तत्त्वे न भूय इह जायते ।
जीवन्मुक्तः स विज्ञेयो दीक्षितो वैष्णवोऽध्वरे ॥ ३०६ ॥
निर्वाणास्पदमापन्नः पुनः पाशैर्न बध्यते ।
न क्षयः पूर्वकाद्देहात् निर्वाणपदसात्कृतः ॥ ३०७ ॥
यावदायुः क्षयस्तस्य मुक्तस्तावदिहास्यते ।
क्षीणे ह्यायुषि संशुद्धः सः गच्छेद्वैष्णवं पदम् ॥ ३०८ ॥
गुरुणा दीक्षितस्त्वेवं दुर्लभे मण्डले शुभे ।
दीक्षयाऽसौ विशुद्धात्मा क्षीणपाशक्षयस्फुटः ॥ ३०९ ॥
एषा विप्र समाख्याता दीक्षा निर्वाणदा मया ।
यां प्राप्य पापान्मुच्यन्ते जन्मकोटिशतादपि ॥ ३१० ॥

(दीक्षायाः माहात्म्यम्)

न दीक्षायाः परं किञ्चिन्मोचनं भुवि देहिनाम् ।
नास्ति दीक्षासमं स्नानं नास्ति दीक्षासमं तपः ॥ ३११ ॥
न च दीक्षासमं तीर्थं न योगो दीक्षया समः ।
वैष्णवी दुर्लभा दीक्षा नाल्पपुण्यैरवाप्यते ॥ ३१२ ॥

---

३०६. c : S. जीव for जीवन्.
३०७. b : S. My. M. पाशे for पाशैः.
c. V. न क्षतः पूर्वको देहो.
३०८. d : S. सं for सः.
३०९. a : S. M. चैवं for त्वेवं.
c : V. सो for ऽसौ ; S. विमुक्तात्मा for विशुद्धात्मा.
d : A. V. चय for क्षय.
३१०. b : S. My. M. दीक्षा निर्वाण मयया.
३११. b : S. My. A. M. लोचनं for मोचनं.
३१२. a : My. V. नास्ति for न च.

यदापवर्गो भविता तदा जन्मास्य पश्चिमम् ।
तदाऽस्मिन् जायते श्रद्धा दिव्ये ज्ञाने तु वैष्णवे ॥ ३१३ ॥

संसारतरुविच्छेदविधायिपरशौ दृढे ।
ज्ञानस्य कारणं दीक्षा गुरौ दीक्षा व्यवस्थिता ॥ ३१४ ॥

ज्ञानविज्ञानवान् सोऽपि तत्त्वनिष्पादको गुरुः ।
हेतुभिर्ये विचाल्यन्ते तैरनागमवेदिभिः ॥ ३१५ ॥

न तीव्रशक्तिपातस्तु तेषां जातो द्विजोत्तम ।

(विष्णोः त्रिविधशक्तिपातः)

त्रिविधः शक्तिपातस्तु विष्णोरद्भुतकर्मणः ॥ ३१६ ॥

दिव्यो मन्दस्तथा मध्यो विज्ञेयो देशिकोत्तमैः ।

(दीक्षाग्रहणे विष्णोः दिव्यशक्तिपातस्य कारणत्वम्)

पापभीरुः शुभाचारः शास्त्रान्वेषणतत्परः ॥ ३१७ ॥

विष्णुभक्तश्च दीक्षार्थी गुरुमन्वेषितश्चिरम् ।
सत्त्वस्य शक्तयः सर्वाः अनुगृह्णन्ति तं द्विज ॥ ३१८ ॥

---

३१३. b : S. My. A. जन्मस्य M. जन्मन्य for जन्मास्य.
३१४. c : A. करणं for कारणं.
d : A. गुरो : for गुरौ.
३१५. b : V. ततस्तत्पापहा गुरुः.
c : S. My. A. ऽभिवार्यन्त for विचाल्यन्ते.
d : V. दूषकैः for वेदिभिः.
३१६. a : S. My. A. M. पृथिव्यां for न तीव्र०.
३१८. a : S. My. A. M. दीक्षार्थ for दीक्षार्थी.
b : My. A. अन्वषतः for अन्वेषितः.
d : A. V. तत् for तम्.

ततोऽनुग्राहिका शक्तिः दैवी दिव्या प्रवर्तते ।
ततश्चलितचैतन्यो दीक्षार्थं यतते द्विज ॥ ३१९ ॥

ततश्च परतत्त्वज्ञमाचार्यमधिगच्छति ।
दीक्षासंस्कारमाप्नोति यथोक्तं यो मया तव ॥ ३२० ॥

(विष्णुहस्तकलादिन्यासप्रकारः)

अथ दीक्षावसाने तु विष्णुहस्तं ददेत् गुरुः ।
येन दत्तेन भवति वासुदेवसमः पुमान् ॥ ३२१ ॥

करन्यासं विधायादौ देहन्यासमनन्तरम् ।
कृत्वा तु त्रिविधं विप्र सृष्टिस्थित्यन्तसंज्ञकम् ॥ ३२२ ॥

ध्यात्वा तत्परमं तत्त्वं शुद्धस्फटिकनिर्मलम् ।
वासुदेवाख्यमाद्यं यन्मुक्तिदं परमं मुने ॥ ३२३ ॥

न्यस्तस्य देशिकेन्द्रेण व्याप्य देहमथात्मनः ।
'द्वादशात्मा' तु विन्यस्य करयोरुभयोर्द्विज ॥ ३२४ ॥

पश्चात् स्वके शरीरे तु त्रिधा विन्यस्य यत्नतः ।

(हस्तद्वये सोमसूर्यकलयोः न्यासः)

हस्तयोरुभयोर्मध्ये सोमसूर्यकलां न्यसेत् ॥ ३२५ ॥

(वामहस्ते कलान्यासक्रमः)

वामे सोमकलां न्यस्य पूषाद्यङ्गुलिपर्वसु ।
अकारादिविसर्गान्ताः कलास्त्वेताः स्वनामभिः ॥ ३२६ ॥

---

३१९. b : S. My. A. M. देवकी या प्रवर्तते.
c : My. A. तयोश्च for ततश्च, V. द्विलीने for चलित.
d : S. My. A. M. यजते for यतते.
३२०. a : S. M. तन्त्र for तत्त्व.
३२१. b : S. My. M. हस्ते for हस्तं.
d : S. M. पुनः for पुमान्
३२५. b : S. My. वान्यस्य for विन्यस्य.
३२६. b : M. पूर्वा० for पूषा०,

पूषार्यमसुमनसः पुष्टिः प्रीती रतिस्तथा ।
सृष्टिधृतिर्मतिर्मेधा मनीषा चांशुमालिनी ॥ ३२७ ॥

शङ्खिनी च कला चान्या स्वच्छा सम्पूर्णमण्डला ।
करपर्वसु दातव्या इमास्तु करमध्यतः ॥ ३२८ ॥

(दक्षिणहस्ते कलान्यासक्रमः)

वामहस्ते कलां ध्यात्वा देशिको मुनिसत्तमः ।
दक्षिणेऽप्येवमेवं तु ध्यायेत्सूर्यकलां मुने ॥ ३२९ ॥

'द्वादशाक्षर'मन्त्रस्य बीजैकैकं ततो न्यसेत् ।
तपनी तापनी चैव धूम्रा वै ज्वलिनी तथा ॥ ३३० ॥

ज्वालिनी पावनी चान्या हव्यवाहा च वै द्विज ।
तेजोवती च शतधा वामा पद्मप्रबोधिनी ॥ ३३१ ॥

तमोपहा द्वादशी तु सूर्यहस्ते कलास्त्विमाः ।

(दक्षिणहस्ताङ्गुलिपर्वसु षोडशकलान्यासक्रमः)

दक्षिणस्य तु हस्तस्य षोडशाङ्गुलिपर्वसु ॥ ३३२ ॥

---

३२७. a : My. V. अर्यमा for अर्यम.
d : निष्ठा for मनीषा.
३२८. b : S. My. A. M. स्वच्छ for स्वच्छा.
d : S. आहुस्तु मुनिरुच्यते.
३२९. c : V. एकां for एवं.
३३०. b : S. A. M. बीजैकैकं च तन्न्यसेत्.
c : M. तपिनी for तपनी.
d : S. धूमा for धूम्रा.
३३१. a : S. A. M. जलिनी for ज्वालिनी.
b : V. ०थ for च.
c : M. तेजोवनी for तेजोवती.
३३२. a : S. My. तमोवहा V. तपोपह for तमोपहा.
d : A. M. अङ्गुल for अङ्गुलि.

उद्भवाद्याः कलाः योज्याः विशेषज्ञेन मन्त्रिणा ।
अमृतांशुं ततो ध्यात्वा सूर्यहस्ततले न्यसेत् ॥ ३३३ ॥

(उद्भवादिषोडशकलापरिगणनम्)

उद्भवा विरजा चैव विश्वाख्या विमला परा ।
बिन्दुमालिनि संज्ञा च सुप्रभासा तथा मुने ॥ ३३४ ॥

जलदा क्षीरदाख्या च तथान्या च सुवर्चसा ।
आज्यभागा हविर्भागा आहुत्याख्या तथा परा ॥ ३३५ ॥

यज्ञोद्भवा व्यापिनी च पूर्णा चाङ्गुलिपर्वसु ।
निर्वाणाख्या षोडशी तु सूर्यहस्तस्य मध्यतः ॥ ३३६ ॥

हुताशनकलाः ह्येताः ध्यात्वा सूर्यकरे द्विज ।

(विष्णुहस्तदानक्रमः)

पूर्वस्यिमुपविष्टं तु शिष्यमालभ्य तत्त्वतः ॥ ३३७ ॥

'द्वादशाक्षर'मन्त्रस्य बीजैकैकं तु विन्यसेत् ।
एवं तु सकलीकृत्य मन्त्री शिष्यं यथाविधि ॥ ३३८ ॥

---

३३३. a : My. A. M. ज्ञेया for योज्याः.
c : My. अद्भुतांशुं for अमृतांशुं.
३३४. a : My. विरता A. विरदा for विरजा.
d : S. सुभानु च A. M. सुभासा च for सुप्रभासा.
३३५. a : S. My. A. ददला M. चलदा for जलदा.
c. S. My. A. M. आज्यगर्भा हविर्गर्भा.
d : S. M. अहल्याख्या My. A. अहन्याख्या for आहुत्याख्या.
३३७. b : S. My. A. M. कला for करे.
c : S. V. M. पूर्वस्यां for पूर्वस्यं.
d : My. मध्यतः for तत्त्वतः.
३३८. b : M. बीजैरेकं for बीजैकैकं.
c : My. एकं for एवं ; V. कृत्वा for कृत्य.
d : S. My. A. M. यथाकालं for मन्त्री शिष्यम्.

कालतत्त्वात् समारभ्य यावत्तत्त्वं निरामयम् ।
'मूल'मन्त्रस्य बीजैस्तु शिष्यमालभ्य देशिकः ॥ ३३९ ॥

ततोऽस्य मस्तके दद्यात् विष्णुहस्तं सुनिर्मलम् ।
दक्षिणं प्रथमं दत्त्वा तेन दग्ध्वा तु पातकम् ॥ ३४० ॥

पाशजालं तु निर्दह्य ध्यात्वा वह्निकलां मुने ।

(दीक्षानिर्वर्तनक्रमः)

दीक्षां निर्वर्तयेत्तस्य कलाध्वाख्यानयोगतः ॥ ३४१ ॥

वह्नौ ध्यानात्मके ब्रह्म ध्यात्वा होमं तु पूर्ववत् ।
पूर्णाहुत्यो दश द्वे च पूर्णाय प्रतिपाद्य च ॥ ३४२ ॥

ततोच्छिष्टं ददेत्पश्चात् सहशिष्यैस्तु देशिकः ।

(शिष्याप्यायनम्)

ततः सोमकलाः पूर्णाः वामहस्ते निधाय तु ॥ ३४३ ॥
शिष्यस्याप्यायनार्थं तु देहसंरक्षणाय च ।

(विष्णुहस्तसमर्पितस्य जीवनमुक्तत्त्वम्)

जीवन्मुक्तः स विज्ञेयो विष्णुहस्ते समर्पिते ॥ ३४४ ॥

---

३४०. b : V. तु for सु०.

३४१. a : A. M. च for तु.
d : S. A. M. कलाख्याध्यान for कलाध्वाख्यान.

३४२. b : S. My. पूर्वतः for पूर्ववत्.

३४३. a : S. My. A. M. ततो छिद्रं for ततोच्छिष्टं.
d : S. च for तु.

ततः समापयेत् दीक्षां वैष्णवीं भुक्तिमुक्तिदाम् ।

(दीक्षान्ते शिष्यस्याभिषेकविधानम्)

ततोऽभिषिञ्चेत् शिष्यं तु शिक्षितं शास्त्रपारगम् ॥ ३४५ ॥

(दीक्षाभिषेकयुक्तस्य महत्त्वम्)

एवं दीक्षाभिषेकाभ्यां संयुक्तो यो द्विजोत्तम ।
भगवद्वंशजातस्तु शुद्धो भागवतो वशी ॥ ३४६ ॥
स सर्वत्राधिकारी स्यात् वेदशास्त्रागमादिषु ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
दीक्षालक्षणविधानं नाम नवमोऽध्यायः

---

३४५. a : V. समाप्यते दीक्षा for समापयेत् दीक्षा.
b : V. वैष्णवी भुक्तिमुक्तिदा.

३४६. My. 'इति नवमोऽध्यायः', S. नारद for नारदीय ; S. लक्षणालक्षण for लक्षण०.

# दशमोऽध्यायः

## [अभिषेकविधिनिरूपणाध्यायः]

(अभिषेकविधिवर्णनार्थं नारदं प्रति गौतमस्य प्रार्थना)

**गौतमः—**

अभिषेकं समासेन कथयस्व प्रसादतः ।
दीक्षितस्य तु शुद्धस्य देशिकत्वं यथा भवेत् ॥ १ ॥

(अभिषेकार्थं वरणीयस्याचार्यस्य लक्षणम्)

**नारदः—**

संहितार्थमिह ज्ञात्वा गुरुदेवाग्निपूजकम् ।
आत्मतृप्तं सुसंतुष्टं सुशीलं प्रियवादिनम् ॥ २ ॥
शान्तं दान्तं शुचिं दक्षम् आचार्यत्वे नियोजयेत् ।

(कामनानुरूपाभिषेकमण्डलदिङ्निर्देशः भद्रपीठस्थाननिर्देशश्च)

भद्रपीठं तु संस्थाप्य शिष्यस्येच्छावसेन तु ॥ ३ ॥
राज्यकामस्य पूर्वस्यां रिपुध्वंसाय दक्षिणे ।
कार्यं पश्चिमतः शान्त्यै पुष्ट्यर्थं चोत्तरे तथा ॥ ४ ॥
ऐशान्ये योगसंसिद्ध्यै जयार्थी हुतभुग्दिशि ।
विद्वेषाय तु नैर्ऋत्यां देशत्यागाय वायवे ॥ ५ ॥

---

१. b : S. My. A. M. ब्रह्मन् ब्रूहि प्रसादतः.
२. a : S. इति V. इदं for इह.
   b : S. V. पूजनम् A. पूर्वकम् for पूजकम्.
३. a : S. My. A. M. क्षान्तं for शान्तं.
   b : V. आचार्यञ्च for आचार्यत्वे.
५. a : S. M. ईशान्यां for ऐशान्ये.

शुभार्थी शुभदिग्भागे पुष्पैर्मण्डलमालिखेत् ।
कृत्वा तु पूर्ववद्यागम् इदं कुर्याद्यथाविधि ॥ ६ ॥

द्विहस्तमेकहस्तं वा कृत्वा पद्मं मनोरमम् ।
कल्पितं पुष्पमालाभिः पद्मिनीपत्रसंयुतम् ॥ ७ ॥

पत्रवल्लीभिराकीर्णं सुगन्धरजसापि वा ।
तन्मध्ये विन्यसेन्मन्त्री भद्रपीठं सुशोभनम् ॥ ८ ॥

(अभिषेकार्थं घटादिन्यासव्यवस्था)

रोचनाच्छुरितं शुद्धं चन्दनेनानुलेपितम् ।
तत्राष्टौ दिक्षु कलशान् सर्वलक्षणलक्षितान् ॥ ९ ॥

भूषितान् पुष्पमालाभिः पूर्णान् तीर्थोदकैः शुभैः ।
सर्वौषधिसमायुक्तान् रत्नगर्भान् सपल्लवान् ॥ १० ॥

सिद्धार्थरोचनादूर्वासितचन्दनचर्चितान् ।
सर्वासु दिक्षु विन्यस्य तेषु सम्पूजयेत्ततः ॥ ११ ॥

'द्वादशाक्षर'मन्त्रस्य वर्णैकैकेन देशिकः ।
तत्त्वानि भुवनाध्वान्तं ध्यात्वा कुम्भेषु विन्यसेत् ॥ १२ ॥

---

६. c : M. तं for तु.
d : S. My. M. ततो for यथा.
७. b : My. मनोहरम् for मनोरमम्.
d : V. सद्मनः पत्र० for पद्मिनीपत्र०.
८. a : S. तत्र for पत्र.
९. c : A. My. V. विष्णु for दिक्षु.
१०. d : M. सुपल्लवान् for सपल्लवान्.
१२. a : S. My. A. M. देवस्य. for मन्त्रस्य.
b : V. वर्णकैकेन for वर्णैकैकेन.
c : S. My. A. M. कलादि for तत्त्वानि.
d : S. My. A. M. तत्त्ववित् for विन्यसेत्.

विन्यस्य पाणिपादेषु कलापदविभागशः ।
ततो ध्यात्वा न्यसेच्चक्रं मन्त्री भद्रासनोपरि ॥ १३॥

(दीक्षाभिषेकप्रकारः)

यथोक्तमर्चनं कृत्वा तस्मिन् शिष्यं निवेशयेत् ।
पूर्वास्यं तं कृतन्यासं तत्त्वालब्धमलङ्कृतम् ॥ १४ ॥

स्नापयेदुच्चरन् मन्त्रं तत्त्वालब्धं घटैः शुभैः ।
स्त्रीभिः सुस्वरकण्ठीभिः गीयमानेऽथ मङ्गले ॥ १५ ॥

(समयिलक्षणम्)

दीक्षायां संस्कृतो योऽसौ समयी सम्प्रकीर्तितः ।

(दीक्षितस्य लक्षणम्)

विधिनानेन समयी योऽभिषिक्तः स दीक्षितः ॥ १६ ॥

(चक्रवर्तिनः लक्षणम्)

द्विधैवं चक्रवर्ती स्यात् योऽभिषिक्तस्तु वैष्णवः ।

(अभिषिक्तलक्षणम्)

यस्त्वेवमेवं त्रिःकृत्वा सोऽभिषिक्तः उदाहृतः ॥ १७॥

---

१३. a : V. प्रणवान्तेषु लोकेषु
b : S. My. विभागतः for विभागशः.
c : S. A. तमो for ततो.
१४. d : V. कृत्वा for तत्त्वा०.
१५. b : S. My. M. तत्त्वाल्ल० for तत्त्वाल०.
c : V. A. कण्ठाभिः for कण्ठीभिः.
d : S. च for ०थ.
१६. a : My. संस्थितो V. सुस्तुतो for संस्कृतो.
b : S. समधी : for समयी.
c : S. My. M. समधी for समयी.
१७. a : V. विधैव for द्विधैवं.
b : S. My. A. M. स for ०तु.
c : V. यष्ट्वेवमेव त्रिष्की.

(गुरोः लक्षणम्)

योऽभिषिक्तश्चतुर्धैवमात्मतत्त्वे नियोजितः ।
विज्ञेयः स गुरुर्नाम सर्वशास्त्रार्थतत्त्ववित् ॥ १८ ॥

(आचार्यस्य लक्षणम्)

योऽभिषिक्तो गुरुस्त्वेवं विद्यातत्त्वे नियोजितः ।
आचार्यः स तु विज्ञेयः सर्वैर्वन्द्यः सदा भवेत् ॥ १९ ॥

(भगवान् इत्यस्य लक्षणम्)

अचार्यः परतत्त्वस्थो योऽभिषिक्तो भवेद्द्विज ।
भगवान् इति सम्प्रोक्तो यस्मात् भागवतो भवेत् ॥ २० ॥

(एककुम्भाभिषेकप्रकारः)

अभिषेकं प्रवक्ष्यामि कुम्भेनैकेन साम्प्रतम् ।
सर्वलक्षणसम्पन्नं हैमं राजतमेव वा ॥ २१ ॥
ताम्रं चैवाथ विप्रेन्द्र मृण्मयं वाथ शोभनम् ।
वासुदेवघटं कल्प्य मन्त्रतोयामृतार्णवम् ॥ २२ ॥
यावत्यः सरितो लोके तीर्थानि च सरांसि च ।
देवखातानि विप्रेन्द्र समुद्राः सप्त चैव हि ॥ २३ ॥
आवाह्य विन्यसेत्तस्मिन् वासुदेवात्मके घटे ।
तत्रस्थं यजनं कृत्वा वासुदेवस्य मन्त्रवित् ॥ २४ ॥

---

१८. a : V. चतुर्थे च for चतुर्धैवम्.
२०. d : S. M. भगवतो for भागवतो.
२१. c : S. My. A. सम्पूर्ण for सम्पन्नं.
२२. a : S. My. A. M. औदुम्बरं वा for ताम्रं चैवाथ.
b : S. My. A. M. वा सु० for वाथ.
c : A. पटं for घटं.
२३. a : S. A. परितः for सरितः.
c : S. भूतानि for खातानि.

चक्राब्जमध्ये सम्पूज्य वासुदेवं यथापुरा ।
रत्नगर्भघटं गृह्य सर्वौषधिसमन्वितम् ॥ २५ ॥

चन्दनागरुसंयुक्तं पुष्पमालाविभूषितम् ।
उष्णीषं मकुटं छत्रं पादुके पीठमेव च ॥ २६ ॥

शिष्यस्य सन्निधौ कृत्वा तमाचार्योऽभिषेचयेत् ।
स देवो युज्यते तस्मिन् प्रयच्छेत्तस्य तत्फलम् ॥ २७ ॥

पूर्वास्यं पीठमारोप्य सितवस्त्रविभूषितम् ।
चन्दनेन च गन्धेन गुरुः शिष्यं समालभेत् ॥ २८ ॥

आचार्यलक्षणं सर्वं ततस्तस्मिन् समर्पयेत् ।
उष्णीषं मुद्रिकां चैव योगपट्टकमासनम् ॥ २९ ॥

छत्रं च पुस्तकं चैव करणं कटकं तथा ।
कृष्णाजिनं चामरं च स्रुक्स्रुवौ च विशेषतः ॥ ३० ॥

आचार्यत्वं गृहाणेदं मया दत्तं तवाधुना ।
यथाहमद्यप्रभृति शिष्यानुग्रहकृत्तथा ॥ ३१ ॥

कुरुष्व त्वमपि ह्येवं शिष्याणामप्यनुग्रहम् ।
गुरोः सकाशाल्लब्ध्वाऽसौ तदाचार्यपदं ततः ॥ ३२ ॥

---

२५. b : V. पुरम् for पुरा.
२६. a : S. My. A. M. संपृक्तं for संयुक्तं.
 b : V. विराजितं for विभूषितम्.
२७. a : V. सच्छिष्यः for शिष्यस्य.
 c : A. M. V. पदयोः for स देवो.
 d : V. पृथक्चेत्तस्य तत्परम् ।
२८. c : S. My. A. M. सु० for च.
 d : S. M. समारभेत् for समालभेत्.
२९. b : My. सुपूजयेत् for समर्पयेत्.
३०. a : S. चक्रं My. चित्रं for छत्रं.
३२. d : A. My. M. गतः for ततः.

(अभिषेकक्रमे गुरोः सम्माननम्)

उत्थाय परया भक्त्या गुरोः पूजां समारभेत् ।
भद्रपीठमथारोप्य परिधाप्य च वाससा ॥ ३३ ॥

चन्दनेन सुगन्धेन समालभ्य च मन्त्रतः ।
ततः प्रणम्य विधिना आत्मानं तु निवेदयेत् ॥ ३४ ॥

अयमाज्ञाकरो दासः क्रेयः क्रीतस्तवाधुना ।
यदस्ति वित्तं तत्तुभ्यं मया सर्वं निवेदितम् ॥ ३५ ॥

एवमुक्त्वा तु कटकैः पूजयेत्कटिसूत्रकैः ।
गोभिर्दासीभिरन्यैश्च ग्रामैः रत्नैः स्वशक्तितः ॥ ३६ ॥

पूजयित्वा यथान्यायं वित्तशाठ्यं विना द्विज ।
प्रदक्षिणं ततः कृत्वा साष्टाङ्गं प्रणमेद्गुरुम् ॥ ३७ ॥

(शिष्याभिषेकप्रकारः)

ततोऽभिषेकं वक्ष्यामि सिद्धिदं दुर्लभं सदा ।
प्रवक्ष्ये सुकरं सौम्यमभिषेकं महाफलम् ॥ ३८ ॥

---

३३. b : S. पूजनमाचरेत् for पूजां समारभेत् ।

३४. d : S. My. A. M. च for तु.

३५. c : S. My. A. वित्तं तु मम यल्लब्धम्, M. एतत्तु for वित्तं तु.
d : S. M. यतः My. तत्तत् A. यत्तत् for मया.

३६. c : V. भोगैः for गोभिः.
d : A. M. ०रन्यैः for रत्नैः, S. My. A. M. शक्तिभिः for शक्तितः.

३७. d : S. My. A. M. अष्टाङ्गं for साष्टाङ्गं.

३८. a : V. अतो for ततो.
d : S. My. A. M. महाघटम् for महाफलम्.

वासुदेवं समभ्यर्च्य देवदेवमनामयम् ।
तत्र चित्रं सुविन्यस्य विष्णुकुम्भं सुशोभनम् ॥ ३९ ॥

छत्राकारमुखश्वभ्रं चन्दनोदकपूरितम् ।
अवर्णेन तु संचिन्त्य क्षीराब्धिं तत्र मन्त्रवित् ॥ ४० ॥

यत्नेन विन्यसेत् पश्चात् सम्पूर्णं शशिमण्डलम् ।
तत्र सर्वकलाभिन्नं वह्निषष्ठसबिन्दुकम् ॥ ४१ ॥

क्षीरकुन्देन्दुधवलं वकारासनसंस्थितम् ।
विन्यस्य कुम्भमध्ये तु जप्त्वा तु परमाक्षरम् ॥ ४२ ॥

अविग्रहं सुसूक्ष्मं च इष्टकल्पनया गुरुः ।
क्षीराब्धिमिन्दुधवलम् अष्टोत्तरशतं द्विज ॥ ४३ ॥

तमिमं दलसंछन्नम् अमृतप्लावितं घटम् ।
ध्यात्वा कृत्वा तु पूर्वस्यं शिष्यं विष्णुमधिष्ठितम् ॥ ४४ ॥

---

३९. c : S. My. A. M. वित्तं for चित्रं.

४०. a : S. My. A. M. चित्राक मुखशुद्धं च.
b : A. वदनो० for चन्दनो.

४१. a : M. चूर्णेन for यत्नेन.
c : V. ततः for तत्र.
d : S. M. सबीजकम् for सबिन्दुकम्; V. om. षष्ठ.

४२. b : M. च० for व०.
c : My कुंभं for कुंभ०.
d : S. My. A. M. आकरम् for अक्षरम्

४३. b : S. My. A. M. इष्ट्वा कल्पना गुरूः.
c : S. My. A. M. दुग्ध० for इन्दु०.

४४. a : A. M. S. V. इदं for इमं.
b : A. घृतम् for घटम्.
d : V. विष्टरविस्तृतम् for विष्णुमधिष्ठितम्.

अभिषिञ्चेत्ततः शिष्यं शुचिमेकाग्रमानसम् ।
मन्त्रसंस्कृततोयेन चूतपल्लवशोभिना ॥ ४५ ॥

सितचन्दनस्रग्दामशोभितेन घटेन तु ।

(अभिषेकावसरवर्णनम्)

अभिषेकोऽयमत्यन्तं मासि मासि प्रशस्यते ॥ ४६ ॥

मन्त्रशासनमुक्ताङ्गः साधकानां हितावहः ।
द्वादश्यां पञ्चदश्यां वा पुष्यर्क्षे रोहिणीषु वा ॥ ४७ ॥

राज्ञां संग्रामकाले वा यात्रायां वापि कारयेत् ।
अभिषेकमिदं नित्यं गुरोर्मन्त्रात्मनाम्भसा ॥ ४८ ॥

(अभिषेकफलश्रुतिः)

लब्ध्वैवं समवाप्नोति मनसा यद्विचिन्तितम् ।
प्रारब्धकार्यनिष्पत्तिं संग्रामे विजयं तथा ॥ ४९ ॥

दुर्भगानां पुरन्ध्रीणां कन्यकानां तथैव च ।
मृतापत्या च या नारी या च वन्ध्या सुदुःखिता ॥ ५० ॥

भूतग्रहोपविष्टा या दुःस्वप्नभयशङ्किता ।
वश्याकर्षणविद्वेषमुद्रिताः यास्तु मन्त्रिभिः ॥ ५१ ॥

---

४५. b : A. एकान्त for एकाग्र.
४६. d : S. ममासीत् for मासि मासि.
४७. a : V. साधनमुक्तानां for शासनमुक्ताङ्गः.
d : A. My. M. पुण्य० for पुष्य०; S. A. My. च for वा.
४८. d : S. My. A. M. गुरो मासात्मनाम्भसा.
४९. b : V. ०थ for यत्.
d : V. ०पि जयं for विजयं.
५१. a : S. A. M. उपदिष्टा for उपविष्टा.
d : A. M. S. मुदिता for मुद्रिता.

तासां तद्दोषनाशाय विधेयः वाञ्छितप्रदः ।
रोगार्तस्य तु मर्त्यस्य विधेयस्तु विशेषतः ॥ ५२ ॥

सर्वदैवं विधानेन कुर्वतो मन्त्रवादिनः ।
ऋषे न दुर्लभं किञ्चित् इहलोके परत्र च ॥ ५३ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायाम्
अभिषेकविधानं नाम दशमोऽध्यायः

---

५२. d : S. My. A. ०स्य for ०स्तु.
५३. c : S. अभिषेकान्न सुलभं; A. अभिषेको न सुलभम्, My. अभिषेकं न लभते.

# एकादशोऽध्यायः

## [समयाचारनिरूपणाध्यायः]

(दीक्षितसमयाचारवर्णनार्थं नारदं प्रति गौतमस्य प्रार्थना)

गौतमः—

ये वै समयिनां धर्माः श्रोतुमिच्छामि तान् क्रमात् ।
संसिद्धिं समवाप्नोति प्रविष्टो वैष्णवोऽध्वरे ॥ १ ॥

(दीक्षितसमयाचारवर्णनम्)

नारदः—

अथातः समयान् वक्ष्ये दीक्षितानां विशेषतः ।
कृतेषु येषु देवेशः प्रीतो भवति केशवः ॥ २ ॥

अर्चयेच्च समं भक्त्या त्रिविधेनान्तरात्मना ।
देवं च पूजयेन्नित्यं नित्यहोमं च कारयेत् ॥ ३ ॥

एककालं द्विकालं वा त्रिकालं वा स्वशक्तितः ।
आराधयेत् गृहे देवं दानं होमं च कारयेत् ॥ ४ ॥

त्रिकालं वा चतुष्कालं पञ्चकालमथापि वा ।
षट्कालं वा यथाशक्ति पूजनं साग्नितर्पणम् ॥ ५ ॥

कुर्यादायतने मन्त्री यथा सङ्कल्पमादितः ।
यजेद्द्वादशकालं वा साधको मुनिसत्तम ॥ ६ ॥

---

१. a : M. समयिकान् for समयिनाम्, S. My. M. धर्मान् for धर्माः.
   b : V. इच्छाम्यनु० for इच्छामि तान्.
३. a : V. गुरुः for समं.
४. b : A. My. S. वाथ for वा स्व ; A. भक्तितः for शक्तितः.
   d : S. My. A. M. दानहोमसमन्वितम्.
५. d : A. V. चाग्नि for साग्नि.

अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ।
अमावास्यां च जन्मर्क्षे सङ्क्रान्त्यां श्रवणे तथा ॥ ७ ॥

द्वादश्यां पौर्णमास्यां च शुभयोगे शुभे दिने ।
स्नपनं पूजनं होमं यथाशक्ति महाहविः ॥ ८ ॥

न लोपयेत् प्रयत्नेन दानं च विविधं शुभम् ।
देवगोब्राह्मणान् वृद्धान् यतीन् सिद्धान् सदार्चयेत् ॥ ९ ॥

एतेष्वन्येषु धर्मात्मा जितक्रोधः प्रियंवदः ।
सुभगः साधुवेषश्च सहिष्णुः प्रशमे रतः ॥ १० ॥

मङ्गलाचारशीलश्च सोपानत्को जितेन्द्रियः ।
पूजयेद्विष्णुभक्तांश्च समयी दीक्षितान् सदा ॥ ११ ॥

अन्नं चापि न भोक्तव्यम् अभागवतवेश्मनि ।
राजलीलाविलासाद्यैर्देवं संभावयेत्सुधीः ॥ १२ ॥

न कांस्यपात्रे भोक्तव्यं नाविकं च पयः पिवेत् ।
नक्तं वा परविद्धं वा एकादश्यां समाचरेत् ॥ १३ ॥

ज्ञात्वा मूलं च देशं च चारित्रं च गुणानपि ।
समये च भृतं शिष्यम् ऋतसंवत्सरोषितम् ॥ १४ ॥

परीक्ष्य चोपधाभिस्तु दद्याद्विद्यां विचक्षणः ।
सर्वेषामेव दानानां विद्यादानं विशिष्यते ॥ १५ ॥

---

८. a : A. वा for च.
d : S. My. A. M. विधानं च यथाहविः.
९. c : A. विप्रान् for वृद्धान्.
d : V. समर्चयेत् for सदार्चयेत्.
१२. b : A. ह्य for अ०.
d : S. My. A. M. संशाधयेत् for संभावयेत्.
१३. c : S. My. A. M. पुरपीठं for परविद्धं.
१४. a : S. My. A. M. कुलं for मूलं.
१५. b : A. S. परिदद्याद् विचक्षणः.

तस्मात्तु पात्रभूताय दीक्षिताय यथाविधि ।
दद्याद्विद्यामथाचार्यो सोऽन्यथा पातकी भवेत् ॥ १६ ॥

(मण्डले दीक्षितानां सप्तनामनिर्देशः)

समयी दीक्षितश्चैव चक्रवर्ती तथैव च ।
अभिषिक्तो गुरुश्चैव आचार्यो भगवान् इति ॥ १७ ॥
मण्डले दीक्षितानां तु नामान्येतानि सप्त वै ।

(सप्तयागानां नामकीर्तनम्)

यागाः सप्त समाख्याताः येषु नामान्यमूनि च ॥ १८ ॥
यागस्तु प्रथमो ज्ञेयः द्वितीयः स्तोम उच्यते ।
तृतीयस्तु महायागः चतुर्थोऽध्वर उच्यते ॥ १९ ॥
पञ्चमस्तु सवो ज्ञेयः षष्ठस्तु क्रतुरुच्यते ।
सप्तमस्तु हरिस्तोमः सप्तयागाः प्रकीर्तिताः ॥ २० ॥

(यागेन भगवदाराधयितुः संज्ञा)

यजेद्यागेन यो देवं समयी सः प्रकीर्तितः ।

(स्तोमेन भगवदाराधयितुः संज्ञा)

स्तोमेन यो यजेद्विष्णुं दीक्षितः स उदाहृतः ॥ २१ ॥

(महायागेन भगवदाराधयितुः संज्ञा)

चक्रवर्ती भवेत्सोऽसौ महायागेन यो यजेत् ।

(अध्वरेण भगवदाराधयितुः संज्ञा)

अध्वरेण यजेद्यस्तु सोऽभिषिक्त उदाहृतः ॥ २२ ॥

---

१६. c : A. विद्यां दद्यादथाचार्यो.
१८. a : V. मण्डपे for मण्डले.
b : A. सत्तम S. M. सप्तमे for सप्त वै.
c : S. My. A. मया for समा०.
२१. b : S. समधीः for समयी.

(सवादिना भगवदाराधकसंज्ञा)

गुरुः सवेन क्रतुना स आचार्य उदाहृतः ।

(हरिस्तोमेन भगवदाराधकस्य संज्ञा)

भगवान् इति सम्प्रोक्तो हरिस्तोमेन यो यजेत् ॥ २३ ॥

(भागवतस्य लक्षणम्)

भगवद्वंशजाताः ये ते वै भागवताः स्मृताः ।

(दीक्षितानां सदा निष्पापत्वम्)

यद्यत्तैर्विष्णवे दत्तं समन्त्रं वाप्यमन्त्रकम् ॥ २४ ॥

शुचिभिः सर्वदा दक्षैः सदाप्यशुचिभिस्तु वा ।
तत्सर्वमात्मसात्कृत्वा प्रीतो भवति केशवः ॥ २५ ॥

आलयो हृदयं तेषां परमं परमात्मनः ।
तेनैव सर्वदा तेषां पापात्मा तु न विद्यते ॥ २६ ॥

(दीक्षितमाहात्म्यवर्णनम्)

जन्मतो दीक्षिताः सर्वे देवदेवस्य शासनात् ।
आचार्यभूताः सर्वेषां विप्रादीनां स्वभावतः ॥ २७ ॥

तेषां सम्पूजनादेव पूजितो भगवान् भवेत् ।
सर्वावस्थायुतान् सर्वान् देवमुद्दिश्य पूजयेत् ॥ २८ ॥

---

२३. c : S. My. M. स प्रोक्तः for सम्प्रोक्तः.
d : S. स्तोभेन for स्तोमेन.
२४. a : S. ०थ for ये.
c : V. वैष्णवैः for विष्णवे.
२५. b : My. तदा for सदा ; S. A. तदा My. M. तथा for तु वा.
२६. d : S. पापानाम न विद्यते, V. पापं नाम न विद्यते.
२८. c : S. My. A. सर्वावस्थास्ततः सर्वे.

अनन्यशरणाः भक्ताः ज्ञेयास्ते वैष्णवोत्तमाः ।
न दोषाय भवेत्तेषां भूत्यर्थमपि पूजनम् ॥ २९ ॥

प्राप्तौ च (प्राप्तये ?) गतिमात्रं वै वेतनार्थं न पूजयेत् ।
भूतिमूलं यजेद्देवं न रक्षापोषणं विना ॥ ३० ॥

अज्ञानाद्वाथ मोहाद्वा लोभाद्वा वैरकारणात् ।
निन्दन्ननिन्दितांस्तान्वै विष्णुमेव विनिन्दति ॥ ३१ ॥

श्रद्धया परया तेभ्यो यद्दत्तं देवसन्निधौ ।
तत्सर्वं विष्णवे दत्तं नात्र कार्या विचारणा ॥ ३२ ॥

(यागाद्यधिकारिनिर्देशः)

सप्तस्वेतेषु यागेषु ब्राह्मणस्यैव योग्यता ।
यागे स्तोमे महायागे चतुर्थे तु महाध्वरे ॥ ३३ ॥

सवे च योग्यता राज्ञो नान्ययोः द्विजसत्तम ।
यागे स्तोमे महायागे योग्यता वैश्यजन्मनः ॥ ३४ ॥

---

२९. a : S. M. भक्त्या for भक्ताः.
b : A. M. My. वैष्णवाः मताः for वैष्णवोत्तमाः.
d : S. My. A. M. भृत्यानाम् for भूत्यर्थम्.

३०. a : V. प्रोक्तौ च गतियात्रायां.
b : S. M. वेतनान्न पूजयेत्; V. वेदन for वेतन.
c : A. भृति V. हृदि for भूति०.
d : V. रक्षादापो ऋणं विना.

३१. a : A. M. चाथ for वाथ.
b : My. चा for वा; S. वेग for वैर०.
c : M. सिद्धान् for निन्दन्.

३३. c ; d : S. My. A. M. om.

३४. a ; b : S. My. A. M. om.
c : A. स्तोभे for स्तोमे.

शूद्रस्य योग्यता यागे प्रथमे नान्यथा भवेत् ।

(दीक्षितानां नित्यनैमित्तिकाद्याचारनिरूपणम्)

ऊर्ध्वं तु पुण्ड्रकं कार्यं दीक्षितैर्वैष्णवैः सदा ॥ ३५ ॥

पाषण्डिनोऽन्यभक्तांश्च मनसापि न पूजयेत् ।
गोग्रासमग्रभिक्षां च दद्यादापद्गतोऽपि हि ॥ ३६ ॥

न संवसेच्च पतितैः नान्यभक्तैर्न चान्त्यजैः ।
विष्णुनिन्दाप्रसक्तैश्च पापिष्ठैर्नाप्यदीक्षितैः ॥ ३७ ॥

वैष्णवैर्दीक्षितैश्चापि विवादं न समाचरेत् ।
परीवादरता ये च विष्णोरज्ञानमोहिताः ॥ ३८ ॥

निर्वासियेत तान् सर्वान् निहन्यादक्षमे सति ।
विष्ण्वर्थे यः त्यजेत् प्राणान् गुरोर्वाथ निमित्ततः ॥ ३९ ॥

तस्य पुण्यफलावाप्तिं कश्शक्नोत्यभिवर्णितुम् ।
यद्ब्रूयुर्वैष्णवाः विप्राः प्रसिद्धं चागमोदितम् ॥ ४० ॥

तत्कार्यं मन्त्रिणा विप्र सर्वत्रैवाविशङ्कया ।
प्रियो भवति तेनास्य केशवो भक्तवत्सलः ॥ ४१ ॥

न चान्यदेवताभक्तिमापत्स्वपि समाचरेत् ।
विष्णुनामाङ्कितं सर्वं कुर्यात् पुत्रादिकं स्वकम् ॥ ४२ ॥

---

३५. c : M. ऊर्ध्वकं पुण्ड्रकं for ऊर्ध्वं तु पुण्ड्रकं, S. M. कुर्यात् for कार्यं.
३६. d : M. वा for हि.
३९. a : S. V. M. निर्धना मे च for निर्वासियेत.
d : S. वा च for वाथ.
४०. b : A. कश्शक्तो ह्यभिवर्णितुम्.

स्वमन्त्रं च स्वमुद्रां च स्वमूर्तेर्नाम मन्त्रवित् ।
प्रकाशयेन्न चान्यस्य सिद्धिहानिः प्रकाशिते ॥ ४३ ॥
उपलं वालुका वापि मृत्पिण्डं प्रतिमा तु वा ।
पूजितं मुनिमुख्याद्यैः विष्णुमारोप्य कुत्रचित् ॥ ४४ ॥
'द्वादशाक्षर'मन्त्रेण तदाराध्य द्विजोत्तमः ।
एवमेव स्वयं व्यक्तान् स्वमन्त्रेणाथवा यजेत् ॥ ४५ ॥
सर्वमन्त्राश्च योक्तव्याः तत्राराधनकर्मणि ।
सकलं कर्म तन्त्रोक्तं पुराधर्मानुरूपतः ॥ ४६ ॥
तिथौ च नष्टचन्द्रायां तथान्यजनसन्निधौ ।
नातिद्रुतं न चात्युच्चैः सिद्धान्तं वैष्णवं पठेत् ॥ ४७ ॥

(उत्सवकालनिर्देशः)

माघमासे पुनर्वस्वोः वैशाखे श्रवणे दिने ।
श्रावणे मासि रोहिण्याम् आर्द्रायां मार्गशीर्षके ॥ ४८ ॥
आषाढे हस्तनक्षत्रे कार्तिके रोहिणीदिने ।
अवतारदिनेष्वेषु तथान्येषु हरेः प्रभोः ॥ ४९ ॥
जाते राजकुमारे तु यथा स्यादुत्सवो महान् ।
तथैतेषूत्सवं कुर्यात् सवनाद्यं विशेषतः ॥ ५० ॥

---

४३. d : S. My. A. M. प्रसिद्धानि प्रकाशते.
४४. a : A. उत्पलं for उपलं; S. My. A. M. वालुकं for वालुका.
b : A. V. प्रतिमां for प्रतिमा.
४५. b : My. तदारभ्य for तदाराध्य.
४६. c : V. तत्र कर्मोक्तं S. M. कर्म तत्रोक्तं for कर्म तन्त्रोक्तं.
४७. a : S. M. तथा च for तिथौ च; V. तुष्ट for नष्ट.
c : My. नचानुच्चैः for न चात्युच्चैः.
४८. d : S. भद्रायां मृगशीर्षके.
५०. d : S. M. ०वित् A. My. ०वत् for ०तः.

मत्स्यकूर्मवराहाणां दद्यान्मासं विशेषतः ।

(वैष्णवानां वैशिष्ट्यम्)

न निन्द्याःविष्णुभक्ताश्च दीक्षिताश्च विशेषतः ॥ ५१ ॥

अवमानाद्वैष्णवानां तु नरो नरकमाप्नुयात् ।
दत्तमिष्टं ततोऽधीतम् अवैष्णवकृतं च यत् ॥ ५२ ॥

वृथा भवति तत् सर्वम् इति सत्यं तवोदितम् ।

(दैनन्दिनकृत्यनिर्देशः)

ब्राह्मे मुहूर्ते उत्थाय संस्मरेत् पुरुषोत्तमम् ॥ ५३ ॥

शयनादुत्थितः पूर्वं मनसा वन्द्य माधवम् ।
वामं विन्यस्य चरणं निष्क्रमेत ततो बहिः ॥ ५४ ॥

मूत्रोत्सारं ततः कुर्यात् अन्तर्धाय तृणैर्महीम् ।
उदङ्मुखो दिवा कुर्यात् निशायां दक्षिणामुखः ॥ ५५ ॥

कृतमूत्रपुरीषश्च शुद्धामादाय मृत्तिकाम् ।
सुशोधितां समादाय लिङ्गे दत्त्वाथ मृत्तिकाम् ॥ ५६ ॥

गुदे तिस्रः सप्त हस्ते ततः सप्त गुदे पुनः ।
उभयोर्हस्तयोः सप्त पुनर्दत्त्वा च मृत्तिकाम् ॥ ५७ ॥

लिङ्गे द्वे मृत्तिके दत्त्वा शौचमेवं कृतं भवेत् ।
प्रक्षाल्य च मृदा पादौ विधिनाचम्य वाग्यतः ५८ ॥

---

५१. b : S. M. ननिन्द्यां मां विशेषतः.
V. नान्यम्मासं विशेषतः.
c ; d : V. न निन्द्यात् विष्णुभक्तांश्च दीक्षितांश्चविशेषतः ।
५२. a : V. कुत्सनात् for अवमानात्.
५३. a : My. व्यर्थं for वृथा.
५५. a : M. V. उच्चारं for उत्सारं.
५६. d : My. च for थ ; V. मृत्तिकाः for मृत्तिकाम्.

(ब्राह्मादितीर्थानि तेषां विनियोगश्च)

अङ्गुष्ठमूलं ब्राह्मं तु तीर्थमित्यभिधीयते ।
कायमङ्गुलिमूलं तु अङ्गुल्यग्रं तु दैविकम् ॥ ५९ ॥

पैत्रिकं हस्तमध्यं तु तीर्थं दक्षिणहस्तजम् ।
पैत्रिकेण पिबेत्तोयं ततो ब्राह्मेण मार्जयेत् ॥ ६० ॥

दैविकेन स्पृशेदङ्गं तेषां सिद्धिं यदीच्छति ।

(आचमनविधौ अङ्गस्पर्शक्रमः)

नास्यमङ्गुष्ठतर्जन्यौ नेत्रेऽङ्गुष्ठमनामिकाम् ॥ ६१ ॥

श्रोत्रेऽङ्गुष्ठकनिष्ठाभ्यां नाभ्यामङ्गुष्ठकेन तु ।
तलेन हृदयं स्पृष्ट्वा मूर्धानं पञ्चभिः स्पृशेत् ॥ ६२ ॥

तथैव बाहू संस्पृश्य विधिराचमने स्मृतः ।

(सन्ध्योपासनक्रमनिर्देशः)

ध्यात्वा नारायणं देवं निर्गुणं पुरुषोत्तमम् ॥ ६३ ॥

ततस्तु प्रयतो ब्राह्मीं सन्ध्यामाचम्य भक्तितः ।
दैवीं सन्ध्यामुपासीत वैष्णवीं तदनन्तरम् ॥ ६४ ॥

स्नातो विशुद्धदेहस्तु भवेद्भागवतो नरः ।
ततो भागवतानां तु सन्ध्याकल्पं वदामि ते ॥ ६५ ॥

विमुक्तपापः शुद्धात्मा याति विष्णोः सलोकताम् ।
धातारं च प्रपद्यैवं वरुणं सर्वदेहिनाम् ॥ ६६ ॥

---

५९. a : A. ०मूर्ध्वं for मूलं.
६०. b : S. A. M. पिबेत् ब्राह्मण तोयं तु ; My. पिबेत् ब्रह्मेण तोयं तु.
६१. c : A. S. My. तर्जन्योः for तर्जन्यौ.
६३. a : S. My. M. बाह्वोः for बाहू.
b : S. My. A. M. तु सः for स्मृतः.
६५. b : My. भागवतोत्तमः for भागवतो नरः.

पुनन्तु देवाः सर्वे मां पुनन्तु च नवग्रहाः ।
गणाः रुद्रास्तथादित्याः पुनातु भगवान् हरिः ॥ ६७ ॥

विश्वेदेवाश्विनौ तार्क्ष्यःमरुतः पितरो ग्रहाः ।
अनेनाचमनं कृत्वा तथैव प्रणवेन तु ॥ ६८ ॥

प्रोक्षयेत् पञ्चमन्त्रैस्तु दद्यादर्घ्यं तु तैर्द्विज ।
'मूल'मन्त्रशतं जप्त्वा परिभ्रम्य प्रदक्षिणम् ॥ ६९ ॥

नमस्कृत्वा दिशः सर्वाः स्तोत्रमन्त्रान् जपेत्ततः ।
एवं स्नानाद्यमापाद्य प्रातः मध्याह्नतो द्विज ॥ ७० ॥

विना स्नानं तथा सायं नित्यमेवं समाचरेत् ।

(वैष्णवानां विशेषाचारकथनम्)

सत्यमक्रोधमस्तेयं धीश्शौचं ह्रीर्धृतिस्तथा ॥ ७१ ॥

संयतेन्द्रियतां विद्यां नित्यमेव समभ्यसेत् ।
गुरोर्निन्दाप्रवादाश्च न श्रोतव्याः कदाचन ॥ ७२ ॥

नान्यं देवं नमस्कुर्यादर्चयेद्वा कदाचन ।

(दीक्षितावासयोग्यायोग्यस्थानादिनिर्देशः)

शुभेऽजस्रं वसेद्देशे प्रशस्ते तु मनीषिभिः ॥ ७३ ॥

---

६७. a : S. V. M. देवताः for देवाः.
b : S. V. M. om च.
६८. d : A. My. M. च for तु.
६९. b : A. च for तु ; M. वै for तैः.
c : S. मंत्र जपं for मन्त्रशतं.
७०. d : A. M. S. प्राग्वत् for प्रातः.
७१. c : S. सत्यं स्तेयमकोपंच ; A. My. M. ०मस्त्येम् for ०मक्रोधं.
d : S. A. My om धृतिः.
७३. b : V. च A. न for वा.
d : S. My. A. M. ०षु for तु.

यत्र पुण्याः महानद्यः सागराः यत्र सन्ति च ।
यत्र सन्ति पलाशाद्याः वृक्षाः विप्राः कुशादयः ॥ ७४ ॥

पारसीकाः कटाहाश्च कीकटाः सिंहलास्तथा ।
कलिङ्गाः सिन्धुसौवीराः म्लेच्छदेशाः प्रयत्नतः ॥ ७५ ॥

वर्जनीयाः विशेषेण कामरूपान्विताश्च ये ।
एषां यद्वर्तते शास्त्रं चरित्रं तन्न चाचरेत् ॥ ७६ ॥

ऋषीणां ये स्मृताः देशाः वर्णाश्रमसमन्विताः ।
कुरुक्षेत्रादयः सर्वे ते वस्तव्यास्तु दीक्षितैः ॥ ७७ ॥

(वैष्णवैः आचरणीयचारित्रादिविवेकः)

चारित्रमेषु शास्त्रं वा वर्तते यद्विशेषतः ।
आचर्तव्यं चरित्रं च शास्त्रं सर्वैरनुष्ठितम् ॥ ७८ ॥

यद्ब्रूयुः पाञ्चरात्रज्ञाः विप्राः भागवतोत्तमाः ।
यत्कुर्युः तत्तथा कुयादन्यथा दोषभाग्भवेत् ॥ ७९ ॥

(नित्यादिकर्मसु स्वशिष्यनियोजनावसरः)

नित्ये नैमित्तिके काम्ये प्रायश्चित्ते द्विजोत्तम ।
नियोक्तव्याः स्वशिष्यास्तु कर्मशेषेषु वापदि ॥ ८० ॥

---

७४. b : V. सारङ्गाः for सागराः.
७५. a : V. मर्कराश्च for कटाहाश्च.
b : S. A. V. M. कीटकाः for कीकटाः.
७६. d : S. रोचयेत् for चाचरेत्.
७७. c : A. My. S. कुल for कुरु०.
७८. a : V. येषु for ०मेषु.
c : A. आवर्तव्यम् for आचर्तव्यम्.

(निषेकादिसंस्कारसम्पादनविधिः)

निषेकाद्यांस्तु संस्कारान् वैदिकांस्तु समाचरेत्।
पाञ्चरात्रोदितान् वापि एवं वंशैरनुष्ठितान् ॥ ८१ ॥

(युगपत् नित्यनैमित्तिकादिकर्मादिप्राप्ते पूर्वपरनिर्णयः)

नित्ये नैमित्तिके प्राप्ते पश्चान्नित्यं समाचरेत्।
कालातिक्रमदोषोऽत्र विद्यते न कदाचन ॥ ८२ ॥

नैमित्तिकं द्विधा प्रोक्तं नित्यानित्यतया मतम्।
अनित्यमुपरागाद्यम् अयनाद्यं तथा परम् ॥ ८३ ॥

नित्यनैमित्तिकं पश्चात् अनित्यस्य च सन्निधौ।
मासिकं तु ततः कुर्यात् सांवत्सरिकसन्निधौ ॥ ८४ ॥

तिथिनक्षत्रयोर्योगे पश्चान्नाक्षत्रिकं भवेत्।
तिथीनां पश्चिमो भागः तिथिकर्मसु पूजितः ॥ ८५ ॥

ऋक्षाणां पूर्वभागे स्यात् ऋक्षकर्म यदुच्यते।
आचार्याः बहवो यत्र प्रतिमा वा द्विजोत्तम ॥ ८६ ॥

तत्रैव देवकर्माणि कार्याणां बाह्यमूलता।
नैमित्तिकस्य काम्यस्य स्वाङ्गे काम्यं तु पूर्वतः ॥ ८७ ॥

येषु सर्वेषु सम्प्राप्ते प्रायश्चित्तं द्विजोत्तम।
तदेव पूर्वतः कार्यम् आचार्यैः तन्त्रपारगैः ॥ ८८ ॥

---

८१. c : S. A. My. ०रात्रान्वितान् for रात्रोदितान्.
d : My. ये स्व for एवं.
८३. b : My. मता for मतम्.
८४. c : S. A. M. पुनः My. पुरः for ततः.
८७. S. My. A. M. om.
८८. c : S. तथैव for तदेव; S. M. V. कुर्यात् for कार्यम्.

प्राप्तेषु स्वेष्वनेकेषु स्वबुद्ध्योह्य समाचरेत् ।

(वित्तानुरूपं वासुदेवादृते एकबिम्बस्थापनादिनिर्देशः)

वासुदेवादृते मूर्तिं स्थाप्य चैकाकिनीं द्विज ॥ ८९ ॥
उत्सवं स्नपनं दानं मण्डलेज्यां महाहविः ।
धनी चेत् सर्वदा कुर्यात् वित्तमेषां तु कारणम् ॥ ९० ॥

(आहारस्वीकारक्रमः)

शरीरयात्रां कुर्वीत हविश्शेषेण नान्यथा ।
ये पूजयेयुर्याः मूर्तीः तद्धिविश्शेषभोजनाः ॥ ९१ ॥
भवेयुर्भगवद्भक्ताः धनाढ्याः यदि चान्यथा ।
भुक्त्वान्यान्नं यजेयुर्ये तत् फलं तस्य वै भवेत् ॥ ९२ ॥
तस्मात् सर्वप्रयत्नेन तद्धविश्शेषभोजनाः ।
सम्पूजयेयुर्देवेशं सर्वत्र हितमिच्छवः ॥ ९३ ॥
पादावभ्युक्ष्य भुञ्जीत पीत्वा त्वर्हणकं जलम् ।
पञ्चप्राणाहुतीः पूर्वं पञ्चोपनिषदा मुनिः ॥ ९४ ॥

---

८९. a : A. स्वेषु नैकेषु for स्वेष्वनेकेषु.
b : S. M. स्वछन्दोस्य V. स्वबुद्ध्यास्य for स्वबुद्ध्योह्य.
c : S. My. A. मूर्तिः स्थाप्या चैकाकिनी द्विज.
९०. a : S. सवनं for स्नपनं.
b : S. A. My ०विधिः for हविः.
c : S. A. सति for धनी.
९१. c : S. A. My. यां मूर्तिं for याः मूर्तीः.
९२. a : S. A. ०भक्त्या for भक्ताः.
b : A. अनाध्यायदिवान्यथा ; My. आराध्या यदि वान्यथा.
९३. a : M. सर्वत्र यत्नेन for सर्वप्रयत्नेन.
d : V. सर्वतो for सर्वत्र.
९४. b : M. दत्त्वा for पीत्वा ; My. A M. त्वर्हणजं for त्वर्हणकं.
c : S. My. A. M. ०हुतिं for हुतीः.

भोजनान्ते तथा पीत्वा प्रणवेन समाहितः।
आचम्य पूर्ववन्न्यासं कृत्वा 'मूले'न पूर्ववत् ॥ ९५ ॥
एवं सायेऽपि भुञ्जीत ततो यागं समारभेत्।
हविरेकोऽपि यज्ञस्य भोगानां बहुद्धये(?) ॥ ९६ ॥
असामर्थ्यादभावाद्वा कदाचित् कार्यकर्मणाम्।

(स्नपने बिम्बविवेकः)

न रात्रौ स्नापयेन्मूले काम्यं वैशेषिकं विना ॥ ९७ ॥
उभयं जङ्गमे कुर्यात् नित्यं वापि समाचरेत्।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां समयाचारविधिर्नाम
एकादशोऽध्यायः

---

९५. d : S. My. A. मूले तु for मूलेन.
९६. c ; d : S. My. A. M. om.
९७. c ; d : S. My. A. M. om.
c : A. My. स्नपनं मूलं for स्नापयेन्मूले.
S. om. पाञ्चरात्रे ; S. समाचार M. सदाचार for समयाचार.

# द्वादशोऽध्यायः

## [हविर्लक्षणनिरूपणाध्यायः]

(नारदं प्रति अन्नभेदकथनार्थं गौतमकृतप्रार्थना)

**गौतमः—**

उच्यतामन्नभेदस्तु योग्यायोग्यप्रभेदतः ।
विष्णोराद्यस्य देवस्य नित्यनैमित्तिकादिषु ॥ १ ॥

(हविर्कल्पनार्थं ग्राह्यधान्यानां विवरणम्)

**नारदः—**

अथातः संप्रवक्ष्यामि लक्षणं हविषां मुने ।
तिलव्रीहियवाः माषाः गोधूमाश्च प्रियङ्गवः ॥ २ ॥

ग्राम्याः सप्त इमे ग्राह्याः चरुकर्मणि वैष्णवे ।
वेणुश्यामाकनीवारजर्तिलाश्च गवीधुकाः ॥ ३ ॥

कर्कटाः श्रुतकाः सप्त विज्ञेयास्तु वनोद्भवाः ।
शालयो दश संप्रोक्ताः तन्त्रेऽस्मिन् परमेष्ठिना ॥ ४ ॥

रक्तशाल्यो महाशाल्यः कलमाः गन्धशालयः ।
श्वेतशाल्यः सशूराश्च हेमभार्गवशालयः ॥ ५ ॥

---

१. a : V. अद्य देवर्षे for अन्नभेदस्तु.
   b : V. हविर्भेदः सलक्षणः.
   d : V. ०कासु च for ०कादिषु.
२. b : V. हविषोलक्षणं for लक्षणं हविषां.
३. a : My. श्राद्धाः A. मुद्गाः M. ग्राह्याः for ग्राम्याः, My. प्रोक्ताः A. ग्राम्याः for ग्राह्याः.
४. a : My. कर्कराः for कर्कटाः, A. My. शुतकाः for श्रुतकाः.
५. c : A. ०सशूकाः for सशूराः.
   d : My. भावर्ग for भार्गव.

सुकुमाराश्च सूक्ष्माश्च दर्शिताः शालयः स्मृताः ।
अन्तर्भेदाश्च बहवः सप्तमुद्गाः उदाहृताः ॥ ६ ॥

मुद्गाः कृष्णाश्च हेमाश्च श्वेताः पीताः महत्तराः ।
अञ्जनाभाश्च सप्तैते अन्तर्भेदाः उदाहृताः ॥ ७ ॥

श्वेताः कृष्णाश्च पीताश्च वन्याश्चैव महातिलाः ।
तिलानां पञ्चभेदास्तु ग्राह्यास्तु परिकीर्तिताः ॥ ८ ॥

(ग्रहणयोग्यतण्डुलस्वरूपम्)

वैष्णवानां गृहे शुद्धे दीक्षितानां गृहेऽपि वा ।
तण्डुलांस्तु प्रगृह्णीयात् विधिक्षुण्णांस्तु देशिकः ॥ ९ ॥

अकणानतुषानेव कृमिहीनानविक्रितान् ।
केशपाषाणहीनांस्तु प्राण्यङ्गरहितांस्तथा ॥ १० ॥

भस्माङ्गारविहीनांस्तु ह्यभग्नानलघूंस्तथा ।

(कणादिसहिततण्डुलोपयोगे दोषाः)

कणैस्तु भवति व्याधिः तुषैर्दारिद्र्यकं भवेत् ॥ ११ ॥

कृमिभिः पुत्रनाशस्तु केशैर्दारविनाशनम् ।
पाषाणैर्मरणं सिद्धम् अशन्या वाग्निना जलैः ॥ १२ ॥

प्राण्यङ्गैः व्याधयः प्रोक्ताः भस्मना कलहो ध्रुवम् ।
अङ्गारैर्वह्निना बाधा भग्नैर्भङ्गस्तु विग्रहः ॥ १३ ॥

---

८. c : S. My. A. M. ०दाश्च for ०दास्तु.
९. c : S. च for तु.
१२. a : M. व्रत for पुत्र०.
d : V. वह्निना for वाग्निना.
१३. c : S. My. A. चाथ for बाधा.

प्रवासो लघुभिश्चैव तस्मात्तांस्तु विवर्जयेत् ।

(हविषः अनेकविधत्वम्)

नित्यं नैमित्तिकं काम्यं हविरुक्तमनेकधा ॥ १४ ॥

प्रथमं नित्ययागे तु हविर्लक्षणमुच्यते ।

(मानविशेषाणां बिन्द्वादीनां लक्षणम्)

ततो मध्यमपुंसस्तु मध्यमाङ्गुलिसंभवम् ॥ १५ ॥

द्विपर्वस्राविणी बिन्दुः द्वात्रिंशद्बिन्दुभिः त्रुटिः ।
त्रुटिद्वयं तथा शुक्तिः तद्द्वयं प्रसृतं भवेत् ॥ १६ ॥

प्रसृताभ्यां प्रकूजस्तु तद्द्वयं कुडवं भवेत् ।
मानिका कुडवाभ्यां तु प्रस्थं तन्मानिकाद्वयम् ॥ १७ ॥

प्रस्थद्वयं शमं प्रोक्तं तद्द्वयं चाढकं भवेत् ।
शिवमाढकयुग्मं तु द्रोणं तद्द्विगुणं भवेत् ॥ १८ ॥

द्रोणद्वयं तु खारी स्यात् तत्त्रयं भारमुच्यते ।

(परिमाणानुसारं नवविधहविषां लक्षणम्)

पक्वं तु षण्णवतिभिः प्रस्थैः स्थाल्यां तु यद्धविः ॥ १९ ॥

तदुत्तमोत्तमं प्रोक्तं सर्वसिद्धिप्रदं हितम् ।
तस्माद्द्रोणविहीनं तु हविरुत्तममध्यमम् ॥ २० ॥

तस्मात्तथाविहीनं यदुत्तमाधममुच्यते ।
यदुत्तमोत्तमस्यार्धं तद्भवेन्मध्यमोत्तमम् ॥ २१ ॥

---

१५. d : S. A. M. V. सम्भवः for सम्भवम्.

१६. b : My. A. M. तुटि for त्रुटिः.

१७. a : My. A. प्रकुबं V. M प्रकूजं for प्रकूजः.
c : M. S. V. कुसुमाभ्यां for कुडवाभ्यां.

तस्मात् शिवविहीनं तु तद्धि मध्यममध्यमम् ।
तस्मात्तथा विहीनं तु विज्ञेयं मध्यमाधमम् ॥ २२ ॥

षोडशप्रस्थसंयुक्तं हविः स्यादधमोत्तमम् ।
तदर्धं तु हविः पक्वं कुर्याद्धममध्यमम् ॥ २३ ॥

आढकं तण्डुलानां तु विज्ञेयमधमाधमम् ।
एवमायतने विष्णोः स्थापितस्य हविःक्रमः ॥ २४ ॥

(गृहपूजायां परिमाणानुसारं हविषः लक्षणम्)

अन्यथा गृहपूजायां हविषां लक्षणं मतम् ।
षोडशप्रस्थसंयुक्तं तद्भवेदुत्तमं द्विज ॥ २५ ॥

तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत् ।
एतदेवाधमं प्रोक्तं मण्डले तु विशेषतः ॥ २६ ॥

(वैष्णवहविषः लक्षणम्)

अतोऽन्यूनं हविर्यत्तु तद्वैष्णवमुदाहृतम् ।

(विभवानुरूपं हविषः विधानम्)

गेहे वायतने वापि हवींष्येवं बहूनि च ॥ २७ ॥

---

२२. c : S. My. A. M. तावत् for तथा.
२३. d : A. My. M. यत्स्यात् for कुर्यात्.
२४. c : S. V. एवं मायात्मनो for एवमायतने.
२५. a : My. अन्यदा for अन्यथा.
b : My. A. हविषः for हविषां.
c : V. द्रोणमात्रं हविर्यत्तु.
२६. c ; d : S. My. A. M om.
२७. a : S. M. युक्तं for यत्तु.
d : V. वा for च.

यथान्यायं तु संकुर्यात् विभवस्यानुरूपतः ।

(होमाद्यर्थं हविषः प्रमाणम्)

आढकं वा शिवं वापि होमार्थं वैष्णवं हविः ॥ २८ ॥

एवमेव हि बल्यर्थं पृथगेव पचेन्नरः ।
सर्वेषामन्यदेवानां द्विप्रस्थार्धं यथाविधि ॥ २९ ॥

प्रस्थार्धं पूतनानां तु तथान्येषां यथारुचि ।
द्रोणमात्रान्न च न्यूनं काम्यकर्मणि सिद्धिदम् ॥ 30 ॥

तथा नैमित्तिकं प्रोक्तं दरिद्राणां यथाधनम् ।

(पायसान्नलक्षणम्)

गव्यं सर्पिः यथालाभं द्विगुणं तण्डुलं ततः ॥ 31 ॥

तण्डुलैस्तु समं मुद्गं निस्तुषं परिकीर्तितम् ।
तण्डुलाद्द्विगुणं गव्यं पयस्तोयं तदर्धकम् ॥ 32 ॥

एवं लक्षणसंयुक्तं पायसान्नं प्रकीर्तितम् ।

(गौल्यान्नलक्षणम्)

तण्डुलाद्द्विगुणं दुग्धं दुग्धार्धं तोयमाहरेत् ॥ 33 ॥

तण्डुलार्धं घृतं प्रोक्तं घृतात्तु द्विगुणं गुडम् ।
मुद्गसारं समं प्रोक्तं तण्डुलात्तु द्विजोत्तम ॥ 34 ॥

---

२८. c : V. स्यात् शिवं for वा शिवं.
२९. b : S. M. V. न वा A. नव for नरः.
d : V. रुचि for विधि.
30. a : b : S. My. A. M. om.
c : S. My. M. मात्रं for मात्रात्.
31. c : S. कामं for लाभं.
33. b : S. A. M. परमान्नं for पायसान्नं.
c : A. V. तण्डुलत्रिगुणं for तण्डुलाद्द्विगुणं.

एतैः पक्वं तथा गौल्यं कदलीफलसंयुतम् ।

(कृसरान्नस्य लक्षणम्)

कृसरं तण्डुलसमैः तिलैः पक्वं प्रकीर्तितम् ॥ ३५ ॥

(हरिद्रान्नस्य लक्षणम्)

हरिद्रान्नं निशायुक्तं मुद्गसारसमन्वितम् ।

(यवान्नस्य लक्षणम्)

यवान्नं तु यवैर्युक्तं तण्डुलादर्धसंख्यया ॥ ३६ ॥

(मिश्रान्नस्य लक्षणादिः)

एतत् सर्वं तु मिश्रान्नं सिद्धार्थेनान्वितं भवेत् ।
न पायसे तु लवणं व्यञ्जनं तु समन्वितम् ॥ ३७ ॥

घृते पक्वं तथा वर्षम् अपूपं शर्करान्वितम् ।
एवमेतत्कृतं सूपं मुद्गसारादिसंयुतम् ॥ ३८ ॥

पैष्टं वटफलाकारं घृते पक्वमुडुम्बितम् ।
अपूपानि च सर्वानि नाग्निकार्ये हितानि हि ॥ ३९ ॥

---

३५. a : S. My. यथा गव्यम् for तथा गौल्यं.

३६. d : S. A. तण्डुलार्धं तु संज्ञया.

३७. b : A. सिन्धूत्थेन for सिद्धार्थेन.
c : V. पायसं for पायसे.
d : V. तदन्वितम् for समन्वितम्.

३८. c : V. एतदेव स्मृतं for एवमेतत्कृतम्.
d : S. My. A. M. मुद्गसारसमन्वितम्.

३९. b : A. My. इडुम्बितम् M. उद्युम्बिकम् for उडुम्बितम्.
d : S. A. My. M. गुडाज्यसहितानि हि.

(अग्निकार्ये योग्यं हविर्द्रव्यम्)

गुडान्नं च यवान्नं च तिलान्नं मुद्गसंयुतम् ।
चित्रान्नं पञ्चधामिश्रम् अन्यत् केवलमुच्यते ॥ ४० ॥
अग्निकार्ये च योग्यानि सर्वाण्येतान्यनित्यके ।
नित्यहोमे तु शुद्धान्नं गौल्यं पायसमेव च ॥ ४१ ॥
बलिदाने च यागे च सर्वाणि विहितानि वै ।

(महाहविषः निवेदनावसरकथनम्)

महाहविर्न नित्ये तु कार्यं साधकसत्तमैः ॥ ४२ ॥
नैमित्तिके निवेद्यं तत् काम्यादौ च विशेषतः ।

(महाहविषः लक्षणम्)

द्विभाराद्दशभारान्तम् एकपात्रार्पितं तु यत् ॥ ४३ ॥
तन्महाहविरित्युक्तं विष्णोः प्रियकरं द्विज ।

(हविषः पाकार्थं स्थालीविवेकः)

स्थाली तु द्विविधा प्रोक्ता लोहजा वापि मृण्मयी ॥ ४४ ॥
नवैव मृण्मयी शस्ता पुनस्तप्तापि वापदि ।

(हविषः पाकप्रकारः)

प्रक्षाल्य 'विष्णुगायत्र्या' स्थाली'मष्टाक्षरेण' तु ॥ ४५ ॥

---

४१. a : V. ०षु for च.
 d : My. गुडं A. गुलं for गौल्यं.
४२. c : V. हि for न.
४३. b : V. तु for च.
 d : S. A. My. M. पात्रेऽन्वितं for पात्रार्पितं.
४४. b : V. प्रियतमं for प्रियकरम्.
 d : V. मृण्मया पे वा for वापि मृण्मयी; S. My. A. मृणमया for मृण्मयी.
४५. a : A. My. न चैषा मृण्मया शस्ता.
 c : A. My. दिक्षु for विष्णु.

स्पृष्ट्वा दक्षिणहस्तेन प्राङ्मुखो वाप्युदङ्मुखः ।
तण्डुलान् संस्पृशेत्तद्वत् 'द्वादशाक्षर'विद्यया ॥ ४६ ॥

तांस्तु वै'मूल'मंत्रेण क्षालयेत् 'प्रणवे'न च ।
क्षिपेत् स्थाल्यां तु तान् पश्चात् बीजेन'परमेष्ठि'ना ॥ ४७॥

चुल्यामारोपयेत् पश्चात् बीजेन 'पुरुषा'त्मना ।
अग्निं समेधयेत् पश्चात् 'विश्व'बीजेन साधकः ॥ ४८ ॥

'निवृत्या' चाभिघार्याथ 'सर्वे'णैवावतारयेत् ।
क्षालयित्वा जलैः पश्चात् ऊर्ध्वपुण्ड्रं तु भस्मना ॥ ४९ ॥

चतुर्दिक्षु शुभं कृत्वा पूर्वादिक्रमयोगतः ।
क्रमेणानेन संस्कुर्यात् द्वे बहून्यथ साधकः ॥ ५० ॥

(हविषः विभागप्रकारः)

अभिघार्य चतुर्भागं हविः कृत्वा 'हृदा'समम् ।
देवायैकं समुद्धृत्य दर्व्या पात्रेषु कल्पयेत् ॥ ५१ ॥

(निवेदितहविर्विनियोगक्रमः)

विनिवेदितचतुर्थांशं विष्वक्सेनाय कल्पयेत् ।
विष्वक्सेननिवेद्यं तु जलमध्ये विनिक्षिपेत् ॥ ५२ ॥

---

४७. a : S. A. My. नित्यान् for तांस्तु.
b : V. तु for च.
४८. b : A. My. परमात्मना for पुरुषात्मना.
४९. a : My. वा for चा०.
५०. a : S. M. दिक्षं for दिक्षु.
d : V. अपि for अथ.
५१. a : V. अभिघार्य ततः कुर्यात्.
b : V. चतुर्भागं for हविः कृत्वा.
५२. a : S. A. My. M. विनिवेदिते for विनिवेदित०.

शिष्टं तु गुरवे दद्यात् त्रिभागं दीक्षिताय वा ।
यतये लिङ्गिने वापि वैष्णवाय द्विजातये ॥ ५३ ॥

अन्यथा विनियुक्ते तु न प्रसीदति केशवः ।
द्वितीयेन तु भागेन होमं कृत्वा विधानतः ॥ ५४ ॥

तच्छेषं तन्मयेभ्यो वा शिष्येभ्यो वा परित्यजेत् ।
तृतीयेन बलिं दद्यात् प्रथमावरणे क्रमात् ॥ ५५ ॥

देवाः वायसरूपेण तिष्ठन्ति बलिकाङ्क्षिणः ।
नररूपेण वा तस्मात् गृह्णन्ति बलिमुत्तमम् ॥ ५६ ॥

चतुर्थं बान्धवैः सार्धं दीक्षितैर्मन्त्रिसत्तमः ।
भुञ्जीत यतिभिर्वापि पावनान्नेन भावितम् ॥ ५७ ॥

न दद्याच्च हविः शेषं दीक्षाहीनाय सर्वदा ।
दद्यात्तद्यदि सम्मोहात् क्रिया भवति निष्फला ॥ ५८ ॥

(बलिदानादिरहिते पूजने हविर्विभागक्रमः)

बलिदानविहीनं तु विहितं यत्र पूजनम् ।
दद्याद्द्विभागं देवाय शेषं पूर्ववदाचरेत् ॥ ५९ ॥

अग्निकार्यं विना मन्त्री पूजयेद्यदि शक्तितः ।
तत्र भागत्रयं देयं देवाय परमात्मने ॥ ६० ॥

(हविर्विविधत्वे विभागक्रमादिः)

द्वे वा बहूनि वा यत्र हवींषि विविधानि च ।
विधिनानेन संमन्त्र्य कल्पयेत्तन्त्रवित्तमः ॥ ६१ ॥

---

५६. a : A. My. S. वायुस्व० for वायस.
c : V. तेन for नर०.
५७. a : V. सर्वैः for सार्धं.
d : M. प्रणवान्तेन भावितः.
६०. c : S. My. A. M. अत्र for तत्र, V. देव for देयं.
६१. a : S. My. चत्वारि A. च वा त्रीणि for वा बहूनि.

अथवान्यं तु संस्कृत्य होमार्थं लक्षणान्वितम् ।
तेन होमं प्रकुर्वीत नित्यनैमित्तिकेऽपि वा ॥ ६२ ॥

तत्र द्विभागं देवाय दद्यात्पूर्वक्रमेण तु ।
अथवा बलिदानार्थं समन्नं पाचयेत् पृथक् ॥ ६३ ॥

तद्भागं च तथा दद्यात् देवायैव द्विजोत्तम ।
नित्यनैमित्तिकादावप्येवमेवाचरेत् क्रमात् ॥ ६४ ॥

(नैमित्तिकादिकर्मसु विनिवेदितस्य महाहविषः विनियोगः)

नैमित्तिकादौ यद्दत्तं विष्णवे तु महाहविः ।
दद्यात्तत् गुरुपूर्वेभ्यो वैष्णवेभ्यो विशेषतः ॥ ६५ ॥

शूद्रेभ्यो वापि तद्दद्यात् भक्तेभ्यो देवसन्निधौ ।

(हविर्विधानक्रमे व्यञ्जनपाकादिक्रमः)

व्यञ्जनानां क्रमं वक्ष्ये देवस्य विनिवेदने ॥ ६६ ॥

व्यञ्जनानि च पक्वानि कालेनैवानलेन वा ।
लवणेन विमिश्राणि तथा वै जीरकादिभिः ॥ ६७ ॥

फलानि चैव मूलानि खण्डितानि विशेषतः ।
यथालब्धानि सर्वाणि पवित्राणि शुभानि वै ॥ ६८ ॥

---

६२. a : S. My. A. M. ०वान्यत्र for ०वान्यं तु.
६३. d : V. अमंत्रं for समन्नं.
६४. a : S. तदा for तथा.
६५. c : S. My. A. M. तम् for तत्.
६६. a : V. च for वा ; My. वाथ for वापि.
६७. b ; A. च for वा.

अनेन विधिना देयं हविर्देवाय सर्वदा ।

(हविर्दुष्टत्वे कारणानि दुष्टहविषां विनियोगश्च)

न दद्यान्मन्त्रहीनं च क्रियाहीनं विवर्णकम् ॥ ६९ ॥

विस्रावितं गन्धदुष्टं निरीक्षितमदीक्षितैः ।
अपक्वमतिपक्वं च प्रमाणरहितं तथा ॥ ७० ॥

अत्युष्णमतिशीतं च निःशेषं यत्समुद्धृतम् ।
अव्यञ्जनमपात्रस्थं मुखवातादिदूषितम् ॥ ७१ ॥

अगुप्तं चाप्यनाधारम् अन्तस्तण्डुलमेव च ।
अपिधानविहीनं च परस्पृष्टं तथैव च ॥ ७२ ॥

भिन्नभाण्डगतं तद्वत् अर्कतापहतं तथा ।
केशपाषाणसंयुक्तम् अङ्गारतुषसंयुतम् ॥ ७३ ॥

अस्थिलोष्ठकृमियुक्तं चर्मदार्वादिसंयुतम् ।
तथैवापाकसम्पूर्णम् अभिघारविवर्जितम् ॥ ७४ ॥

अव्यञ्जनमगव्याज्यदधियुक्तमभावितम् ।
एवं दुष्टहविर्ज्ञात्वा वर्जयित्वा जले क्षिपेत् ॥ ७५ ॥

(निषिद्धहविर्निवेदने प्रायश्चित्तम्)

वर्जितं तु हविर्मोहात् यदि दद्यात्तु विष्णवे ।
निष्फलं पूजनं च स्यात् विनाशं चाधिगच्छति ॥ ७६ ॥

---

६९. a : S. M. देवं A. My. चेदं for देयं.
 d : S. My. A. पाक for क्रिया ; S. विकर्णकम् for विवर्णकम्.
७३. a : S. My. A. M. अन्न for भिन्न.
७४. a : S. My. A. M. स्थण्डिलेऽपि for अस्थिलोष्ठ.
 c : S. My. A. M. तथैव पाक० for तथैवापाक०.
७५. a : S. My. A. M. ०भक्ष्यञ्च for गव्याज्य.

तत्र तद्दोषशान्त्यर्थम् अष्टोत्तरसहस्रकम् ।
'मूल'मन्त्रं जपेत् पश्चात् तस्माद्दोषात् प्रमुच्यते ॥ ७७ ॥

(परिवारदेवताहविर्निवेदनक्रमः)

सर्वेषां परिवाराणां पाचयित्वा हविर्बुधैः ।
निवेद्यं च स्वनाम्नैव होमान्ते साधकोत्तमः ॥ ७८ ॥
दत्तमाराधकायैव विज्ञेयं नान्यथा भवेत् ।
एवं हविर्विधिः विष्णोः अन्येषां च समीरितः ॥ ७९ ॥
अतः परं यद्वक्तव्यं तद्वदस्व वदाम्यहम् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
हविर्विधानं नाम द्वादशोऽध्यायः

---

७८. b : My. पूजयित्वा for पाचयित्वा.
c : S. My. M. स्वनामेन for स्वनाम्ना.
७९. c : V. महा for विधिः.
S. om. पाञ्चरात्रे, S. नारद for नारदीय.

# त्रयोदशोऽध्यायः

## [मूर्तिलक्षणनिरूपणाध्यायः]

(उपादानद्रव्यभेदपूर्वकं सर्वमूर्तिलक्षणनिरूपणार्थं नारदं प्रति गौतमस्य प्रार्थना)

**गौतमः—**

त्वत्प्रसादान्मुनिश्रेष्ठ श्रुतं सर्वं मयाधुना ।
इदानीं सर्वमूर्तीनां लक्षणं सर्वतो वद ॥ १ ॥

स्थाने चैवासने चैव शयने यानके तथा ।
प्रब्रूहि मम देवर्षे द्रव्याणां भेदमेव च ॥ २ ॥

(उपादानद्रव्यभेदेन प्रतिमायाः पञ्चविधत्वम्)

**नारदः—**

शृणुष्व मम विप्रेन्द्र सर्वमेतद्यथाक्रमम् ।
शिलामयी लोहमयी चार्चा मणिमयी तथा ॥ ३ ॥

काष्ठजा मृण्मया चैव प्रतिमा पञ्चधा स्मृताः ।

(ब्राह्मणादिकर्त्रनुसारं प्रतिमार्थं शिलावर्णनिर्देशः)

चतुर्वर्णा शिला प्रोक्ता चातुर्वर्ण्यक्रमेण तु ॥ ४ ॥

ब्राह्मणस्य सिता प्रोक्ता रक्ता वै क्षत्रियस्य तु ।
वैश्यस्य पीता सम्प्रोक्ता कृष्णा शूद्रस्य कीर्तिता ॥ ५ ॥

---

१. d : V. ध्यानमेव च for सर्वतो वद.
३. b : A. सर्वतो माम् for सर्वमेतत्.
४. d : S. My. A. M. चतुर्वर्ण for चातुर्वर्ण्य.
५. b : V. च for तु.
d : S. My. A. M. N. चोच्यते for कीर्तिता

(प्रतिमार्थं शिलादिसंग्रहयोग्यस्थाननिर्देशः)

भूधराश्चापि ये मुख्याः तेषु ग्राह्याश्शिलाः सदा ।
हिमवान् हेमकूटश्च निषधश्च नगोत्तमः ॥ ६ ॥

त्रिकूटो माल्यवान् ऋक्षःश्रृङ्गवान् मलयस्तथा ।
गन्धमादनमेरू च गिरयश्चोत्तमाः स्मृताः ॥ ७ ॥

सह्यो विन्ध्यः पारियात्रमर्बुदश्च शिलोच्चयः ।
श्रीपर्वतो जयन्तश्च श्वेतपर्वत एव च ॥ ८ ॥

एतेषु च शिलाः ग्राह्याः वृक्षाश्चैव विशेषतः ।
गिरिष्वन्येषु वा ग्राह्याः तदलाभे तु भूगताः ॥ ९ ॥

(शिलादिसंग्रहणे वर्ज्याः प्रदेशाः)

नदीतीरे ह्रदतटे ग्राममध्ये चतुष्पथे ।
भूतिभूमौ श्मशाने च चण्डालशवरोषिते ॥ १० ॥

वातातपाग्नितप्ते च तथैव जलदूषिते ।
शर्करोषरसंयुक्ते निस्तृणे जलवर्जिते ॥ ११ ॥

मरुप्रायेषु देशेषु कण्टकद्रुमसङ्कुले ।
पक्वसत्त्वसमाकीर्णे म्लेच्छदेशेऽतिभीषणे ॥ १२ ॥

ग्रामान्ते चापि वल्मीके वर्जितव्याः शिलादयः ।

(शिलासंग्रहणार्थं प्रशस्ताः प्रदेशाः)

शुभपादपसंयुक्ते बहूदकतृणान्विते ॥ १३ ॥

---

८. b : V. मत्पुटश्च for अर्बुदश्च.
d : V. वेद for श्वेत.
९. d : S. My. भूरुहाः for भूगताः.
१०. c : S. My. A. M. N. प्रति for भूति.
११. a : A. M. वाततापाग्नि for वातातपाग्नि.
b : V. जन for जल.
१३. a : S. My. A. M. N. चैव for चापि.
b : V. द्विज for ०दयः.
d : N. V. पुण्योदक for बहूदक.

पद्मोत्पलसमाकीर्णे व्रीहिक्षेत्रसमन्विते ।
हिन्तालतालन्यग्रोधनारिकेलादिभूषिते ॥ १४ ॥

पलाशक्रमुकाश्वत्थन्यग्रोधोदुम्बरान्विते ।
कुशदर्भसमाकीर्णे शिलाः ग्राह्याः विचक्षणैः ॥ १५ ॥

(चतुर्विधशिलानां नामकीर्तनम्)

वारुणी चैव माहेन्द्री आग्नेयी वायवी तथा ।
चतस्रस्तु शिलाः प्रोक्ताः तासां लक्षणमुच्यते ॥ १६ ॥

(चतुर्विधक्षितेः नामकीर्तनम्)

चतुर्विधा क्षितिः प्रोक्ता वारुण्यैन्द्री च वायवी ।
आग्नेयी च तथा चान्या ताश्शृणुष्व यथार्थतः ॥ १७ ॥

(वारुणीशिलालक्षणम्)

स्निग्धा पुष्पवनोपेता तोयाढ्या सतृणा मही ।
सा वारुणी क्षितिश्शुक्ला शिला तस्यां तु वारुणी ॥ १८ ॥

(ऐन्द्रीभूमिशिलयोः लक्षणम्)

पीताभा क्षीरवृक्षस्य पूर्वदिक्संस्थिता तु या ।
तोयस्य दक्षिणे पार्श्वे व्रीहिक्षेत्रस्य चोत्तरे ॥ १९ ॥

ऐन्द्री तु सा भवेद्भूमिः शिला तस्यां तु वासवी ।

(आग्नेयीभूमिशिलयोः लक्षणम्)

यस्यां गृध्राः कपोताश्च रक्ताभा तोयवर्जिता ॥ २० ॥

पलाशाः खादिराः बिल्वा आग्नेय्यां यत्र संस्थिताः ॥
सा त्वाग्नेयी स्मृता भूमिः तदाह्वा तु शिला स्मृता ॥ २१ ॥

---

१५. c : V. काश for कुश.
१८. b : S. तोयोद्यानतृणा मही.
२०. d : V. रत्ना० for रक्ता०.

(वायव्यभूमेः शिलायाश्च लक्षणम्)

आम्रश्लेष्मातकाकीर्णा स्नुहिवृक्षसमाकुला ।
अतोया शर्करैर्युक्ता वीरुत्तृणविवर्जिता ॥ २२ ॥

वायव्या सा भवेद्भूमिः शिलां तत्र तु वर्जयेत् ।

(त्याज्याः शिलाः)

सूर्यांशुतप्ता चालीढा अग्निदग्धा च या भवेत् ॥ २३ ॥

अन्यकर्मप्रयुक्ता या अन्येनोपहिता च या ।
वर्जनीया प्रयत्नेन तथा क्षारांबुसंस्थिता ॥ २४ ॥

विवर्णाः स्फुटिताः रुक्षाः ताश्शिलाः परिवर्जयेत् ।

(ग्राह्याः शिलाः)

सुस्निग्धा एकवर्णा च अभिसंधिषु संस्थिता ॥ २५ ॥

सरित्सलिलनिर्धौताः पवित्रान्तर्जलोषिताः ।
तीर्थाश्रमसमीपस्थाः द्रुमच्छायासु संस्थिताः ॥ २६ ॥

टङ्कपातहता शुभ्रा विस्तारायामसंयुता ।
एवं लक्षणसम्पन्नाः शिलाः ग्राह्याः शुभार्थिभिः ॥ २७ ॥

(निषिद्धशिलया प्रतिमाकल्पनस्याभिचारिकत्वम्)

वर्जिताभिः शिलाभिर्यः प्रतिमां लोभमोहितः ।
कुर्याद्वा कारयेद्वापि तस्य स्यादभिचारिकम् ॥ २८ ॥

---

२२. c : My. शर्कराः for शर्करैः.
d : My. वीर for वीरुत्.
२३. d : S. M. अतिदीर्घा My. A. N. अतिदीप्ता for अग्निदग्धा.
२४. a : S. My. N. अन्यप्रयुक्ता या चैव; A. अन्यप्रयुक्ता या भूमिः.
२६. c : S. My. तथा for तीर्था°, V. तीर्थग्राम for तीर्थाश्रम.
d : A. S. V. संश्रिताः for संस्थिताः.
२७. a : My. टंकावात V. टंकवात for टंकपात.

(शिलासंग्रहार्थं गमनविधिः)

अथ पुण्ये तु नक्षत्रे शकुनाद्यनुकूलतः ।
ब्राह्मणान् भोजयित्वाथ तैःकुर्यात् स्वस्तिवाचनम् ॥ २९ ॥

अथ कूटादिसंगृह्य शिल्पिना कुशलेन तु ।
उदङ्मुखः प्राङ्मुखो वा ईशानाभिमुखो व्रजेत् ॥ ३० ॥

बलवद्भिः सहायैश्च हृष्टैः पुष्टैः विभूषितैः ।
भेरीमृदङ्गनादैश्च जयगीतकमङ्गलैः ॥ ३१ ॥

शुभैर्निमित्तैर्गन्तव्यमन्यथा तु निवर्तयेत् ।

(शिलादिसंग्रहणार्थं गमने शुभाशुभशकुननिर्देशः)

विद्युत्स्तनितनिर्घोषमनभ्रे वृष्टिपातनम् ॥ ३२ ॥

शुभान्येतानि जानीहि अशुभानि वदामि ते ।
उल्कापातो महांस्तत्र तारापातस्तथैव च ॥ ३३ ॥

निर्घातश्च दिशां दाहो दिव्यान्येतानि वर्जयेत् ।
अन्तरिक्षे यथा शब्दः फलपुष्पनिपातनम् ॥ ३४ ॥

वायसः क्षीरवृक्षस्थो वामतः सुस्वरो भवेत् ।
कन्या गावः पूर्णकुम्भं दधिपुष्पाक्षतानि च ॥ ३५ ॥

हंसाश्च शतपत्राश्च कौशिकाः वामतः शुभाः ।
दक्षिणेनाशुभाः ह्येते न गन्तव्यं शुभार्थिभिः ॥ ३६ ॥

---

३०. a : V. अयः for अथ.

३१. b : S. पुष्पैः for पुष्टैः.

३२. d : S. M. N. अनभ्रम् for अनभ्रे.

३३. b : V. निबोध वै for वदामि ते.
d : V. तथा भवेत् for तथैव च.

३४. c : इत्यतः प्रारभ्य अस्याध्यायस्य समाप्तिपर्यन्तं पाठः S. My. M. कोषेषु नोपलभ्यते ।

३५. d : V. ०ताः शुभाः for ०तानि च.

(शुभाशुभनिमित्ते फलम्)

निमित्तैस्तु शुभैस्सिद्धिरन्यथा तु विपर्ययः ।

(अपेक्षितशिलासंग्रहार्थं गमनादिप्रयोगनिरूपणम्)

निमित्तैस्तु शुभैर्गच्छेच्छाकुनं सूक्तमुच्चरन् ॥ ३७ ॥
निर्गतस्तु शिलां पश्येत् आचार्यः शिल्पिभिः सह ।
तां दक्षिणोत्तरायामां प्रत्यक्प्रागायतां तु वा ॥ ३८ ॥
कृत्वा तु मण्डपं तत्र भूषयित्वा यथाविधि ।
अष्टदिक्षु पताकाश्च कारयित्वा प्रदक्षिणम् ॥ ३९ ॥
पुण्याहं वाचयित्वा तु परिभ्राम्य प्रदक्षिणम् ।
पूर्णकुम्भांस्तथा चाष्टावष्टदिक्षु च विन्यसेत् ॥ ४० ॥
शिलायां पूर्णकुम्भांस्तु गन्धादिभिरलङ्कृतान् ।
अश्वत्थपल्लवच्छन्नान् पूजयेन्'मूल'विद्यया ॥ ४१ ॥
दर्शयित्वा स्वमुद्रां तु प्रणम्याञ्जलिमुद्रया ।
पश्चिमे दर्भशय्यायामासीनोऽधिवसेद्गुरुः ॥ ४२ ॥
रात्रौ भूतबलिं दत्त्वा पललं दधिसंयुतम् ।
अपनीय च तान् सर्वान् 'इमं' मन्त्रमुदीरयेत् ॥ ४३ ॥
यक्षाः पिशाचाः नागाश्च ये तिष्ठन्त्यत्र भूतले ।
व्यपगच्छन्तु ते सर्वे सन्निधानात् सदा हरेः ॥ ४४ ॥

---

३७. a : A. N. गच्छेत् for सिद्धिः.
b : N. अन्यदा for अन्यथा.
३९. d : A. N. रचयित्वा for कारयित्वा.
४०. c : N. ०ष्टौ for ०ष्टा.
d : N. चाष्ट for ०वष्ट०.
४१. a : N. लोहजान् for शिलायां ; N. च for तु.
४३. b : V. पलली for पललं.
४४. a : V. रक्षः for यक्षाः.

इत्युक्त्वा 'स्वप्न'मन्त्रं तु जपेदष्टोत्तरं शतम् ।
'ओं नमः सर्वलोकाय विष्णवे प्रभविष्णवे ॥ ४५ ॥
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः' ।
जप्त्वा तु स्वप्नमाकाङ्क्षन् संविशेद्दक्षिणामुखः ॥ ४६ ॥
विष्णुरूपाणि पश्येच्चेत् तत्र स्वप्नं शुभं भवेत् ।
अश्वत्थं ब्राह्मणो राजा विष्णुरूपाणि चैव हि ॥ ४७ ॥
सुदर्शने तु गृह्णीयात् विपरीते निवर्तयेत् ।
कलशान् प्रातरुद्धास्य खनित्वा शिल्पिभिः भुवम् ॥ ४८ ॥
'सर्वेण' च बलिं दद्यात् स्पृशेत् 'पुंसा' ततः शिलाम् ।
सूत्रपातं ततः कृत्वा ग्राहयेत् शिल्पिभिः शिलाम् ॥ ४९ ॥

(बालादिभेदेन शिलात्रैविध्यम्)

शिला तु त्रिविधा प्रोक्ता बाला वृद्धा च मध्यमा ।

(बालायाः शिलायाः लक्षणम् तस्याः अग्राह्यत्वञ्च)

आदित्यविभवे बाला अर्ध :क्वा यथेष्टाका ॥ ५० ॥
टङ्काहतिन्न सहते तां प्रयत्नेन वर्जयेत् ।

(यौवनशिलायाः लक्षणम्)

सुदृढावयवा स्निग्धा तथा गम्भीरनिःस्वना ॥ ५१ ॥

---

४५. a : N. स्वप्नाधिपति for इत्युक्त्वा स्वप्न०.
४७. a : V. विश्वरूपार्णवं पश्येत्.
b : N. ततः for तत्र.
४८. b. V. निवर्तते for निवर्तयेत्.
४९. a : A. N. दत्त्वा for दद्यात्.
b : N. शिलास्ततः for ततः शिलाम्.
d : N. सह for शिलाम्.
५०. c : V. अति वृद्धा अतिबाला.

अनुष्णा च सुगन्धा या ईषन्मृद्वी सुशोभना ।
सा यौवनशिला प्रोक्ता सर्वकामार्थसिद्धिदा ॥ ५२ ॥

(वृद्धायाः शिलायाः लक्षणं तस्याः अग्राह्यत्वञ्च)

रुक्षा शिला ततो यावत् वृहच्छिखरसंयुता ।
सा तु वृद्धा शिला प्रोक्ता सर्वकार्यविनाशिनी ॥ ५३ ॥
मधूकसदृशाकारैः शकलैः बिन्दुभिश्चिता ।
रेखाभिर्मण्डलैर्युक्ता प्रयत्नात्तां विवर्जयेत् ॥ ५४ ॥

(लिङ्गभेदेन यौवनशिलायाः त्रैविध्यम्)

सा यौवनशिला या तु सा पुनस्त्रिविधा स्मृता ।
स्त्रीपुंनपुंसकाख्याभिः तत्र लक्षणमुच्यते ॥ ५५ ॥

(पुंस्त्रीशिलयोः लक्षणम्)

स्निग्धगम्भीरनिनदा सुस्फुलिङ्गा च या शिला ।
सा पुन्नाम ध्वनियुक्ता निस्तेजा स्त्रीशिला भवेत् ॥ ५६ ॥

(नपुंसकशिलायाः लक्षणम्)

विवरावर्तरहिता शरावोदरकर्कशा ।
शब्दहीना शिला या च सा नपुंसकसंज्ञिता ॥ ५७ ॥

(पुलिङ्गशिलायाः उपयोगः)

वरवर्णा लघुस्निग्धा स्वच्छा चैव मृदुस्वना ।
या पुलिङ्गशिला प्रोक्ता प्रतिमार्थमुदाहृता ॥ ५८ ॥

---

५२. d : A. N. सर्वकामसमृद्धिदा.
५४. a : A. N. मण्डूकशकलाकारैः.
५६. b : N. स० for सु०.
५७. b : A. सरावोदकशर्करा.

(स्त्रीशिलया पीठकल्पनस्य विधानम्)

स्त्रीलिङ्गेन च या प्रोक्ता सा भवेत् पादपीठिका ।

(शिलायाः मुखाद्यङ्गनिर्देशः)

यदधस्ताच्छिलायास्तु तन्मुखं तु विधीयते ॥ ५९ ॥

यदूर्ध्वं शिलायास्तु तत्पृष्ठमिति कीर्तितम् ।

(दक्षिणादिग्रीवशिलाफलणम्)

दक्षिणोत्तरमायामा तथा वै पूर्वपश्चिमा ॥ ६० ॥

शान्तिदा दक्षिणग्रीवा पूर्वग्रीवा जयप्रदा ।

श्रीकरी पश्चिमग्रीवा धनदा चोत्तरानना ॥ ६१ ॥

(शिलायाः शिरसादिनिर्णयः)

घण्टासमो ध्वनिर्यत्र तच्छिलायाः शिरोत्तमम् ।

कांस्यवन्मध्यभागे तु मूले वै कांस्यतालवत् ॥ ६२ ॥

(प्रतिमास्थापनक्रमः)

प्रासादे प्राङ्मुखे स्थाप्या प्राक्शिरा प्रतिमा ततः ।

तथैव दक्षिणशिरा दक्षिणद्वारवेश्मनि ॥ ६३ ॥

तथैव पश्चिमशिरा पश्चिमद्वारवेश्मनि ॥

तथैव चोत्तरशिरा उत्तरद्वारवेश्मनि ॥ ६४ ॥

प्रासादयुक्त्या कर्तव्या प्रतिमोक्ता गृहन्तु (गृहे तु?) वा ।

(प्रतिमायामस्य पञ्चविधत्वम्)

अत्र तु प्रतिमायामः पञ्चधा परिकीर्तितः ॥ ६५ ॥

---

५९. a : V. स्त्रीलिङ्गा च यदा प्रोक्ता.

६२. a : V. कांस्यघण्टा for घण्टासमो.

६३. a : N. प्राक्शिला for प्राङ्मुखे.

६४. c ; d : A. N. om.

प्रासादगर्भभागस्य आयामस्त्वधमो भवेत् ।
पञ्चभागीकृते त्वत्र त्रिभागो मध्यमो भवेत् ॥ ६६ ॥

त्रिभागीकृतगर्भे तु द्विभागश्चोत्तमो भवेत् ।
पादायामं च सम्प्रोक्तं द्वारायाममथापि वा ॥ ६७ ॥

(प्रतिमायाः सामान्यप्रमाणम्)

प्रतिमा नवहस्तान्ता एकहस्तादिरुच्यते ।
तत ऊर्ध्वं तु कुर्वीत कालयोगप्रमाणतः ॥ ६८ ॥

(चित्रादित्रिविधप्रतिमानामकीर्तनम्)

त्रिविधं प्रतिमाकर्म तन्त्रेऽस्मिन् सम्प्रकीर्तितम् ।
चित्रं चाप्यर्धचित्रं च चित्राभासमिति त्रिधा ॥ ६९ ॥

(चित्रप्रतिमायाः लक्षणम्)

दृश्यन्तेऽवयवाः यस्याः प्रतिमायाः समन्ततः ।
मानोन्मानसमायुक्ताश्चित्रं तत्कर्म उच्यते ॥ ७० ॥

(अर्धचित्रप्रतिमायाः लक्षणम्)

शिलागतायाः यस्यास्तु पृष्ठभागो न दृश्यते ।
अर्धचित्रं तु तद्विद्धि मानोन्मानं च दुष्करम् ॥ ७१ ॥

(चित्राभासप्रतिमायाः लक्षणम्)

चित्राभासमिति प्रोक्तमालेख्यं यत्कृतं भवेत् ।

(गर्भयुक्तशिलायाः स्वरूपम्)

शिलायां यत्र दृश्यन्ते मण्डलानि मनीषिभिः ॥ ७२ ॥

---

६६. a : N. मानस्य for भागस्य.
६७. a : V. A. कृत्य for कृत.
६८. c : A. N. न for तु.
६९. d : V. अथापि वा for इति त्रिधा.
७०. c : A. N. समायुक्तं for समायुक्ताः.
७१. c : A. N. च for तु.
७२. b : A. N. आलेख्ये for आलेख्यं.

नाना विविधवर्णानि तत्र गर्भं विनिर्दिशेत् ।

(शिलागर्भस्थवस्तुनिर्देशक्रमः)

मण्डले पद्मवर्णे तु रक्तपांसून् विनिर्दिशेत् ॥ ७३ ॥

श्वेतपद्मसमे चैव श्वेतपांसून् विनिर्दिशेत् ।
स्निग्धे च कपिले कूर्मं रूक्षे वै फेनमेव च ॥ ७४ ॥

कपोतसदृशे वर्णे निर्दिशेद्गृहगौलिकाम् ।
माञ्जिष्ठसदृशे वर्णे निर्दिशेद्रक्तदर्दुरम् ॥ ७५ ॥

शुक्लपिंजरवर्णे तु रक्तपीतककच्छपम् ।
कुसुम्भपीतवर्णे च तत्र स्यात् पीतदर्दुरः ॥ ७६ ॥

शुक्लपीतनिभे वर्णे पीतः स्यात् कृकलासकः ।
अयस्सदृशवर्णे च गोधां तत्र विनिर्दिशेत् ॥ ७७ ॥

गुडवर्णे तु पाषाणं खद्योतो मधुवर्णके ।
सारङ्गसदृशे वर्णे वदेत्तत्रैव वृश्चिकम् ॥ ७८ ॥

निस्त्रिंशवर्णे सलिलं नीले तु शलभं तथा ।
रूक्षे तु मूषिका ज्ञेया कृष्णे कृष्णाहिरेव च ॥ ७९ ॥

श्यामे चैव तथा मत्स्य इन्द्रगोपो मधुप्रभे ।

(शिलागर्भे कृकलासादिस्थितिफलम्)

कृकलासे ह्यनायुष्यं नैर्धन्यं गृहगौलिका ॥ ८० ॥

---

७३. a : A. N. विद्याद्विविध० for नाना विविध०.
c : A. N. पूर्णे for वर्णे.
७४. c : V. तुविकले for च कपिले.
७६. a : A. N. शुकपिञ्जीर for शुक्लपिञ्जर.
b : A. N. पीते तु for पीतक.
७७. c : N. अतसी सदृशे वर्णे.
८०. a : N. मत्स्यान् for मत्स्य.

वृश्चिके कलहो ज्ञेयः गर्भहानिर्जले तथा ।
सिकतायामनावृष्टिः खद्योतो गोत्रहानिदः ॥ ८१ ॥

दर्दुरे स्यादनारोग्यं मूषिके पुत्रनाशनम् ।
विषेण मरणं सर्पे गोधायां दुर्भगो भवेत् ॥ ८२ ॥

(शिलागर्भपरीक्षणोपायः)

प्रलेपं संप्रवक्ष्यामि गर्भसन्दर्शनाय च ।
करण्डमर्जुनरसं तुलसीमूलमेव च ॥ ८३ ॥

किंशुकस्य च बीजानि समभागानि पेषयेत् ।
माहिषेणैव तप्तेन पयसालोड्य लेपयेत् ॥ ८४ ॥

एकरात्रोषिता सा तु नानावर्णा भवेत्तदा ।
तत्र गर्भं विजानीयात् मतिमान् शास्त्रकोविदः ॥ ८५ ॥

विष्णुक्रान्ता ब्रह्मदण्डी इन्द्राणी चित्रमूलिनी ॥
अजाक्षीरेण पिष्ट्वैतानुपलं तु प्रलेपयेत् ॥ ८६ ॥

एकरात्रोषिते क्लिद्यात् सगर्भां तां विनिर्दिशेत् ।
धातुं कांस्यं तथा सीसं गवां क्षीरेण पेषयेत् ॥ ८७ ॥

लेपिते रक्तवर्णस्तु दृश्यते यदि चोपलः ॥
त्रिरात्रमुषिते तस्मिन् निर्दिशेत् गर्भमत्र वै ॥ ८८ ॥

मसीपलत्रयं कुष्ठं समुस्तं करवीरकम् ।
एतानि समभागानि स्त्रीस्तन्येन तु पेषयेत् ॥ ८९ ॥

---

८२. d : N. गोधया for गोधायां.
८४. c : A. N. पयसा for तप्तेन.
d : A. N. समालोड्य प्रलेपयेत् ।
८५. d : A. N. इन्द्राण्या च त्रिशूलिनी.
८७. a : A. क्लिद्येत् N. क्लिद्ये for क्लिद्यात्.
८९. a : V. मासीफलं तु यं कुष्ठ.
b : V. समस्तं for समुस्तं.

लेपितस्तेन पाषाणस्स चेत् सिमिसिमायते ।
तत्र गर्भं विजानीयात् विषं पश्चात्तु संस्पृशेत् ॥ ९० ॥

(शिलागर्भदर्शने शान्तिक्रमः)

गर्भसन्दर्शने विद्वान् शान्तिहोमं समाचरेत् ।

(गर्भयुक्तशिलया बिम्बकल्पननिषेधः)

न कुर्यात् गर्भसंयुक्तां प्रतिमां लोभमोहितः ९१ ॥
स्थापितायां सगर्भायां नाशं सर्वं व्रजेज्जगत् ।

(स्थापितायां सगर्भशिलायां प्रायश्चित्तम्)

अस्य दोषस्य नाशाय सहस्रकलशैर्हरिम् ॥ ९२ ॥
संस्नाप्य स्थापयित्वान्यां पूजयेत् पूर्ववत् क्रमात् ।

(प्रतिमार्थलोहचातुर्विध्यवर्णनम्)

लोहं चतुर्विधं प्रोक्तं तन्त्रेऽस्मिन् प्रतिमाविधौ ॥ ९३ ॥
सुवर्णं रजतं ताम्रम् आरकूटं द्विजोत्तम ।

(प्रशस्तनिषिद्धलोहबिम्बम्)

शुद्धं बिम्बं प्रशस्तं स्यात् मिश्रितं तु विवर्जयेत् ॥ ९४ ॥

(लोहेनार्धचित्रबिम्बकल्पननिषेधः)

अर्धचित्रं न लोहेन कर्तव्यं हितमिच्छता ।

(लोहजे बिम्बे वर्णशोभाकल्पननिषेधः)

तथा वै वर्णशोभां च न कुर्याल्लोहजे द्विज ॥ ९५ ॥

(लोहजबिम्बानां दोषरहितत्वम्)

लोहजाः प्रतिमास्सर्वाः निर्दोषाः समुदाहृताः ।

(मणिजायाः प्रतिमायाः त्रैविध्यम्)

त्रिविधा मणिजार्चा तु सौभाग्या तु शुभप्रदा ॥ ९६ ॥

---

९३. d : A. N. भवेत् for विधौ.
९५. d : A. N. लोभमोहितः for लोहजे द्विज.
९६. c : A. N. सा for ०र्चा.
d : A. N. सौख्यभाग्यायुषप्रदा.

चन्द्रकान्तमयी पूर्वा द्वितीया सूर्यकान्तजा ।
अन्या स्फटिकजा प्रोक्ता पूर्वा पूर्वा गरीयसी ॥ ९७ ॥

(मणिजार्धचित्रादिबिम्बाधारः)

अर्धचित्रं च चित्रं च चित्राभासं तथैव च ।
त्रयं मणिमये कुर्यात् शिलायामेवमेव हि ॥ ९८ ॥

(प्रतिमार्थं ग्राह्यं दारु)

दारुजामथ वक्ष्यामि प्रतिमां तां निबोध मे ।
ये द्रुमाः दृढमूलाश्च सर्वैःरोगैः विवर्जिताः ॥ ९९ ॥

नदीसङ्गमतीर्थेषु पर्वतेषु वनेषु च ।
पुण्योद्यानेषु ये जाताः कण्टकादिविवर्जिताः ॥ १०० ॥

चन्दनाद्यास्तु ये वृक्षाः सारवन्तः शुभाः दृढाः ।
तैः कुर्यात् प्रतिमाः सम्यक् शिल्पिना कुशलेन तु ॥ १०१ ॥

(प्रतिमाकल्पनार्थं दारुसङ्ग्रहणादिप्रकारः)

यथा शिलायां संस्कारस्तद्वद्वृक्षेऽपि कारयेत् ।
शुभस्थानगतं वृक्षमर्चार्थमधिवासितम् ॥ १०२ ॥

निमित्तशकुनैर्लब्धं तस्य छेदनमारभेत् ।
आज्याक्तेन कुठारेण मधुना संयुतेन तु ॥ १०३ ॥

'ओं नमो नारायणाये'ति कुठारमभिमन्त्रयेत् ।
द्रुमस्य छेदनं कुर्यात् तेन पूर्वोत्तराननः ॥ १०४ ॥

---

९८. a : A. N. चित्रं चाप्यर्धचित्रं च.

९९. d : A. N. सर्व for सर्वैः.

१०२. c : A. ०रतं for ०गतं.

पतमानस्य वृक्षस्य पातं तत्र निरीक्षयेत् ।
पूर्वोत्तरस्य दिग्भागे ईशान्यां पतितं तु वा ॥ १०५ ॥
शुभं स्यादन्यदिग्भागे पतितं तु विवर्जयेत् ।
ततस्तु पतिते वृक्षे शाखाछेदनमारभेत् ॥ १०६ ॥
पूर्ववन्मन्त्रमुच्चार्य पतितं शोभयेद्द्रुमम् ।
पतिते यदि भज्येत गात्रभङ्गस्ततो भवेत् ॥ १०७ ॥
तत्र होमस्तु कर्तव्यः महाव्याहृतिभिर्द्विज ।
अष्टोत्तरसहस्रं वा शतं वार्धमथापि वा ॥ १०८ ॥

(ब्राह्मणादिवर्णानुसारं बिम्बार्थं चतुर्विधमृत्तिकानिर्देश):

मृत्तिकालक्षणं वक्ष्ये विबोध द्विजपुङ्गव ।
चतुर्विधा तु मृत्प्रोक्ता यथावर्णानुपूर्वशः ॥ १०९ ॥
शुक्ला रक्ता च पीता च कृष्णा चेति चतुर्विधा ।

(प्रतिमार्थं मिश्रितमृत्तिकानिषेधः)

मिश्रितां वर्जयेद्विद्वान् मृत्तिकां प्रतिमार्थतः ॥ ११० ॥

(मृत्तिकाग्रहणार्हस्थानानि)

नदीतीरे गिरौ वापि उद्याने देवतालये ।
तीर्थक्षेत्रेऽथवा गृह्य मृत्तिकां पूर्ववद्गुरुः ॥ १११ ॥

(मृत्तिकासंस्कारप्रकारः)

निवाते पटमास्थाप्य क्षिपेत्तां तत्र मृत्तिकाम् ।
सर्वलोहमयं चूर्णं चूर्णं पाषाणजं तथा ॥ ११२ ॥

---

१०५. c : V. पूर्वोत्तरेऽप्युदक् भागे.
१०८. d : A. N. तथा for ०मथा०.
११०. a : A. N. श्वेता for शुक्ला.
१११. c : A. N. तीर्थे for तीर्थ ; ग्राह्य for गृह्य.
११२. a : My. S. V. ०च्छाद्य for ०स्थाप्य.

शर्कराचूर्णसंयुक्तं मृष्टं संसर्गजं शुभम् ।
तस्यां प्रक्षिप्य कुशलो कषायं तत्र सेचयेत् । ११३ ॥

खदिरार्जुनयोः पश्चादालोडयालोडय यत्नतः ।
श्रीवेष्टं कुंकुमं कुष्ठं कुटुकत्रयमेव च ॥ ११४ ॥

मृत्तिकायां यथालाभं चूर्णं कृत्वा क्षिपेद्बुधः ।
एकमासं द्विमासं वा तत्र तां परिवासयेत् ॥ ११५ ॥

तस्यां क्षिपेद्दधि ततो मासं तु परिवासयेत् ॥

(प्रतिमाकल्पनार्थं शूलस्थापनप्रकारः)

ततो गर्भगृहे पीठं कुर्याच्छूलनिमित्ततः ॥ ११६ ॥

शूलं च स्थापयेत्तत्र रत्नस्पृष्टं विचक्षणः ॥
स्थाने न जानुसन्धिः स्यात् कुर्यादन्यत्र बुद्धिमान् ॥११७॥

(शूलदण्डन्यूनाधिकसंख्यादिनिर्देशः)

एकादशान्न च न्यूनं शूलदण्डं च कारयेत् ।
एकोनविंशादधिकं न कुर्याच्च विचक्षणः ॥ ११८ ॥

(शूलबन्धनादिप्रकारः)

यथा शिरा शरीरे तु तथा शूलं तु बन्धयेत् ।
नालिकेरत्वगुत्थाभ्यां रज्जुभ्यां शास्त्रकोविदः ॥ ११९ ॥

श्लेषयेदङ्गदण्डेषु सर्वाङ्गेषु शनैर्मृदा ।
त्रिरेवं रज्जुबन्धः स्यात् त्रिकल्कं चैव कारयेत् ॥ १२० ॥

मृदा देहं शनैः पश्चात् कुर्यात् पुष्टं विचक्षणः ॥
कुलालेनैव कर्तव्यं शिल्पिना कुशलेन वा ॥ १२१ ॥

---

११४. b : V. लोडयालोडय प्रयत्नतः.
d : V. करटं for कटुक.
११७. c : A. N. स्थाने च जानुसन्धी.
११८. a : A. N. एकादशं न च न्यूनं.
१२१. b : A. N. पुष्टिं for पुष्टं.

प्रवीणेनाथवान्येन सर्वलक्षणसंयुतम् ।
सुकपोलद्वयामर्चां सुशरीराङ्गपर्वणाम् ॥ १२२ ॥
वर्णकैस्तामलङ्कुर्यात् त्रिरात्रोपोषितां पुनः ।
समदृष्टिं प्रसन्नास्यां हसन्तीव शुभेक्षणाम् ॥ १२३ ॥

(प्रतिमायाः ऊर्ध्वाधोदृष्टिफलम्)

ऊर्ध्वदृष्टया वित्तनाशः अधो दृष्टया धनक्षयः ।

(स्थानकादिप्रतिमानां साधारणासाधारणत्वेन द्वैविध्यम्)

तस्यास्तु लक्षणं वक्ष्ये यथावत्तन्निबोध मे ॥ १२४ ॥
सा पुनर्द्विविधा प्रोक्ता मूर्तिः स्थानादिभेदतः ।
साधारणैका विज्ञेया अन्यासाधारणा मता ॥ १२५ ॥
पूर्वं साधारणां वक्ष्ये पश्चादन्यां वदामि ते ।

(अङ्गुलमानलक्षणम्)

प्रतिमायास्तथायामो विभज्यो दशभागकैः ॥ १२६ ॥
भागस्य द्वादशांशस्तु निर्दिष्टं स्वकमङ्गुलम् ।

(तालमानलक्षणम्)

तेनैवाङ्गुलमानेन तालं वै द्वादशाङ्गुलम् ॥ १२७ ॥

(गोलकमानलक्षणम्)

द्व्यङ्गुलं गोलकं ज्ञेयं कला सैव प्रकीर्तिता ।

(कलामानेनैव प्रतिमाङ्गादिकल्पननिर्देशः)

अनेनैव तु मानेन अङ्गप्रत्यङ्गकल्पना ॥ १२८ ॥

---

१२२. d : N. स्व० for सु० ; A. वर्मणा for पर्वणाम्.
१२३. d : My. S. V. हसन्तीं च for हसन्तीव.
१२४. d : A. पश्चादन्यां वदामि ते.
१२६. d : N. विभागेन दशान्विते.
१२७. a : A. अङ्ग for अंश०.
१२८. a : N. अङ्गुलं for द्व्यङ्गुलम्.

(बिम्बकल्पनक्रमे अङ्गप्रत्यङ्गमाननिरूपणम्)

मुखं सप्तकलं ज्ञेयं तन्त्रीक्षेत्रं समं शुभम् ।
केशान्तं नेत्रसूत्रान्तं नासिका चिबुकं तथा ॥ १२९ ॥

ग्रीवाग्रं नाभिमेढ्रान्तं तालं तालं कलान्वितम् ।
ऊर्वोर्द्वितालमायामं सकलं जङ्घयोरपि ॥ १३० ॥

मूर्धा ग्रीवा जानुके च गुल्फाधस्तात्तथैव च ।
एकैकं द्विकलं विद्यात् पादः सप्तकलस्तथा ॥ १३१ ॥

आयामेन विजानीयात् अङ्गुष्ठौ द्व्यङ्गुलायतौ ।
अङ्गुष्ठकसमा चैवमायामेन प्रदेशिनीम् ॥ १३२ ॥

तस्याः षोडशभागेन शेषांस्तु ह्रासयेत् क्रमात् ।
नाहः पञ्चाङ्गुलो ज्ञेयो सम्यगङ्गुलके द्वये ॥ १३३ ॥

तर्जन्यास्त्र्यङ्गुलो नाहः तर्जन्याष्टांशह्रासतः ।
परीणाहेऽङ्गुलीनां तु शेषाणामिह चोदितः ॥ १३४ ॥

अङ्गुल्यस्तु त्रिपर्वाणः पर्वार्धेन नखस्तथा ।
पर्वद्वये तथाङ्गुष्ठे नखाः रक्तार्धचन्द्रवत् ॥ १३५ ॥

---

१२९. b : A. N. om. तन्त्री क्षेत्रं समं.
१३०. b : A. N. तालं कालं for तालं तालं; V. समन्वितम् for कलान्वितम्.
१३१. a : N. मूर्ध्ना for मूर्धा.
c : A. एकैर्द्विकलं for एकैकं द्विक०.
१३२. b : A. N. त्र्यङ्गुलौ for द्व्यङ्गुला.
१३३. b : A. N. शेषाः for शेषान्.
c : A. N. नाभेः पञ्चाङ्गुलो ज्ञेयः.
१३४. a : A. N. हस्त for नाहः.
१३५. a : A. N. अङ्गुलास्त्रिक for अङ्गुल्यस्तु.
c : N. नखा० for तथा.
d : N. रेखा for रक्ता.

चत्वारि मुखमानानि बाह्वोरायाम उच्यते।
सन्धेः कक्षान्तरं यावत् नवगोलकमायतम् ॥ १३६ ॥
सन्धेरामणिबन्धात्तु कलाश्चैकादश स्मृताः।
पञ्चाङ्गुलप्रमाणेन ज्ञातव्या मध्यमाङ्गुली ॥ १३७ ॥
तदर्धपर्वहीना च शुभा ज्ञेया त्वनामिका।
तर्जनी तत् प्रमाणेन ऋज्वी कार्या सुशोभना ॥ १३८ ॥
तस्याश्चैवार्धपर्वेण न्यूनोऽङ्गुष्ठो शुभो भवेत्।
अङ्गुष्ठकसमा चैव आयामेन कनीयसी ॥ १३९ ॥
स्यादर्धाष्टाङ्गुलोत्सेधा कनिष्ठा तत्समा मता।
मध्यमायास्तु पर्वाणि द्व्यङ्गुलं द्व्यङ्गुलाङ्गुलम् ॥ १४० ॥
ज्ञेयोऽङ्गुलद्वयस्यापि यवह्रासस्तु पर्वणः।
कर्तव्योऽथ द्वयं ह्रासः कनिष्ठायास्तु पावकः(पर्वणः?) १४१
तर्जनीपर्ववत् सिद्धिः मूलमङ्गुष्ठपर्वकम्।
तस्माद्यवाधिकं चान्यदग्रपर्वार्धतो नखाः ॥ १४२ ॥
अङ्गुष्ठकस्य यो नाहः चतुरङ्गुलसम्मितः।
मध्ये चाष्टांशतो ह्रासः तेषां वै भागनाहतः ॥ १४३ ॥
कर्तव्योऽयं यवह्रासः अङ्गुलीनां तु शोभनः।
ऊर्ध्वमानमिदं ख्यातं विस्तारं कथयामि ते १४४ ॥

---

१३६. d : A. N. om. नव.
१३७. b : A. N. शलाकैकादश स्मृताः.
१३८. a : V. तदर्धं हीनपर्व स्यात्.
b : A. हि for तु.
d : V. ऋजुः for ऋज्वी.
१३९. c : A. N. अङ्गुष्ठेन समा सैव.
१४३. d : V. शेषा वै भागभानतम्.
१४४. a : V. यवह्रासात् for यवह्रासः.
c : N. इति for इदम्.

कर्णयोरुभयोर्मध्ये मस्तकं विंशदङ्गुलम् ।
ललाटपृष्ठभागस्तु चत्वारिंशत्तु नाहतः ॥ १४५ ॥

ललाटं नव विस्तारमङ्गुलीनां न संशयः ।
पञ्चाङ्गुलमधस्तात्तु भ्रुवौ चापाकृती शुभे ॥ १४६ ॥

ताभ्यामङ्गुलकं मध्ये निम्ना नासार्धमङ्गुलम् ।
अर्धाङ्गुलकलायामे चक्षुषी चार्धविस्तृते ॥ १४७ ॥

तारकाक्षित्रिभागेन चतुर्थे ज्योतिरिष्यते ।
निमेषो ज्योतिषस्तुल्यो विस्तारस्तु भ्रुवोस्तथा ॥ १४८ ॥

नेत्रयोरन्तरं चैवमक्षिमात्रं भ्रुवोरधः ।
द्विकलायामिनी नासा तदर्धाङ्गुलविस्तृता ॥ १४९ ॥

सार्धमङ्गुलमुत्सेधा पार्श्वं तु सकलाथवा ।
उन्मत्तकुसुमाकारा मूलमध्याग्रतोन्नता ॥ १५० ॥

निष्पावसदृशौ कार्यौ पुटौ नासाग्रतः स्थितौ ।
नेत्रश्रवणयोस्सन्धिर्मध्यं पञ्चाङ्गुलं भवेत् ॥ १५१ ॥

द्विकलार्धाङ्गुलायामौ कर्णावर्धेन विस्तृतौ ।
द्व्यङ्गुले खल्वपात्रे तु अर्धं तस्यापि विस्तृतेः ॥ १५२ ॥

---

१४५. c : A. N. मानन्तु for भागस्तु.
१४६. d : A. N. उभे for शुभे.
१४७. d : N. द्वेच for चार्ध०.
१४८. b : N. च तुल्य for चतुर्थे.
१४९. d : A. N. कला० for तद०.
१५०. b : A. N. सकलायवा for सकलाथवा.
१५१. b : V. पुटे for ०ग्रतः, N. नासाग्रग for नासाग्रतः.
१५२. c : N. गल्व० for खल्व०.
d : A. N. विस्तरे for विस्तृतेः.

कृत्वैकद्व्यङ्गुलं सम्यक् तदर्धं कङ्कुनिर्भवेत् ।
अङ्गुलस्य चतुर्थांशः कर्णवत्योस्तु विस्तरः ॥ १५३ ॥

पाशश्चापि यथाशोभं केशश्चापि सुशोभनः ।
चिबुकं कर्णमूलात्तु मध्यं सार्धाष्टमङ्गुलम् ॥ १५४ ॥

चिबुकाद्व्यङ्गुला ज्ञेया विस्ताराद्दुच्छ्रयादपि ।
अधरोऽङ्गुलविस्तारस्तदर्धश्चोत्तराधरः ॥ १५५ ॥

गोजिका तत्प्रमाणेन तदर्धार्धेन सृक्विणी ।
तरकां सृक्विणीं चैव समं सूत्रेण साधयेत् ॥ १५६ ॥

कविरौ तु समौ ज्ञेयौ नासिकापुटसम्मितौ ।
नयने तुरगेऽप्येवं समसूत्रेण कल्पयेत् ॥ १५७ ॥

कर्णयोरुभयोश्चैव भ्रूसमुत्सेध इष्यते ।
ग्रीवाष्टविस्तृता सम्यक् नाहस्तु त्रिगुणो भवेत् ॥ १५८ ॥

अधो दशाङ्गुला ग्रीवा स्कन्धावष्टाष्टमङ्गुलम् ।
उरो द्वितालविस्तारं त्रितालं शीर्षकैः सह ॥ १५९ ॥

स्तनयोरुपरिष्टात्तु कक्षान्तं तु षडङ्गुलम् ।
स्तनान्तं मुखं ज्ञेयं यवमात्रे तु चूचुके ॥ १६० ॥

---

१५३. a : A. N. तद् for कृत्वा.
b : A. N. ककु० for कङ्कु०.

१५५. a : A. N. प्रोक्तं for ज्ञेया.

१५६. a : V. गोचीता for गोजिका.
c : A. N. सारकां for तरकां.

१५७. a : A. कविकौ N. सविकौ for कविरौ.
b : A. N. नासापुटसुधर्मितौ.
c : A. N. तुटिके for तुरगे.
d : A. om ; N. लक्षयेत् for कल्पयेत्.

१५९. a : N. अथो for अधो.

द्वियवं मण्डलं ज्ञेयं तयोस्तु परितः स्थितम् ।
द्वे कले पञ्चतालानि नाहं कक्षान्तरं भवेत् ॥ १६१ ॥

विस्तारः कक्षयोर्मध्ये ज्ञेयः पञ्चदशाङ्गुलः ।
नाभिमध्ये परिक्षेपः षोडशाङ्गुलसम्मितः ॥ १६२ ॥

तत्र नाहं विजानीयात् त्रितमानि ? चतुष्कला ।
अष्टादशाङ्गुला चैव विस्तारेण कटिर्भवेत् ॥ १६३ ॥

त्रिगुणा तु भवेन्नाभिः कुक्षिदेशे तथैव च ।
वृषणौ त्र्यङ्गुलौ ज्ञेयौ मेढ्रन्तु चतुरङ्गुलम् ॥ १६४ ॥

स्फिचावष्टाङ्गुलौ ज्ञेयौ पीनवृत्तौ सुशोभनौ ।
ऊरुभ्यां विस्तृतं मूलं तालं त्रिगुणनाहतः ॥ १६५ ॥

पञ्चगोलकविस्तारो जोन्वोस्त्रिगुणवेष्टनम् ।
अष्टादशाङ्गुले मध्ये जङ्घे त्र्यंशेन विस्तृते ॥ १६६ ॥

त्रिभागश्चैव विस्तारस्ततोऽधस्ताच्चतुर्दश ।
पुरस्तात्त्रिकलौ पादावायामाद्विस्तरादपि ॥ १६७ ॥

नाहश्चतुर्दशाङ्गुल्यो मूले पञ्चदश स्मृताः ।
त्रिभागविस्तृतौ बाहू मूलौ चाष्टाङ्गुलं मतम् ॥ १६८ ॥

तन्मध्ये कोर्परोऽधस्तान्मणिबन्धः चतुस्तथा ।
सर्वत्र त्रिगुणौ नाहौ गोपुच्छकसमश्रपी ॥ १६९ ॥

---

१६४. a : V. त्रिगुणं तु भवेन्नाहः.
c : A. N. द्व्यङ्गुलौ for त्र्यङ्गुलौ.
१६५. d : A. N. ताच for तालं.
१६६. c : V. अङ्गुलं for अङ्गुले.
१६८. d : A. N. मूले चाष्टाङ्गुलोन्नतम्.
१६९. a : V. षण् for तन्.
b : V. बन्धे for बन्धः.
d : V. गोप्यच्छापन्नगच्छगी ; N. पच्छगी for ०मश्रपी.

सप्ताङ्गुलौ हस्ततलौ दशार्धेन तु विस्तृतौ ।
तर्जन्यङ्गुष्ठयोर्मध्ये गोलकं तु विधीयते । १७० ॥

कनिष्ठामणिबन्धात्तु सम्यक् पञ्चाङ्गुलं भवेत् ।
अङ्गुष्ठमणिबन्धान्तं द्वे कले तदनन्तरम् । १७१ ॥

षोडशाङ्गुलमायामं विचित्रं लक्षणान्वितम् ।
मकुटं मस्तके तस्यास्तथार्चा भूषणान्विता ॥ १७२ ॥

(बिम्बस्वरूपनिर्देशः)

सुप्रसन्ना सुवक्त्रा च सुदृष्टिः सुकपोलका ।
सर्वावयवसम्पूर्णा हसन्तीव शुभेक्षणा ॥ १७३ ॥

(विष्णोः प्रतिमास्थापनफलम्)

एवं विधा द्विजश्रेष्ठ विष्णोरद्भुतकर्मणः ।
प्रतिमा स्थापिता येन तस्य लोकाः सदाक्षयाः ॥ १७४ ॥

न मया वर्णितुं शक्यं वर्षायुतशतैरपि ॥
एषा साधारणा प्रोक्ता प्रतिमा पुरुषाकृतिः ॥ १७५ ॥

(असाधारणप्रतिमायाः सामान्यपरिचयः)

या त्वसाधारणा प्रोक्ता सानेककरभूषिता ।
वाराहादिमुखोपेता मीनादितनुसंयुता ॥ १७६ ॥

नानाविधा तु सा प्रोक्ता तस्याः लक्षणमुच्यते ।

(स्थानकवासुदेवादिमूर्तीनां स्वरूपम्)

वासुदेवादिमूर्तीनां स्थाने रूपं यदुच्यते ॥ १७७ ॥

---

१७०. b : N. द्वादशार्धेन विस्तृतौ.
१७१. c : V. अङ्गुष्ठौ for अङ्गुष्ठ०
१७३. d : A. N. हसन्ती च for हसन्तीव.
१७६. b : A. त्वासने कर for सानेककर.

चतुर्भुजं सौम्यवक्त्रं पद्मपत्रनिभेक्षणम् ।
पीताम्बरधरं शुक्लं सर्वाभरणभूषितम् ॥ १७८ ॥

ऊर्ध्वाग्रे दक्षिणे हस्ते पृष्ठतोऽपि मुखेऽग्रतः ।
तर्जनीमध्यमामध्ये कुर्याच्चिचक्रं सुशोभनम् ॥ १७९ ॥

शंखं तथाविधे वामे ज्वालानेकसमन्वितम् ।
मुख्ये दक्षिणहस्ते तु कमलं नालसंयुतम् ॥ १८० ॥

अङ्गुष्ठतर्जनीमध्ये कमलं शुभमुन्मुखम् ।
अथवा स्वागतं हस्तं वरदं वा यथारुचि ॥ १८१ ॥

पीठाग्रकोटिविश्रान्तगदामुष्टयग्रसंस्थितम् ।
कुर्याद्वामतलं मुख्यं कटिसूत्रावधौ शुभम् ॥ १८२ ॥

अथवा कटिमालम्ब्य तां विहाय स्थितं तु वा ।
सर्वं सविभ्रमं कार्यं कराग्रं साङ्गुलीयकम् ॥ १८३ ॥

किञ्चात्र जङ्गमार्चायां कटिलग्नकरे स्थिताम् ।
विशेषतस्सकामानामैहिकानामपेक्षया ॥ १८४ ॥

चलार्चा लक्षणं ह्येतत् उच्यते बालकौतुकम् ।
एतद्धै वासुदेवस्य रूपं स्थाने प्रकीर्तितम् ॥ १८५ ॥

---

१७८. d : V. वर्णा० for सर्वा०.
१८०. c : A. मुख्यं for मुख्ये.
१८१. a : V. मूले for मध्ये.
c : V. साभयं for स्वागतं.
१८२. a : N. ०श्रान्तं for ०श्रान्त०.
b : N. गदां मुष्टयग्रसंस्थिताम्.
१८३. c : A. N. कुर्यात् for कार्यं.
d : A. कराग्र० for कराग्रं.
१८४. a : A. N. किन्तत्र for किञ्चात्र.

एवं सङ्कर्षणस्यापि रक्ताभं त्यक्तपङ्कजम् ।
सीरं रेखामयं कुर्यात् पद्मस्थाने द्विजोत्तम ॥ १८६ ॥

प्रद्युम्नस्य सुवर्णाभं रूपमन्यद्द्वितीयवत् ।
तस्य दक्षिणहस्ते तु मुख्ये लेखामयं शरः ॥ १८७ ॥

अनिरुद्धस्य कृष्णाभं सर्वमन्यद्द्वितीयवत् ।
अस्य लेखामयं हस्ते दक्षिणे नन्दकस्तथा ॥ १८८ ॥

एवं कृतयुगे वर्णाः त्रेतायामन्यथा द्विज ।
वासुदेवादितो रक्तं पीतं रक्तं सितं क्रमात् ॥ १८९ ॥

(पूर्वनिर्दिष्टानां द्वापरादौ प्रतिमावर्णः)

द्वापरे तु तथा वर्णाः मूर्तीनामन्यथा मताः ।
पीतं कृष्णं सितं रक्तं वासुदेवादितः क्रमात् ॥ १९० ॥

वासुदेवात् कलौ कृष्णं सितं रक्तं च पीतकम् ।
ऋजुस्थित्या स्थिताः सर्वाः कर्तव्याः स्थितिलक्षणाः ॥१९१॥

(स्थितलक्ष्मीपीठलक्षणम्)

द्वितालमुन्नतं लक्ष्मीपीठं प्रतिमावशात् ।
विस्तारायामतस्तावत् पद्माकारं शुभान्वितम् ॥ १९२ ॥

वृत्तं वा चतुरश्रं वा स्थितस्यैवं प्रकीर्तितम् ।

(एकबेरविधौ श्रीधरण्योः कल्पननिषेधः)

नैकबेरविधौ कुर्यात् श्रियं च धरणीं शुभाम् ॥ १९३ ॥

---

१८६. b : A. रत्नाभं for रक्ताभं ; V. रक्त for त्यक्त०.
c : A. N. लेख for रेखा०.

१९०. a : V. पि० for तु.
b : A N. भवेत् for मताः.

१९३. b : A. N. एव for एवं.
c : A. V. एक for नैक,

(बहुबेरविधौ श्रीवसुधयोः कल्पनविधानम्)

श्रियं च वसुधां कुर्यात् बहुबेरविधौ ततः ।

(एकबेरविधौ पीठे जलनिर्गमक्रमः)

एकबेरविधौ कुर्यात् जलनिर्गमनादिकम् ॥ १९४ ॥

पूर्वापरमुखे पीठे उत्तरे जलनिर्गमः ।
दक्षिणोदङ्मुखे पीठे प्राच्यां स्याज्जलनिर्गमः ॥ १९५ ॥

(बहुबेरविधौ पीठे प्रणालादिकल्पननिषेधः)

बहुबेरविधौ पीठं प्रणालादिविवर्जितम् ।
न कुर्यात् कर्मबिम्बानां प्रणालं तु विशेषतः ॥ १९६ ॥

(बहुबेरविधौ स्थानकवासुदेवादिमूर्तीनां देव्योः कल्पनप्रकारः)

वासुदेवादिमूर्तीनां दक्षिणोत्तरपार्श्वयोः ।
बहुबेरविधौ कुर्यात् श्रियं च धरणीं शुभाम् ॥ १९७ ॥

श्रियं सुवर्णवर्णाभां श्यामवर्णां च मेदिनीम् ।
पद्महस्तेऽतिशोभाढ्ये मकुटादिविभूषिते ॥ १९८ ॥

अग्रे तु दक्षिणे हस्ते कमलं नालसंयुतम् ।
सव्यहस्ते तु वा कुर्यात् कमलं नालसंयुतम् ॥ १९९ ॥

पृष्ठे दक्षिणहस्ते तु उत्पलं नालसंयुतम् ।
अब्जं विना न कुर्वीत बहुबेरविधौ द्विज ॥ २०० ॥

(आसीनवासुदेवादिमूर्तीनां लक्षणम्)

वासुदेवादिमूर्तीनामासने लक्षणं शृणु ।
संहृत्य दक्षिणं पादमूरुमूलसमीपतः ॥ २०१ ॥

प्रक्षिप्य वामचरणं पादपीठे सुशोभने ।
अथवा वामचरणं संहृत्य च यथाविधि ॥ २०२ ॥

---

२००. c : V. आभ्यां for अब्जं.
२०२. b : V. पादपीठावनौ च यः, N. पादपीठ च नाविलम्.

प्रसार्य दक्षिणं पादं पादपीठे सुशोभने ।
इमे द्वे आसने पुंसां भोगमुक्तिप्रदे क्रमात् ॥ २०३ ॥
अनयोरुभयोस्तस्मादासनं वाञ्छितं भवेत् ।
आसने सर्वमूर्तीनां पूर्ववत्सर्वलक्षणम् ॥ २०४ ॥

(वासुदेवादीनामासीनमूर्तिपीठकल्पनप्रकारः)

आयामादुच्छ्रयात् पीठं पूर्वात्तु द्विगुणं भवेत् ।
सिंहासनं वा कुर्वीत तथानन्तासनं तु वा ॥ २०५ ॥
सिंहासने तु विविधैस्सिंहैर्युक्तं तथा भवेत् ।
बहुबेरैकबेरादौ सर्वमन्यच्च पूर्ववत् ॥ २०६ ॥

(वासुदेवादीनां सामान्यशयानमूर्तिलक्षणम्)

शयने तु विधिं वक्ष्ये मूर्तीनां मुनिपुङ्गव ।
स्थानासने यथा याने तथा न शयने वपुः ॥ २०७ ॥
शयने वासुदेवाद्याः साधारणवपुर्धराः ।
मनागुत्तानदेहाश्च कृष्णाभाः त्यक्तहेतयः ॥ २०८ ॥
आरूढानन्तशयनाः द्विहस्ताः गूढलाञ्छनाः ।
प्रसारितोत्तरकराः कटिदेशस्य पार्श्वतः ॥ २०९ ॥
उन्नम्य दक्षिणभुजं निकटे शिरसो द्विज ।
ईषत्कुञ्चित् वामाङ्घ्रिपङ्कजाः पङ्कजेक्षणाः ॥ २१० ॥
पुरुषाकृतयः सर्वाः प्रतिमाः गदिताः शुभाः ।

---

२०३. b : A. My. S. पादपीठसमीपतः.
२०४. d : A. N. शृणु for सर्व.
२०६. b : A. भवेत्तथा for तथा भवेत्.
२०७. c : V. तथा for यथा.
d : V. A. तथैव for तथा न.
२०९. b : V. शुद्ध for गूढ.
c : N. प्रसादित for प्रसारित.

(वासुदेवाद्यनन्तशयनमूर्तिलक्षणम्)

अनन्तशयनायामः प्रतिमायामसम्मितः ॥ २११ ॥
शिरःपार्श्वोन्नतान्न्यूनं पादपार्श्वोन्नतं क्रमात् ।
चतुस्तालान्न च न्यूनमष्टतालान्नचाधिकम् ॥ २१२ ॥
द्विहस्तं पञ्चतालं वा विस्तारं प्रतिमावशात् ।
अनन्तस्य फणाः कार्याः नव वा सप्त पञ्च वा ॥ २१३ ॥
अनलार्चिपरीतास्याः मणिमण्डितमस्तकाः ।
उन्नमन्तो महादंष्ट्राः शिरोभागगताः शुभाः ॥ २१४ ॥
देवाननार्पितदृशो विवृतास्याश्च भीषणाः ।
सामान्यं कीर्तितं सर्वं विशेषं कथयामि ते ॥ २१५ ॥
कुर्यात् सनालकमलं नाभिमण्डलमध्यमे ।
नाभिपद्मान्तरासीनं ब्रह्माणं च चतुर्मुखम् ॥ २१६ ॥
द्वितीयस्य लिखेत्सीरं शुभं पादतलद्वये ।
तृतीयस्य शरं वापि धनुर्वा विलिखेत्ततः ॥ २१७ ॥
चतुर्थस्य तथा खड्गं लिखेत्पादतलद्वये ।
रूपमस्यानिरुद्धस्य शयनेऽनेकधा स्मृतम् ॥ २१८ ॥
चतुर्भुजं सहेतीशमेकं पूर्ववदुच्यते ।
चतुर्बाहोर्द्विबाहोश्च पञ्चमं तु निगद्यते ॥ २१९ ॥
असंख्यान्यस्य रूपाणि भोगिपर्यङ्कशायिनः ।
वासुदेवादिमूर्तीनामेवं शयनलक्षणम् । २२० ॥

---

२१२. a : A. N. उन्नते न्यूनं for उन्नतान्न्यूनं.
b : A. N. उच्छ्रयं for उन्नतं.
२१३. d : A. N. पञ्च सप्त for सप्त पञ्च.
२१४. a : V. अक्षि for अर्चि.
२१५. b : A. विवृतास्याति० for विवृतास्याश्च.
२१७. b : A. N. पीत for पाद.
d : A N. ०भिलि० for विलि०.

(परिवारकल्पने विकल्पः)

परिवारैर्विहीना वा युक्ता वा स्युः स्ववाञ्छया ।

(शयानवासुदेवादिकल्पने एकबेरविधाननिषेधः)

एकबेरविधानं तु नेष्टं शयनकर्मणि ॥ २२१ ॥

बहुबेरविधानेन कुर्यात् सर्वं यथाक्रमम् ।

(यानगतवासुदेवादिमूर्तीनां सामान्यलक्षणम्)

यानगस्य विधिं वक्ष्ये तासामद्य निबोध मे ॥ २२२ ॥

यथा स्थानासने प्रोक्तास्तथा याने च मूर्तयः ।

पक्षीशवाहनाः सर्वाः तत्करस्थाङ्घ्रिपङ्कजाः ॥ २२३ ॥

संहृत्य वामचरणं भुजान्ते चार्पितं क्रमात् ।

दक्षिणं वार्पयेदेवमितरं संप्रसार्य च ॥ २२४ ॥

पूर्ववत् सकलं मानं परिज्ञेयं द्विजोत्तम ।

मौलिपृष्ठतिरोभूतमेढ्रदेशादयः शुभाः ॥ २२५ ॥

मूर्तयो वासुदेवाद्याः याने प्रोक्ताः मयाधुना ।

(यानभूतस्य वैनतेयस्य स्वरूपम्)

वैनतेयस्तु कर्तव्यः केवलः पुरुषो यथा ॥ २२६ ॥

अलङ्कृतः किरीटाद्यैर्भूषणैर्नागभूषणः ।

नवतालेन तस्य स्यात् अङ्गप्रत्यङ्गकल्पना ॥ २२७ ॥

पार्श्वयोः पक्षसंघातौ तस्य कार्यौ सुशोभनौ ।

सुवर्णभस्तु ताम्रोष्ठो नीलबन्धुरनासिकः ॥ २२८ ॥

---

२२४. b : A. N. भजन्ते वार्पितं क्रमात्.
c : V. चार्पयेत् for वार्पयेत्.

२२५. a : V. फलमत्रैव for सकलं मानम्.

कार्यं यथाननं तस्य दृशौ जिह्वेऽति शोभने ।
पीठमध्यगतं कुर्यात् तथा पादतलद्वयम् ॥ २२९ ॥

बहुबेरैकबेरं तु विहितं तत्र पूर्ववत् ।
स्थाने चैवासने चैव शयने यानके क्रमात् ॥ २३० ॥

वासुदेवादिमूर्तीनां लक्षणं कीर्तितं स्फुटम् ।

(विष्णवादिद्वादशमासाधिपमूर्तीनां सामान्यलक्षणम्)

लक्षणं मासपानां तु विष्णवादीनामथो शृणु ॥ २३१ ॥

आसीनाः वा स्थिताः वापि यानगास्ते तु मासपाः ।
एते न शयने स्थाप्याः भुक्तिमुक्त्यभिकांक्षिभिः ॥ २३२ ॥

चतुर्भुजास्सुताम्रोष्ठाः ऊर्ध्वाधःकृतबाहवः ।
एषामब्जान्वितं पीठं पूर्ववल्लक्षणान्वितम् ॥ २३३ ॥

कार्यमेव कराग्रस्थमस्त्राणां च चतुष्टयम् ।
पूर्वपश्चिमयोगेन तथा वै दक्षिणादितः ॥ २३४ ॥

(द्वादशमासाधिपानां मूर्तिकल्पने विशेषः)

गदाब्जे चक्रशङ्खौ तु विष्णोः कार्यं चतुष्टयम् ।
चक्रशङ्खौ गदापद्मे द्वितीयस्य प्रकीर्तितम् ॥ २३५ ॥

पद्मं गदा तथा शङ्खः तृतीयस्य सुदर्शनम् ।
शङ्खचक्रगदापद्मं तथा वै वामनस्य तु ॥ २३६ ॥

---

२२९. a : V. कार्यैथज्ञाननीथसय ; A. कार्यो यथाननीतस्य.
b : V. मद्मीवेति शोभना ; N. दशौ जिह्वेति शोभने.

२३०. b : A. N. चात्र for तत्र.

२३२. a : N. वस्थिता for वा स्थिताः.
c : N. येषां च याने न स्थाप्य.

२३४. b : A. ०मन्त्राणां for ०मस्त्राणाम्.

२३६. c ; d : A. om.

पद्मं चक्रं तथा शङ्खो गदा वै पञ्चमस्य तु ।
गदा चक्रं तथा शङ्खो हृषीकेशस्य पुष्करम् ॥ २३७ ॥

शङ्खं पद्मं गदा चक्रं पद्मनाभस्य सुव्रत ।
पद्मशङ्खौ तथा चक्रं गदा दामोदरस्य तु ॥ २३८ ॥

पद्मशङ्खौ गदा चक्रं केशवस्य चतुष्टयम् ।
शङ्खः पद्मं तथा चक्रं गदा नारायणस्य तु ॥ २३९ ॥

चक्रं गदाब्जं शङ्खश्च माधवस्य चतुष्टयम् ।
चक्रं गदा तथा शङ्खो गोविन्दस्याम्बुजं क्रमात् ॥ २४० ॥

(द्वादशमासाधिपमूर्तिवर्णनिर्देशः)

बीजवर्णानुरूपेण वर्णेन च समन्विताः ।

(मासाधिपानां देवीविधानम्)

स्थितानामुपविष्टानां दक्षिणोत्तरपार्श्वयोः ॥ २४१ ॥

बहुबेरविधाने तु वर्णशोभासमन्विते ।
श्रियं पुष्टिं च कुर्याद्वै सर्वेषां ते समे तथा ॥ २४२ ॥

श्रीः पीतवर्णा विज्ञेया पूर्ववल्लक्षणान्विता ।
पुष्टिस्तु श्यामवर्णाभा भूमिलक्षणसंयुता ॥ २४३ ॥

श्यामरक्ताम्बरधरे शुक्लमालाविभूषिते ॥
एवं द्वादशमूर्तीनां लक्षणं कीर्तितं पृथक् ॥ २४४ ॥

(दशमूर्तीनामन्यतमस्य मत्स्यस्य लक्षणम्)

उच्यते दशमूर्तीनां ध्यानं लक्षणमेव च ।
अथ मत्स्यात्मनो वक्ष्ये लक्षणं द्विजसत्तम ॥ २४५ ॥

---

२३७. a : A. N. ततः for तथा.
२४०. d : A. N. स्मृतम् for क्रमात्.
२४४. a : N. ०धरा for ०धरे.
b : V. शुद्ध for शुक्ल ; N. ०षिता for ०षिते.

षोडशाङ्गुलमायामस्तदर्धेन तु विस्तृतम् ।
मत्स्यरूपं यथा तद्वत् सर्वं कुर्याद्यथाक्रमम् ॥ २४६ ॥

(दशमूर्तीनामन्यतमकूर्मरूपलक्षणम्)

कूर्मात्मा कूर्मवत्प्रोक्तो द्वादशाङ्गुलसम्मितः ।

(मत्स्यकूर्मयोः पीठमानम्)

द्वितालविस्तरायामं पीठं कुर्यात्तथोभयोः ॥ २४७ ॥

(दशमूर्तीनामन्यतमस्य वराहस्य लक्षणम्)

सूकरस्याथ वक्ष्यामि लक्षणं मुनिपुङ्गव ।
पुरुषाकारमाकण्ठात् सूकरास्यं चतुर्भुजम् ॥ २४८ ॥

चक्रं दक्षिणहस्तेऽन्ये शङ्खं वामे तथा मुखे ।
वहन्तमग्रहस्ताभ्यां साकारां भूमिमादरात् ॥ २४९ ॥

वामोत्सङ्गार्पितां देवीमाघ्रातां सम्पुटाञ्जलिम् ।
गृहीतचरणद्वन्द्वां दक्षिणेन करेण तु ॥ २५० ॥

वामेनालिङ्गितां स्नेहाच्छ्यामाङ्गां सुस्मिताननाम् ॥
मकुटाद्यैरलङ्कारैर्नूपुरान्तैश्च भूषिताम् ॥ २५१ ॥

ईषत्प्रह्वाङ्घ्रिणैकेन स्थितं वै पीठमध्यमे ।
मकुटाद्यैश्च विविधैरुद्धृतैकाङ्घ्रिपङ्कजम् ॥ २५२ ॥

पूर्ववल्लक्षणोपेतं यावत्कण्ठं तु पौरुषम् ।
ललाटं तालविस्तारं सार्धाङ्गुलमथापि वा ॥ २५३ ॥

---

२४६. a : N. सषोडशाङ्गुलायाम.
२४८. c : N. कर्णात् for कण्ठात्.
२४९. d : V. भुवम् for भूमिम्.
२५०. b : N. सपुरा for सम्पुटा०
c : N. ०द्वन्द्वं for ०द्वन्द्वां.
२५१. a : A. N. स्तोभात् for स्नेहात्.

अङ्गुलैरष्टदशभिः मुखस्यायाम उच्यते ।
विस्तारं पोत्रदेशस्य तच्चतुर्थांशतः स्मृतम् ॥ २५४ ॥

हनुद्वयं तु वैपुल्याद्दशाङ्गुलमुदाहृतम् ।
नासा शोभान्विता कार्या कदलीचर्मपृष्ठवत् ॥ २५५ ॥

दंष्ट्रयोरुन्नतं मूलमष्टाङ्गुलकमेव च ।
पोत्राङ्गुलेन संप्रोक्तं घ्राणरन्ध्रद्वयं शुभम् ॥ २५६ ॥

एवं कुर्वीत तिष्ठन्तमासीनं वाथ पूर्ववत् ।
मकुटाद्यैरलङ्कारैर्नूपुरान्तैश्च भूषितम् ॥ २५७ ॥

शयनं नास्य कुर्वीत यानं च मुनिपुङ्गव ।
बहुबेरविधानेन कर्तव्यं नान्यथा भवेत् ॥ २५८ ॥

शङ्खाभं श्यामवर्णं वा वराहं कारयेदिति ।

(दशमूर्तीनामन्यतमस्य नृसिंहस्य लक्षणम् योगासनलक्षणञ्च)

नृसिंहस्य तु वक्ष्यामि लक्षणं तु स्फुटं क्रमात् ॥ २५९ ॥

ईषत्स्थूलतनुं पुष्टं गोक्षीराभं चतुर्भुजम् ।
उन्नम्य जानुनी जङ्घे व्यत्ययेन निवेश्य च ॥ २६० ॥

बहिरङ्गुष्ठयुग्मं च न्यस्य पादतलद्वयम् ।
जङ्घं सविग्रहं बद्ध्वा योगपट्टेन निश्चलम् ॥ २६१ ॥

योगासनमिति प्रोक्तं सर्वत्र द्विजसत्तम ।
योगासनेन चासीनं सूर्यचन्द्राग्निदृक्त्रयम् ॥ २६२ ॥

---

२५४. c : A. पोतृ for पोत्र०.
२६०. a : A. N. फुल्ल for स्थूल ; N. तरं for तनुं.
d : A. N. तु for च.
२६१. a : A. N. तु for च.

चक्रशङ्खौ कराभ्यां तु पृष्ठतो दक्षिणादितः ।
मुख्यहस्तद्वयं चास्य न्यस्य जानुद्वयोपरि ॥ २६३ ॥

अधोमुखतलाग्रं तु तथैव ऋजुनान्वितम् ।
विवृत्तास्यं महादंष्ट्रं घोरलक्षणसंयुतम् ॥ २६४ ॥

ऊर्ध्वापाङ्गं ललाटाक्षिमुद्वमन्तमिवानलम् ।
नृसिंहस्य मुखं कुर्यात् परितः षोडशाङ्गुलम् ॥ २६५ ॥

चतुरङ्गुलमानेन मुखस्य परितः क्रमात् ।
सटावृत्तं तु कुर्वीत शोभनं तु भयानकम् ॥ २६६ ॥

श्रोत्रशुक्तिद्वयस्योक्तं विस्तारं द्व्यङ्गुलं तथा ।
तस्यायामश्चतुर्भिर्वा त्रिभिर्वाङ्गुलिभिः स्मृतः ॥ २६७ ॥

मकुटाद्यैरलङ्कारैर्नूपुरान्तैश्च भूषितम् ।
शयनं चैकबेरं च नृसिंहस्य न चेष्यते ॥ २६८ ॥

रूपं कृत्वा नृसिंहस्य मृन्मयेनाचलं हरेः ।
पीठस्य पूर्ववल्लक्ष्म कुर्यात्तन्त्रविचक्षणः ॥ २६९ ॥

पूर्वास्यं दक्षिणास्यं वा पश्चिमास्यमुदङ्मुखम् ।
स्थाने करद्वयं चास्य कुर्याद्धि वासुदेववत् ॥ २७० ॥

---

२६३. b : A. पृष्ठतौ, N. पुष्टिता for पृष्ठतो.
c : A. N. तस्य for चास्य.
d : A. N. ०स्पि for परि.
२६५. a : A. N. ललाटाक्षीं for ललाटाक्षिं.
b : A. N. उद्वहन्तीमिवानलम्.
c : A. N. नरसिंहमुखं कुर्यात्.
२६६. a : V. द्व्यङ्गुल for चतुर०.
b : N. मुख्यास्य for मुखस्य.
२६९. b : N. यथा for हरेः.
२७०. a : A. N. उत्तर for दक्षिण.

यानो चैव तथा कुर्यात् न विशेषोऽस्ति कश्चन ।
एवं नरहरिं कुर्यात्

(दशमूर्तीनामन्यतमस्य वामनस्य लक्षणम्)

वामनस्याधुनोच्यते ॥ २७१ ॥

पञ्चतालेन तस्यापि कार्याङ्गोपाङ्गकल्पना ।
वक्त्रपादं तथा जानुमल्पलम्बोदरन्तु वै ॥ २७२ ॥

कुमारवपुषा युक्तं शुभं चिपिटनासिकम् ।
श्यामवर्णं तु सामानि पठन्तं पद्मलोचनम् ॥ २७३ ॥

दण्डं संगृह्य वामेन पालाशं सुदृढं नवम् ।
स्वाध्याये दक्षिणं हस्तं न्यस्य तिष्ठन्तमुद्यतम् ॥ २७४ ॥

प्रसन्नवदनं शुद्धं जटावल्कलभूषितम् ॥
एवं वामनरूपं तु

(दशमूर्तीनामन्यतमस्य वामनत्रिविक्रमस्य लक्षणम्)

त्रैविक्रममतः शृणु ॥ २७५ ॥

नानास्त्रवरसंयुक्तं भुजराजिसमन्वितम् ।
जाह्नवीवैजयन्त्याभां वहन्तं चरणेन तु ॥ २७६ ॥

उद्धृतेन तथैकेन तिष्ठन्तमितरेण वै ।
एवं त्रिविक्रमं कुर्यात् समस्ताश्चर्यसंयुतम् ॥ २७७ ॥

---

२७२. b : V. कुर्यादङ्गाङ्गकल्पनम्.
२७३. c : N. च for तु.
२७४. b : V. सुशुभं for सुदृढम्.
d : A. N. उद्धतम् for उद्यतम्.
२७६. a : V. परि० for वर.
c : A. ०भ्यां V. ०ङ्गां for ०भां.
d : V. च for तु.
२७७. c : V. रूपं for कुर्यात्.

(दशमूर्तीनामन्यतमस्य जामदग्न्यरामस्य लक्षणम्)

ततो रामस्य वक्ष्यामि जामदग्न्यस्य लक्षणम् ।
कुर्यात्सुवर्णवर्णं तु तेजसा ज्वलनोपमम् ॥ २७८ ॥

द्विभुजं चर्मवसनं योगासनसमन्वितम् ।
ध्यानिनं तु करस्थेन कुठारेण विभूषितम् ॥ २७९ ॥

एवं वै जामदग्न्यस्य कीर्तितं लक्षणं तव ।

(दशमूर्तीनामन्यतमस्य दाशरथिरामस्य लक्षणम्)

वक्ष्ये दाशरथेरत्र लक्षणं द्विजसत्तम ॥ २८० ॥

श्यामलाङ्गं विशालाक्षं द्विभुजं मकुटान्वितम् ।
सर्वाभरणसंयुक्तं सर्वलाञ्छनसंयुतम् ॥ २८१ ॥

कटिसूत्रसमस्थेन करेण सशरेण च ।
सविलासेन संयुक्तं दक्षिणेनेक्षितेन च ॥ २८२ ॥

वामेन धनुरालम्ब्य सज्यं पीठस्थमुन्नतम् ।
ललाटान्तसमस्थेन शोभितं वामपाणिना ॥ २८३ ॥

सलीलं लक्षणोपेतं राजचिह्नैश्च चिह्नितम् ।
तिष्ठन्तमेवं कुर्वीत त्रिभङ्गस्थितिसंयुतम् ॥ २८४ ॥

दक्षिणोत्तरयोर्युक्तं सीतया लक्ष्मणेन च ।
अथवा दक्षिणस्थेन शोभितं वा हनूमता ॥ २८५ ॥

---

२८२. a : V. समासेन for समस्थेन.
b : A. V. च for स०.
c : A. सलीला० for सविला०.
d : A. N. ऐक्षि for इक्षि०.

२८३. b : A. N. सज्जं for सज्यं.
c : A. My. S. V. समस्तेन for समस्थेन.

२८४. a : N. सलीला for सलीलं.
b : V. राजचिह्नोपशोभितम्.

रामवल्लक्ष्मणं कुर्यात् अंसमात्रोन्नताकृतिम् ।
सीतां लक्षणोपेतां शुभां जनकनन्दिनीम् ॥ २८६ ॥

हनूमान् वानराकारः कर्तव्यो हेमसन्निभः ।
बहुबेरविधानेन कुर्यादत्र च नान्यथा ॥ २८७ ॥

एवं रामस्य सम्प्रोक्तं स्पष्टं दशरथात्मजः ।

(सपरिकरस्य कृष्णस्य लक्षणम्)

यादवेन्द्रस्य कृष्णस्य ध्यानं लक्षणमुच्यते ॥ २८८ ॥

प्रावृङ्गिरिमिव श्यामं द्विभुजं पुरुषोत्तमम् ।
सत्यभामांसविश्रान्तं वामहस्तस्य कोर्परम् ॥ २८९ ॥

अवाङ्मुखतलस्याग्रं नाभिसूत्रावधिस्थितम् ।
दक्षिणं चास्य कुर्वीत कटिसूत्रावधौ स्थितम् ॥ २९० ॥

हस्तं विलासमुद्राढ्यं केलियष्ट्यादिभूषितम् ।
कटाक्षवीक्षितं कान्तं वामजानुमनुत्तमम् ॥ २९१ ॥

कनिष्ठानामिकाङ्गुष्ठमन्यत् पादाग्रमुल्बणम् ।
त्रिभङ्गस्थितिसंयुक्तं नीलकुञ्चितमूर्धजम् ॥ २९२ ॥

अलकावलिमध्यस्थललाटतिलकान्वितम् ।
वक्त्रं दक्षिणतः प्रह्वं कायमध्येन वामतः ॥ २९३ ॥

---

२८६. a : N. लक्षणं for लक्ष्मणं.
b : A. N. अङ्ग for अंस.
२८८. b : V. स्फुटं for स्पष्टं, V. ०त्मनः for त्मजः.
२८९. d : A. कूर्परं for कोर्परं.
२९०. a : V. तलाग्रस्य for तलस्याग्रं.
b : V. नाभिसूत्राधिपौस्थिते.
२९१. d : N. अनन्वितम् for अनुत्तमम्.
२९२. b : N. अद्भुलं for उल्बणम्.
२९३. c : V. वक्त्र for वक्त्रं ; A. N. पश्चात् for प्रह्वं.

कटिं दक्षिणतस्तद्वत् सविलासस्मिताननम् ।
सविभ्रमस्थितिपरं सर्वशोभासमन्वितम् ॥ २९४ ॥
पीतकौशेयवसनं सुकपोलं सुमध्यमम् ।
क्रीडोद्युक्तवतच्छन्नमिन्दीवरदलेक्षणम् ॥ २९५ ॥
सविलासं च रुक्मिण्या वीक्षितं दक्षिणस्थया ।
अथवा सत्यभामायाः स्थाने गरुडमाचरेत् ॥ २९६ ॥
कृताञ्जलिपुटं सौम्यं स्थितं मुदितमानसम् ।
रुक्मिणीसत्यभामे च श्रीभूम्योर्लक्षणान्विते ॥ २९७ ॥
कृत्वैवं विधिवत्कृष्णं सर्वपापैः प्रमुच्यते ।

(कृष्णस्यान्यरूपाणां निर्देशः)

अनेकान्यस्य रूपाणि सन्ति कार्योचितानि च ॥ २९८ ॥
नवनीतनटादीनि गोपीपुञ्जान्वितानि च ।
गोवर्धनधरादीनि कौमाराणि महामुने ॥ २९९ ॥
यौवनानि तथान्यानि भवभीतिहराणि च ।
बुद्ध्या ह्येतानि कुर्वीत सोपचाराणि नान्यथा ॥ ३०० ॥

(दशमूर्तीनामन्यतमस्य बुद्धस्य लक्षणम्)

बुद्धस्य चाथ वक्ष्यामि ध्यानं लक्षणसंयुतम् ।
वराभयकरद्वन्द्वं बद्धपद्मासनं प्रभुम् ॥ ३०१ ॥
ध्यानोन्मीलितनेत्रं च शातकुम्भमयप्रभम् ।
एवं बुद्धमुनिं कुर्यात् ध्यायेद्वा मुक्तिदो भवेत् ॥ ३०२ ॥

---

२९४. a : V. N. कटि० for कटिं.
b : N. सलीला विस्तृताननम्.
२९७. d : A. भूम्यौ for भूम्योः.
३०१. a : V. बुद्धस्याथ वदाम्यद्य.
३०२. c : V. मयं for मुनिम्.

(दशमूर्तीनामन्यतमस्य कल्किनः लक्षणम्)

कल्किविष्णोस्तु वक्ष्यामि लक्षणं तु क्रमान्मुने ।
आरुह्याश्ववरं दिव्यम् अष्टापदसमद्युतिम् ॥ ३०३ ॥

इषुधिद्वयमध्यास्य श्वेतोष्णीषविभूषितः ।
दक्षिणेन कराग्रेण गृहीत्वा सायकं शुभम् ॥ ३०४ ॥

धनुर्वामेन च तथा मन्दायतजटान्वितः ।
एवं दशात्मनां प्रोक्तं लक्षणं ध्यानसंयुतम् ॥ ३०५ ॥

एते मत्स्यादयो देवाः एवं स्थाप्याः स्वतन्त्रके ।

(दशमूर्तीनाम् अस्वतन्त्रकल्पनविधिः)

अस्वतन्त्रेऽपि संस्थाप्याः लोहैरेव न चान्यथा ॥ ३०६ ॥

(विमानशोभार्थं दशमूर्तीनां प्रतिमाकल्पनक्रमः)

संस्थाप्य मूर्तिं विधिना वर्तमाने तु पूजने ।
पश्चाद्विमानशोभार्थं बिम्बं स्यादस्वतन्त्रकम् ॥ ३०७ ॥

परिवारैर्विहीनाः वा परिवारैस्तु संयुताः ।
अस्वतन्त्रे तु संस्थाप्याः सर्वमन्यत् समं भवेत् ॥ ३०८ ॥

(गृहार्चायां वासुदेवादिमूर्तीनामुपादानद्रव्यविवेकः)

एताः वै वासुदेवाद्याः कल्प्यन्ताः मूर्तयो गृहे ।
लोहजा एव कर्तव्याः न लोहैः शयनं स्मृतम् ॥ ३०९ ॥

---

३०३. d : V A. द्युतिः for ०तिम्.
३०४. a : A. N. द्वन्द्व for द्वय.
b : N. ०तम् for ०तः.
३०५. b : A. N. दमदाय for मन्दाय, N. ०तम् for ०तः.
३०६. c : A. My. S. अस्वतंत्रोऽपि संस्थाप्यो.
३०८. a : A. N. परिवारैर्विनावापि.
३०९. d : A. N. ०ने स्मृता for ०नं स्मृतम्.

आराधनं यथापूर्वं कुर्यात्तन्त्रविचक्षणः ।

(वासुदेवादिपरिवाराणां लक्षणम्)

इदानीं परिवाराणां लक्षणं शृणु सुव्रत ॥ ३१० ॥

योगपीठस्य परितः पूजापीठोपरि क्रमात् ।
न्यस्तव्याः वासुदेवाद्यास्तासां ध्यानं प्रचक्ष्यते ॥ ३११ ॥

तासां बिम्बं प्रकुर्वीत स्वतन्त्राणां विशेषवित् ।
पूर्ववद्वासुदेवाद्याः आसनैः समलङ्कृताः ॥ ३१२ ॥

दूर्वामरकताकाशनीलवर्णाः यथाक्रमम् ।

(शान्त्यादिपरिवारदेवीनां लक्षणम्)

शान्तिं कुंकुमसंकाशां श्रियं पद्मरजः प्रभाम् ॥ ३१३ ॥

सरस्वतीं सिताभां च रक्तवर्णां रतिं तथा ।
पद्मचामरहस्तां च मकुटादिविभूषिताम् ॥ ३१४ ॥

अलङ्कृतद्विहस्तां च ध्यायेदेवं समाहितः ।

(हेतिपरिवाराणां लक्षणम्)

श्वेतवर्णं ततः शङ्खं चक्रमग्निसमप्रभम् ॥ ३१५ ॥

गदां चैव सुवर्णाभां सुवर्णाभं तु पङ्कजम् ।
मुसलं कृष्णवर्णं तु खड्गमाकाशसन्निभम् ॥ ३१६ ॥

पञ्चवर्णं तथा शार्ङ्गं वनमालां तथैव च ।

(दिक्पालपरिवारदेवानां लक्षणम्)

द्विहस्ताः पुरुषाकाराः स्वचिह्नाङ्कितमस्तकाः ॥ ३१७ ॥

---

३१०. d : A. N. सत्तम for सुव्रत.
३११. d . A. N. प्रशस्यते for प्रचक्ष्यते.
३१३. c : A. N. कान्ति for शान्तिं.
३१६. c : A. N. च for तु.

इन्द्रः श्यामो यमः पीतो वरुणश्श्याम एव च ।
धनदस्तु सुवर्णभः वह्निः कोणे सुवर्णभाः ॥ ३१८ ॥

तथैव नैर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ।
ईशानस्तु भवेद्रक्तः एवं ध्यायेत्क्रमादिमान् ॥ ३१९ ॥

(चण्डप्रचण्डयोः द्वारपालयोः लक्षणम्)

चण्डप्रचण्डौ कुर्वीत रक्तशुक्लौ भयानकौ ।
दण्डहस्तौ विरूपाक्षौ प्रासादद्वारपार्श्वयोः ३२० ॥

सर्वेषां द्वारपालानां नायकौ द्विभुजौ शुभौ ।
किरीटाङ्गदचित्राङ्गौ सविलासौ महाबलौ ॥ ३२१ ॥

अष्टतालेन कर्तव्यौ यथाभिमतमुन्नतौ ।
चण्ड चक्राङ्कमुकुटं प्रचण्डं शङ्खचिह्नितम् ॥ ३२२ ॥

(जयविजययोः द्वारपालयोः स्थानं लक्षणं च)

ततोऽर्धमण्डपद्वारपार्श्वस्थौ च तथाविधौ ।
रक्तपीतनिभौ ध्यायेत् कुर्याद्द्वौ द्वारपालकौ ॥ ३२३ ॥

जयश्च विजयश्चैव पूर्ववल्लक्षणान्वितौ ।

(पूर्णादिपरिवारदेवानां लक्षणम्)

पूर्णं तु रक्तवर्णभमतिरक्तं तु पुष्करम् ॥ ३२४ ॥

---

३१८. d : N. अग्निः for वह्निः.
३२०. c : N. हस्त for हस्तौ.
३२१. b : A. द्वारकौ for नायकौ.
c : A. किरीटाङ्गतचक्राङ्गौ N. ०चक्राङ्क for चित्राङ्गौ.
d : N. सविलाससमप्रभौ.
३२२. a : A. अक्षतालौ च N. अष्टतालौ च for अष्टतालेन कर्तव्यौ.
c : V. शङ्ख for चण्ड.
d : A. चक्र for शङ्ख.
३२३. d : A. N. तौ कुर्यात् for कुर्याद्द्वौ.
३२४. d : A. अतिरिक्तं for अतिरक्तम्.

गरुडं पूर्ववत्कुर्यात् स्थितमासीनमेव वा ।
विष्वक्सेनं चतुर्बाहुं शङ्खचक्राभयाङ्कितम् ॥ ३२५ ॥
वामेन कटिमालंब्य पृष्ठतो दक्षिणादितः ।
बृहत्कुक्षिं समासीनं श्यामलाभं महातनुम् ॥ ३२६ ॥

(आनन्दादिपरिवारद्वारपालदेवानां लक्षणम्)

आनन्दः पीतवर्णस्तु हेमाभो नन्द उच्यते ।
कृष्णाभो वीरसेनस्तु सुषेणोऽञ्जनसन्निभः ॥ ३२७ ॥
सम्भवश्श्वेतवर्णस्तु प्रभवः कुन्दसन्निभः ।
मकुटाङ्गदचित्राङ्गाः गदाहस्ताः द्विबाहवः ॥ ३२८ ॥
चतुर्भुजाः वा विप्रेन्द्र सर्वाभरणभूषिताः ।
दंष्ट्राकरालवक्त्राः स्युस्ते यथाभिमतोन्नताः ॥ ३२९ ॥
ध्यायेद्वा कारयेद्वापि कर्तव्याः द्वारपालकाः ।

(परिवारत्वेन कल्प्यमानस्य गणेशस्य लक्षणम्)

गणाध्यक्षं चतुर्बाहुमेकदन्तं गजाननम् ॥ ३३० ॥
रक्तवर्णं बृहत्कुक्षिं सायुधं वाप्यनायुधम् ।
त्रिनेत्रं वा द्विनेत्रं वा मकुटादिविभूषितम् ॥ ३३१ ॥
यज्ञोपवीतिनं शान्तं स्थितं वासीनमासने ।

(परिवारदेवस्थायाः दुर्गायाः लक्षणम्)

ततो दुर्गां भगवतीं कृष्णाभां दुर्गरक्षिणीम् ॥ ३३२ ॥
चतुर्भुजां तथा कुर्यात् क्षाममध्यामलङ्कृताम् ।
अस्यामायुधविन्यासं वासुदेवे यथा तथा ॥ ३३३ ॥

---

३२६. d : V. श्यामलाङ्गं for श्यामलाभं.
३२७. b : A. N. हेमाङ्गो for हेमाभो.
३२९. c : N. ०चा for स्युः.
३३२. b : A. N. एव वा for आसने.
३३३. d : A. N. वासुदेवाय वै तथा.

पीतकौशेयवसनां पद्ममध्ये स्थितां शुभाम् ।
अथवा माहिषे मूर्ध्नि पीठे वास्तरणान्विते ॥ ३३४ ॥

(परिवारदेवस्थानां भूतपतीनां स्वरूपलक्षणम्)

अरुणः कुमुदः प्रोक्तः कुमुदाक्षोऽग्निसन्निभः ।
कृष्णाभः पुण्डरीकस्तु स्फटिकाभस्तु वामनः ॥ ३३५ ॥

शङ्कुकर्णस्तु पीताभः सर्वनेत्रोऽरुणप्रभः ।
सुमुखः शुक्लवर्णस्तु सर्ववर्णस्तथापरः ॥ ३३६ ॥

द्विभुजाः सर्व एवैते सदंष्ट्राः वृत्तचक्षुषः ।
भयङ्कराः बृहत्कायाः दण्डहस्ता अलङ्कृताः ॥ ३३७ ॥

कर्तव्याः भूतपतयो मकुटादिविभूषिताः ।
एवं तु परिवाराणां लक्षणं कीर्तितं स्फुटम् ॥ ३३८ ॥

एकबेरविधावेवं बहुबेरविधावपि ।

(स्थावरबिम्बस्य चतुष्प्रकारकत्वम्)

आसनं शयनं स्थानं यानमस्थावरे भवेत् ॥ ३३९ ॥

(एकबेरविधिलक्षणम्)

स्थानं चैवासनं चैव स्थावरे नान्यथा भवेत् ।
स्थावरं तु समुद्दिष्टं ब्रह्मभागे प्रतिष्ठितम् ॥ ३४० ॥

एतदेवैकबेरं तु प्रथितं मुनिपुङ्गव ।

(स्थावरविधौ श्रीभूम्योः निषेधः)

श्रीभूमी स्थावरे नेष्टे सर्वदा मुनिपुङ्गव ॥ ३४१ ॥

---

३३९. c : A. N. यानं for स्थानं.
d : A. N. स्थानमस्थावरं भवेत्.
३४०. b : V. स्थावरं for स्थावरे.

(स्थावरबिम्बोपादानद्रव्यनिर्देशः)

लोहपाषाणजं चैवं बिम्बं स्थावरकर्मणि ।

(अर्चनादौ बिम्बनियमः)

एकबेरेऽर्चयेन्नित्यं मूलबेरं तु मन्त्रवित् ॥ ३४२ ॥
तत्रैव स्नपनं कुर्यात् नैमित्तिकविधावपि ।
अन्येषु कर्मबिम्बेषु कुर्वीत विधिना प्रभोः ॥ ३४३ ॥
अजस्रं बलियानं च तीर्थयात्रामहोत्सवम् ।

(बहुबेरविधौ स्थावरबिम्बस्य स्थानादिः)

ब्रह्मस्थानं परित्यज्य स्थितमस्थावरं स्मृतम् ॥ ३४४ ॥
तदेव बहुबेरं तु बिम्बमुक्तं मनीषिभिः ।
सर्वं शिलादिभिर्बिम्बं बहुबेरविधौ भवेत् ॥ ३४५ ॥
विना वा सह वा कुर्यात् देवीभ्यां बहुबेरकम् ।

(बहुबेरविधौ अर्चनादिक्रमः)

न कुर्यान्मूलबिम्बेऽत्र नैत्यिकं तन्त्रवित्तमः ॥ ३४६ ॥
ब्रह्मभागेऽर्चनापीठे स्थापयित्वात्र कौतुकम् ।
तत्र सम्पूजयेद्देवमावाहोद्वासनादिकम् ॥ ३४७ ॥

(कर्मार्चाबिम्बमानम्)

उन्नतं लक्षणं तस्य मानाङ्गुलिभिरुच्यते ।
षडङ्गुलान्न च न्यूनं नाधिकं द्वादशाङ्गुलात् ॥ ३४८ ॥
कर्मार्चालक्षणं प्रोक्तमिति सर्वत्र सम्मतम् ।
अथवा मूलबेरस्य दशांशेनोन्नतिर्भवेत् ॥ ३४९ ॥

---

३४२. a : A. N. लोहपाषाणजत्वेव.
d : A. N. बीजं for बेरम्.

३४७. d : N. V. ०न्वितम् for ०दिकम्.

(बल्यादिबिम्बमानादिकथनम्)

तथैव बलियागार्थं तीर्थयात्रार्थमुन्नतम् ।
कर्मार्चात्रिगुणोन्नत्यं बिम्बमुत्सवकर्मणि ॥ ३५० ॥

एतावता प्रमाणेन बिम्बं स्नपनकर्मणि ।
मूलबेरस्य यद्रूपं यैश्चिह्नैश्चिह्नितं पुरा ॥ ३५१ ॥

यथा चायुधविन्यासं तथैवैतेषु सम्मतम् ।
स्थानयानासनेष्वेवं मूलबिम्बानुसारतः ॥ ३५२ ॥

रूपचिह्नायुधाङ्गानि शयने विधिरन्यथा ।

(शयने ध्रुवबेरे कर्मादिबिम्बलक्षणम्)

शयने कर्मबिम्बादीन्यासीनानि स्थितानि वा ॥ ३५३ ॥

चतुर्भुजानि सर्वाणि तन्मूर्तस्थान्वितानि च ।
शोभार्थं प्रतिमाः कार्याः यथेच्छोन्नतयः क्रमात् ॥ ३५४ ॥

(बिम्बप्रभादिविवेकः)

प्रतिमा प्रभया युक्ता रहिता वा स्ववाञ्छया ।
तस्यास्तु लक्षणं ह्येतत् कीर्तितं मुनिसत्तम ॥ ३५५ ॥

परितो देवबिम्बानां पार्श्वयोरुपरि क्रमात् ।
ज्वालावलीसमायुक्ता बाह्यतश्चतुरङ्गुला ॥ ३५६ ॥

---

३५०. a : V. यात्रा for यागा०.
३५१. c : N. बिम्बस्य for बेरस्य.
३५२. a : A. N. वायुध for चायुध.
३५३. c : V. शयिते for शयने ; A. N. बिम्बानि for बिम्बादी०.
d : A. N. त्वा० for ०न्या ; N. च for वा.
३५४. b : V. तन्मूर्त्यस्थान्वितानि च.
३५५. b : V. वास्तु for वा स्व.
c : A. तस्मात् for तस्याः.
३५६. d : V. बाहु for बाह्य०.

सशक्तिकाश्च वा बाह्ये तावन्माना: सुशोभना: ।
लताकुसुमपत्राद्यैरलङ्कारैरलङ्कृताः ॥ ३५७ ॥

विविधैर्मकराद्यास्यैर्वैष्णवै:रूपकैस्तथा ।
एकत्रिपञ्चसप्ताद्यैः सावर्तैरुद्धतैः शुभैः ॥ ३५८ ॥

नवभिः पञ्चदशभिः सप्तविंशतिभिस्तु वा ।
पुनः पुनरसंख्यातैर्यथाशोभानुसारतः ॥ ३५९ ॥

अन्विता:वह्नितेजोभिः कर्तव्याः पीठपार्श्वयोः ।
याः स्मृताः परिवारत्वे देवताः मुनिसत्तम ॥ ३६० ॥

केवलानां स्वतन्त्राणां.स्थाप्यानां यत्र कुत्रचित् ।
तासामेव च कुर्वीत स्थावरास्थावरादिकम् ॥ ३६१ ।

(ऋष्यादिस्थापितबिम्बलक्षणपरीक्षणनिषेधः)

ऋषिभिर्देवगन्धर्वैः यक्षैर्विद्याधरैरपि ।
रक्षोभिरपरैर्मुख्यैः बिम्बं यत्स्थापितं पुरा ॥ ३६२ ॥

पूजितं वा स्वसिद्ध्यर्थं भूमौ पर्वतमूर्धनि ।
नदीसमुद्रपुलिने तीरे वा यत्र कुत्रचित् ॥ ३६३ ॥

तस्मिन् बिम्बे न कर्तव्यं नेक्षितव्यं च लक्षणम् ।
परीक्षणात् क्षरत्यायुः कृते तु नरकं व्रजेत् ॥ ३६४ ॥

---

३५७. a : A. शक्तिकस्य वा बाह्या ताः.
b : A. ०मानात्सुशोभना for माना: सुशोभनाः.
३५८. a : A. N. कारैः for ०द्यास्यैः.
b : A. N. अन्विता for वैष्णवैः.
d : A. N. सद् for उद्०.
३६१. A. N. om.
३६२. A. N. om.
३६३. a : b : A. N. om.

तेषां समाधिमाहात्म्यात् तथा च तपसो बलात् ।
मन्त्रमाहात्म्ययोगाच्च तत्र तिष्ठत्यधोक्षजः ॥ ३६५ ॥

अशरीरवचोभिर्वा स्थापितं पूजितं च यत् ।
तत्राप्येवं न कर्तव्यं कृते वै पूर्ववत्फलम् ॥ ३६६ ॥

(ऋष्यादिस्थापितबिम्बस्य पूजनविधिः)

एवमादिषु बिम्बेषु लक्षणैः रहितेषु च ।
पुरातनाचारवशात् पूजयेत् पूजनक्रमात् ॥ ३६७ ॥

अन्यथा पूजयेद्यस्तु तत्फलं नाप्नुयान्नरः ।
तस्मात् पुरातनाचार्याः पञ्चरात्रपरायणाः ॥ ३६८ ॥

यथा कुर्युस्तथा कुर्यात् विद्वानाराधनं हरेः ।

(ब्राह्मणादिस्थापिस्य लक्षणविहीनबिम्बस्य पूजानिषेधः)

स्थापितं ब्राह्मणाद्यैर्यत् देवबिम्बमलक्षणम् ॥ ३६९ ॥

न तत्र पूजयेन्मन्त्री पूजयेल्लक्षणान्वितम् ।

(उत्सवादिबिम्बाभावे प्रतिनिधिः)

यत्कर्म यत्र बिम्बे तु प्रोक्तं तत्रैव तद्भवेत् ॥ ३७० ॥

असन्निधाने बिम्बानां सर्वेषामेवमाचरेत् ।
सर्वं वै कर्मबिम्बेऽस्मिन् उत्सवं स्नपनं तथा ॥ ३७१ ॥

तीर्थयात्रां च कुर्वीत बलिबिम्बे च वा द्विज ।
तथैवोत्सवबिम्बे वा सर्वमेतत्समाचरेत् ॥ ३७२ ॥

---

३६५. a : N. सन्निधि for समाधि०.
३६७. b : N. लक्षणे for लक्षणैः.
c : A. N. आचार्य for आचार.
३७०. a : N. मन्त्रैः for मन्त्री.
३७२. b : A. तु N. ०ऽपि for च.

(सर्वेषां बिम्बानां सन्निधौ आराधनक्रमः)

सन्निधौ सर्वबिम्बानां व्यत्यासं न समाचरेत् ।
नोत्सवं विविधैर्मन्त्री तत्र कुर्याद्यथारुचि ॥ ३७३ ॥

(शिष्यादिपूजिते स्थाने आराधनाक्रमः)

शिष्यादिपूजिते स्थाने कल्पना तत्कृता यथा ।
तथा तत्रैव कर्तव्यः अन्यथा विफलं भवेत् ॥ ३७४ ॥
तस्मात् सर्वप्रयत्नेन परीक्ष्यैवं समाचरेत् ।

(भगवत्प्रतिष्ठामुख्यकल्पस्वरूपम्)

मुख्यानुकल्पभेदं च वक्ष्यामि अधुना मुने ॥ ३७५ ॥
ग्रामे वा नगरे वापि कुट्टिके वा विशेषतः ।
प्रथमं कल्पितं यत्तत् मुख्यकल्पमुदाहृतम् ॥ ३७६ ॥

(भगवत्प्रतिष्ठायामनुकल्पस्य लक्षणम्)

यच्च मुख्यस्य बेरस्य अङ्गत्वेन पुनः कृतम् ।
नगरग्रामरथ्याङ्गमनुकल्पमुदाहृतम् ॥ ३७७ ॥

(मुख्यकल्पबिम्बोत्सवाचरणक्रमः)

मुख्यकल्पस्य बेरस्य उत्सवः सम्भवेद्यदि ।
ग्रामे च ग्रामसन्धौ च अष्टदिक्षु विदिक्षु च ॥ ३७८ ॥
उत्सवं बलियागं च कारयेद्राष्ट्रवृद्धये ।

(अनुकल्पे बिम्बोत्सवाचरणप्रकारः)

स्वतन्त्रे भिन्नतन्त्रे वा अनुकल्पे कृते सति ॥ ३७९ ॥
उत्सवं बलियागं च अग्रहारे च कारयेत् ।
अङ्गाश्रयादिदेवानां तत्तन्मुद्रां प्रदर्शयेत् ॥ ३८० ॥

---

३७३. c : A. N. विनोत्सवं विविधैर्मन्त्री.
३७४. V. om.
३७५. c : इतः आरभ्य अध्यायान्तः सम्पूर्णोऽपि पाठः A. N. कोषयोः नास्ति.

पुष्पन्यासं तु कर्तव्यं निवेद्यं तु न कारयेत् ।

(मुख्ये कल्पे कृतस्याराधनस्य सर्वाराधनत्वम्)

मूले सिक्ते यथा वृक्षे शाखा भवति तेजसा ॥ ३८१ ॥

मूलेन पूजितेनैव सर्वं भवति पूजितम् ।
तस्मात् सर्वप्रयत्नेन मुख्ये सर्वं समाचरेत् ॥ ३८२ ॥

(देवालयकल्पनार्थं निषिद्धस्थलं)

रज्जुपाते विशेषेण त्रिशूले सूत्रसंधिषु ।
देवालयं न कर्तव्यं वीथ्यग्रे सिद्धिमिच्छता ॥ ३८३ ॥

नात्र देवालयं कुर्यात् कृते दोषकरं भवेत् ।
तस्मात् सर्वप्रयत्नेन उक्तदेशे च कारयेत् ॥ ३८४ ॥

(तन्त्रसंकरनिषेधः)

यद्बिम्बं येन तन्त्रेन समारब्धं पुरादितः ।
प्रासादं वास्तुनिर्माणं तेन तन्त्रेण कारयेत् ॥ ३८५ ॥

यो यजेदन्यमार्गेण स नाशं कर्तुमिच्छति ।
राज्ञो राष्ट्रस्य सर्वस्य नाशं तत्रात्मनोऽपि च ॥ ३८६ ॥

कुलक्षयञ्च व्याधिञ्च विपुलं दुःखमञ्जसा ।
तन्त्रसंकरदोषस्तु विशेषात् राजराष्ट्रयोः ॥ ३८७ ॥

दोषायैव भवेद्विप्र सर्वदा तन्त्रवित्कृतः ।
तस्मान्न सङ्करं कार्यं तन्त्राणां हितमिच्छता ॥ ३८८ ॥

येन विक्रान्तमार्गेण कर्षणादिक्रिया कृता ।
आदौ तेनैव सकलं नान्यसिद्धान्तवर्त्मना ॥ ३८९ ॥

इति सम्यक् समाख्यातं मुख्यकल्पानुकल्पनम् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
प्रतिमालक्षणं नाम त्रयोदशोऽध्यायः

# चतुर्दशोऽध्यायः

## [प्रासादलक्षणविधानाध्यायः]

(प्रासादलक्षणप्रतिपादनार्थं नारदं प्रति गौतमस्य अभ्यर्थना)

गौतमः—

अद्य मे भगवन् ब्रूहि प्रासादस्य च लक्षणम् ।
यस्मिन् संस्थाप्य देवेशं नरः प्राप्नोति सद्गतिम् ॥ १ ॥

(प्रासादकल्पनार्थं वास्तुदेशनिर्देशः)

नारदः—

लक्षणं संप्रवक्ष्यामि प्रासादस्य निबोध मे ।
भूमिमादौ तु विधिना परीक्ष्यैव द्विजोत्तम ॥ २ ॥

पर्वते वा वने वापि तीर्थे वायतनादिके ।
नदीतीरे ह्रदतटे ग्रामे वा पत्तनेऽपि वा ॥ ३ ॥

नगरे वा तथा वीथौ जनवासे तु वा भवेत् ।
सर्वत्रायतनं शस्तं चातुर्वर्ण्यक्रमागते ॥ ४ ॥

(प्रासादार्थं भूमिपरीक्षणप्रकारः)

ब्राह्मणादिविभागेन वर्णगन्धरसेन तु ।
क्षीरवृक्षसमीपे तु शुभे स्थाने मनोरमे ॥ ५ ॥

तत्र भूमिं परीक्षेत वास्तुविद्याविशारदः ।
परिगृह्य शुभां धात्रीं गोमयेनोपलेपयेत् ॥ ६ ॥

---

१. c : My. तस्मिन् for यस्मिन्.
३. b : My. निम्ने for तीर्थे.
४. a : A. M. ०विधौ for वीथौ.
   d : My. वर्ण for वर्ण्य.
६. c : A. सुभान् गन्धान् for शुभां धात्रीं.

तत्र मध्ये घटं न्यस्य वर्धमानेन संयुतम् ।
'अवत्वन्तं' घटं विप्र वर्धमानं तथैव च ॥ ७ ॥

सर्पिषा संभृतं कृत्वा वर्धमानं निधाय तु ।
ऐन्द्रादिदिक्षु चत्वारो वर्तिप्रज्वाल्य कल्पयेत् ॥ ८ ॥

ब्राह्मणादिविभागेन कल्पयित्वा विधाय वै ।
अपरेण तु विप्रेन्द्र वास्तुविद्याविशारदः ॥ ९ ॥

मुहूर्तमात्रे निष्क्रान्ते दीपानालोकयेत् स्वयम् ।
या तत्र ज्वलते वर्तिः निर्मलैकशिखोर्ध्वगा ॥ १० ॥

तस्य भूमिस्तु सा ज्ञेया ब्राह्मणादिक्रमेण तु ।
ज्वलमानासु सर्वासु संकीर्णा सर्वकामदा ॥ ११ ॥

निर्वाणास्वथ सर्वासु पुनः प्रज्वलितासु वा ।
तथा विसर्जनीया सा वस्तुदुष्टा वसुन्धरा ॥ १२ ॥

परिजानाति भेदेन स्थपतिर्वास्तुतत्त्ववित् ।
प्रासादस्य विभेदेन शुद्धा भूमिः प्रशस्यते ॥ १३ ॥

(चतुर्विधभूमेः नामकीर्तनम्)

चतुर्विधा वसुमती लक्षणैः कथयामि ताम् ।
सुवर्णा प्रथमा प्रोक्ता सुभद्रा च द्वितीयका ॥ १४ ॥

पूर्णा चैव तथा धूम्रा ज्ञातव्या तु चतुर्विधा ।

(सुवर्णायाः भूमेः लक्षणम्)

लक्षणानि प्रवक्ष्यामि एकैकायाः पृथक् पृथक् ॥ १५ ॥

कदम्बार्जुनसंच्छन्ना पद्मोत्पलविभूषिता ।
नालिकेरवनैर्युक्ता चम्पकैश्चन्दनैर्युता ॥ १६ ।

---

७. c : A. अवद्यन्तं for अवत्वन्तं.
११. a : My. तस्य भूमेस्तु संज्ञेयम्.
१६. c : युता for युक्ता.

लतागुल्मयुता हृद्या सागरानुपसंस्थिता ।
प्रागुदक्प्रवणा स्निग्धा सुवर्णा शान्तिपुष्टिदा ॥ १७ ॥

(सुभद्रायाः भूमेः लक्षणम्)

वृक्षास्तु याज्ञिकाः वास्याः पश्चिमे संव्यवस्थिताः ।
गिरिपार्श्वाश्रिता या तु प्लक्षवृक्षसमायुता ॥ १८ ॥

निष्पावकोद्रवोपेता कूलस्थक्षेत्रसंयुता ।
व्रीहिधान्ययुतं क्षेत्रं दक्षिणेन व्यवस्थितम् ॥ १९ ॥

वृक्षैश्च पालितैर्युक्तं नदीतीर्थसमन्विता ।
क्षीरवृक्षसमोपेता उद्यानोपवनैर्युता ॥ २० ॥

लतागुर्वीयुता हृद्या सागरानुपसंस्थिता ।
सुगन्धकुसुमोपेता सा सुभद्रा सुखप्रदा ॥ २१ ॥

(पूर्णायाः भूमेः लक्षणम्)

विभीतकाकसङ्कीर्णा अप्रभूतोदकापि च ।
ईषत् स्निग्धा तु संपूर्णा पुष्टिदा परिकीर्तिता ॥ २२ ॥

(धूम्रायाः भूमेः लक्षणम्)

या वेणुवनसंकीर्णा स्नुहिपीलुवनावृता ।
श्लेष्मातकार्कबहुला विभीतकसमावृता ॥ २३ ॥

गृध्रवायसगोमायुश्येनर्क्षगणसंयुता ।
निस्तोया सोषरा धात्री सा धूम्रेति प्रकीर्तिता ॥ २४ ॥

---

१७. c : A. V. प्रावणा० for प्रवणा०.
१९. b : A. कुलस्थ for कूलस्थ.
c ; d : My. om.
२२. a : My. व्रीहिताकर्किसङ्कीर्णा.
d : My. पुष्पिता for पुष्टिदा.
२३. c : My. ०काक for ०कार्क.
d : My. विहीतकुसुमावृता.

(क्षयदायाः भूमेः त्यागनिर्देशः)

क्षयदा रोगमाधत्ते तां भूमिं परिवर्जयेत् ।

(वास्तुभूपरिग्रहस्थलम्)

वर्णगन्धरसैर्यत्र ज्ञातव्या भूः सुशोभना ॥ २५ ॥

शस्ते हि तत्र कुर्वीत वास्तुभूमेः परिग्रहम् ।

(शङ्कुकरणम्)

यावत्प्राकारपर्यन्तं तावद्भूमेस्तु मण्डलम् ॥ २६ ॥

सूत्रयित्वा चतुर्दिक्षु शङ्कुं कृत्वा प्रदक्षिणम् ।

(भूतानुज्ञापनम्)

भूतक्रूरबलिं दत्त्वा ततः कर्म समारभेत् ॥ २७ ॥

अक्षतांस्तु तदादाय देशिकः प्राङ्मुखः स्थितः ।
अष्टाविंशतिकं जप्त्वा ततोऽष्टाक्षरविद्यया ॥ २८ ॥

भूतान् प्रोत्साहयेत् क्षिप्त्वा अक्षातांस्तु विधानवित् ।
येऽत्र तिष्ठन्ति वै स्थाने भूताः स्थूलास्तथेतराः ॥ २९ ॥

क्रूराः सौम्याः विकृतयः समन्ताद्राक्षसाश्च ये ।
ते सर्वे व्यपगच्छन्तु विष्णोरत्र तु मन्दिरम् ॥ ३० ॥

करिष्याम्यनुमानन्तु स्वस्ति तेभ्यो नमो नमः ।
इत्यनुज्ञाप्य भूतादीन्

(आलयकल्पनार्थं भूमिसंशोधनं वास्तुपूजनं च)

पुनः शोधनमारभेत् ॥ ३१ ॥

वृषौ तु प्राङ्मुखौ शुक्लौ समवर्णौ सुशोभनौ ।
लाङ्गले योजयित्वा तौ कर्षयेत्तां वसुन्धराम् ॥ ३२ ॥

---

२७. d : My. तत्र for ततः.
३०. c : My. ॰प्यवगच्छन्तु for व्यपगच्छन्तु.

श्वेतवस्त्रधरःस्रग्वी वास्तुविद्याविशारदः ।
प्राङ्मुखः प्रथमं स्थित्वा सर्वालङ्कारभूषितः ॥ ३३ ॥

अभिमन्त्र्यायसीं यष्टिं 'द्वादशाक्षर'विद्यया ।
ततः खात्वा तु तां भूमिं समां सर्वत्र यत्नतः ॥ ३४ ॥

वापयेत्तत्र बीजानि वैष्णवानि विधानतः ।
फलकाले तु सम्प्राप्ते चारयेत्पशुभिः पुनः ॥ ३५ ॥

हलेन सीरयित्वा तु समां कृत्वा तु शोधयेत् ।
समत्वं च मृदुत्वं च भूमेर्विज्ञाय यत्नतः ॥ ३६ ॥

ततः खात्वा तु वै गर्तं तालमात्रं समन्ततः ।
तं मृदा पूरयित्वा तु पाषाणैस्सुदृढैर्द्विज ॥ ३७ ॥

यष्टिभिस्ताडयेत् खातं यथा तत् समतां व्रजेत् ।
तन्मध्ये पूजयेद्विप्र यथावद्वास्तुदेवताः ॥ ३८ ॥

(आलयार्थभूमौ कल्पितेषु पदेषु देवतानां स्थाननिर्देशः)

चतुरश्रं सरः कृत्वा विभज्य नवधा तु तत् ।
ततोऽवटविभागेन वासुदेवगतान् द्विजः ॥ ३९ ॥

यथात्र विन्यसेद्देवांस्तथा ते कथयाम्यहम् ।
आदौ नवपदे मध्ये ब्रह्माणं तु प्रकल्पयेत् ॥ ४० ॥

ततः पूर्वोत्तरे देशे ईशानं विन्यसेद्गुरुम् ।
अनन्तरेण पर्जन्यं जयं माहेन्द्रमेव च ॥ ४१ ॥

आदित्यश्च तथा सत्यो भृगुश्चैव तथापरः ।
अन्तरिक्षोऽष्टमः प्राच्यां दक्षिणे तु निबोध मे ॥ ४२ ॥

---

३४. c : My. कृतां for तु तां.
४२. b : My. भृशं for भृगु.

अन्याशासंस्थितो वह्निः पूषा च तदनन्तरम् ।
गृहक्षतं भृगुं चैव गन्धर्वं भृङ्गमेव च ॥ ४३ ॥

राजा चैव क्रमात् प्रोक्तो दक्षिणे संस्थिताः सुराः ।
पितृदौवारिकाश्चैव सुग्रीवश्च तथा परः ॥ ४४ ॥

पुष्पदन्तश्च वरुणः असुरः शोषणस्तथा ।
पापयक्ष्मा च इत्येते वारुण्यान्तु स्थितास्सुराः ॥ ४५ ॥

आपश्चैवापवत्सश्च ब्रह्मेशानान्तरे स्थितौ ।
पदद्वयगतो विप्र आग्नेयाङ्गगतौ शृणु ॥ ४६ ॥

ब्रह्मवह्न्योरन्तर्गतः सविता चापरं शृणु ।
सावित्रं चैव विज्ञेयावेतौ विप्रपदद्वये ॥ ४७ ॥

इन्द्रमिन्द्रजयञ्चैव पितृब्रह्मान्तरे स्थितौ ।
रोगस्य ब्रह्मणोःमध्ये रुद्रयक्ष्मापदद्वये ॥ ४८ ॥

पदद्वयविभागेन मध्यावरणसंस्थितः ।
वास्तोः कोणेषु ये देवाः कथितास्ते मया द्विज ॥ ४९ ॥

प्राच्यां दिक्षु स्थितान् वक्ष्ये मध्यावरणगान् सुरान् ।
आदित्यब्रह्मणोर्मध्ये मरीचिः षट्पदे स्थितः ॥ ५० ॥

यमस्य ब्रह्मणोःमध्ये कोष्ठषट्के विपश्चितः ।
जलस्य ब्रह्मणोः मध्ये मित्रष्षट्कगतः स्मृतः ॥ ५१ ॥

उत्तरे तु स्थितः षट्सु ब्रह्मसोमान्तरे भृगुः ।
बाह्यतः कथयिष्यामि दैविकोणेष्ववस्थिताः ॥ ५२ ॥

---

४३. b : My. ०पुरुषः for पूषा च.
४८. c : My. रोमस्य for रोगस्य.
४९. c : इतः आरभ्य ५८. b : पर्यन्तं स्थितः पाठः My. A. om; अयं मध्यस्थः पाठः केवलं V. कोषे एव उपलभ्यते.

चरकी च विदारी च पूतना च तथापरा ।
पापा च राक्षसी चान्या ईशादारभ्य संस्थिताः ॥ ५३ ॥
एवं पदविभक्तास्तु वास्तुदेवाः मयोदिताः ।

(भूमौ वास्तुपुरुषस्य स्थित्यादिकथनम्)

शिरस्तस्येशदैवत्यं नैर्ऋत्यां चरणौ स्मृतौ ॥ ५४ ॥
अनला अनिलौ बाहू आपो वक्त्रे तु संस्थिताः ।
आपवत्सं तु हृदयं कर्णयोर्दितिरेव च ॥ ५५ ॥
मेरुद्वयं स्थितो ज्ञेयो पर्जन्यः स्कन्ध उच्यते ।
समस्तेनानु गन्धर्वो वाम ऊरु समाश्रितौ ? ॥ ५६ ॥
सुग्रीवभृङ्गराजानौ उभौ जानुसमाश्रितौ ।
शक्रविष्णू स्थितौ पादौ लिङ्गस्थाने तथा जयः ॥ ५७ ॥
नाभिमध्ये गते ब्रह्मा वास्तोः स्थानेषु संस्थितः ।

(बलिदानं होमप्रकारश्च)

एतांस्तु देवान् संपूज्य वास्तुदेहगतान् द्विज ॥ ५८ ॥
दिग्बलिं च ततो दत्त्वा इष्टकाहोममाचरेत् ।
मध्ये तु स्थण्डिलं कृत्वा 'द्वादशाक्षर'विद्यया ॥ ५९ ॥
समिधश्च ततो हुत्वा 'द्वादशाक्षर'विद्यया ।
घृतहोमं ततो हुत्वा 'प्रणवे'न यथाविधि ॥ ६० ॥
कृत्वा व्याहृतिहोमं तु दत्त्वा पूर्णाहुतिं ततः ।
क्षीरेण पायसं पक्वं 'प्रणवे'न तु साधकः ॥ ६१ ॥

---

५९. b : My. ०मैण० A. मेव for होम.
c : A. तन्मध्ये तु स्थलं कृत्वा.
६०. a ; b : My. A. om.
६१. c : A. My. S. पक्त्वा for पक्वं.

आघारावाज्यभागौ तु 'प्रणवे'न तु मन्त्रवित् ।
'द्वादशाक्षर'मन्त्रेण हुत्वा द्वादश मन्त्रवित् ॥ ६२ ॥
'द्वादशाक्षर'वर्णैस्तु व्यस्तैर्द्वादश होमयेत् ।
पुनर्व्याहृतिहोमं तु विधाय विधिना मुने ॥ ६३ ॥
वास्तुदैवतहोमं तु ततः कुर्याद्विचक्षणः ।
इन्द्राय वह्नये चैव सोमाय तदनन्तरम् ॥ ६४ ॥
वरुणाय समीराय कुबेराय तथैव च ।
रुद्रेभ्यश्च ततो हुत्वा भूतेभ्यश्च तथैव च ॥ ६५ ॥
ग्रहेभ्यो देवताभ्यश्च नक्षत्रेभ्यः तथा पुनः ।
विश्वेभ्यश्चैव दैवेभ्यो विष्णवे चेति होमयेत् ॥ ६६ ॥
कृत्वा व्याहृतिहोमं तु ब्राह्मणैस्स्वस्ति वाच्य च ।
पूर्वाशास्यः स्वयं भूत्वा कारयेत् 'प्रणवे'न तु ॥ ६७ ॥

(आलयकल्पनक्रमे इष्टकान्यासविधिः)

अश्वत्थशङ्कुना रेखाः कृत्वाष्टौ विष्णुतत्परः ।
पूर्वाग्रमुत्तराग्रं वा लिखित्वा तु समाहितः ॥ ६८ ॥
'नमो नारायणायेति प्रणवा'द्यं जपेत्ततः ।
'द्वादशाक्षर'मन्त्रं वा 'प्रणवं'वा यथारुचि ॥ ६९ ॥

---

६२. a : My. ०ज्यधारौ A. ०द्यथारौ for ०ज्यभागौ.
b : My. A. स for तु.
६३. a : My. वर्णैस्तु द्वादशभिः.
६५ c : V. तथा for ततो.
d : V. मरुद्भ्यः for भूतेभ्यः.
६७. c : V. पूर्वा चास्य स्वधा हुत्वा.
६८. a : My. A. खात्वा for रेखाः.
६९. a : My. नाम्ना for नमो.

ऊर्ध्वेऽह्नि तु ततो विद्वान् इष्टकाः सन्निधापयेत् ।
चतस्रः इष्टकाहृत्य तासु रेखासु विन्यसेत् ॥ ७० ॥

द्वादशाष्टौ चतस्रो वा इष्टकाः समुदाहृताः ।
आग्नेयादिन्द्रपर्यन्तं क्रमान्न्यस्येष्टकास्समाः ॥ ७१ ॥

एवं न्यस्येष्टकाः मन्त्री निम्नोन्नतविवर्जिताः ।

(प्रथमेष्टकान्यासस्थानम्)

द्वारस्य दक्षिणे भागे न्यस्या तु प्रथमेष्टका ॥ ७२ ॥

(निम्नोन्नतेष्टकाधाने दोषाः)

निम्ने दुःखं भवेत्तत्र राजतो भयमुन्नते ।
तस्मात् समं सदा कुर्यात् इष्टकाधानमुन्नतम् ॥ ७३ ॥

एवमेव शिलाभिस्तु काष्ठैर्वा मृद्भिरेव वा ।

(इष्टकाधानक्रमे शुभाशुभपरीक्षणविधिः)

शुक्लपुष्पाणि लाजांश्च निर्वपेदोमिति ब्रुवन् ॥ ७४ ॥

निर्वपित्वाक्षतान् मन्त्री आवर्तं तु परीक्षयेत् ।
जपेत् प्रणवमप्यग्रे समीक्ष्य च शुभाशुभम् ॥ ७५ ॥

शुभं तु दक्षिणावर्ते वामावर्तेऽशुभं भवेत् ।

(इष्टकाधिष्ठितगर्तपूरणम्)

पूरयेच्च पुनर्गर्तं विकीर्य कुसुमाक्षतान् ॥ ७६ ॥

---

७०. a : My. ऊर्ध्वेऽह्नि for ऊर्ध्वेऽह्नि तु.
c : A. My. S. इष्टकाः गृह्य for इष्टकाहृत्य.
७१. d : V. इमा for क्रमात्.
७२. d : V. न्यस्य for न्यस्या.
७३. c : My. तु समतां V. समं तदा for समं सदा.
७४. c : My. A. पुष्पांश्च for पुष्पाणि.
७५. c : My. A. जपन् for जपेत् ; My. A. अव्यग्रः for अप्यग्रे.
७६. a : V. अशुभं for शुभं तु.
b : V. शुभं for ऽशुभम्.

क्षेत्रजाभिस्ततो मृद्भिः शिल्पिनस्तु विसृज्य च।
कृत्वैवमिष्टकाधानं

(आलयकल्पनक्रमे गर्भन्यासविधौ होमक्रमः)

गर्भन्यासं समारभेत् ॥ ७७ ॥

गर्भहोमविधानं तु विधेयं सर्वकामदम्।
'द्वादशाक्षर'मन्त्रेण हुत्वा व्याहृतिभिस्ततः ॥ ७८ ॥

'अष्टाक्षरे'ण मन्त्रेण 'प्रणवे'न तथैव च।
अष्टाविंशतिरष्टौ वा तिलैर्घृतमधुप्लुतैः ॥ ७९ ॥

द्वादशाहुतयः पश्चात् होमयेत्ताश्च वै शृणु।
'ओं बीजेभ्यः स्वाहा' 'ओं वास्तुभ्यः स्वाहा'
'ओं समुद्रेभ्यः स्वाहा' 'ओं सर्वभूतेभ्यः स्वाहा'
'ओं दिग्भ्यः स्वाहा' 'ओं हृदेभ्यः स्वाहा'
'ओं पातालेभ्यः स्वाहा'
'ओं नागेभ्यः स्वाहा' 'ओं उद्भिजेभ्यः स्वाहा'
'ओं वृक्षेभ्यः स्वाहा' 'ओं पर्वतेभ्यः स्वाहा'
'ओं लोकेभ्यः स्वाहा' 'ओं भूः स्वाहाः'
'ओं भुवः स्वाहा'
'ओं सुवः स्वाहा' 'ओं स्वः स्वाहा'
'ओं भूर्भुवस्स्वः स्वाहा'।
गर्भभाजनमध्ये तु दत्त्वा आज्यं समापयेत् ॥ ८० ॥

---

७७. c. My. A. ०यान्तां for ०धानम्.
d : My. अथाचरेत् A. समाचरेत् for समारभेत्.

८०. b : इत्यस्यानन्तरं My. धातुभ्यः for वास्तुभ्यः; V. om. ओं वास्तुभ्यः स्वाहा; My. नदीभ्यः for दिग्भ्यः; My. A. मृदेभ्यः for हृदेभ्यः; My. A. वृक्षेभ्यः for उद्भिजेभ्यः.

(गर्भन्यासक्रमः)

कृतहोमस्तु संगृह्य देशिको गर्भभाजनम् ।
मन्त्र'मष्टाक्षरं' जप्त्वा ध्यात्वा तु मनसा हरिम् ॥ ८१ ॥

'सपर्वतवना देवी' मन्त्रमेतं पुनः पठेत् ।
'सर्वभूतालये देवि पर्वतस्तनमण्डिते ॥ ८२ ॥

समुद्रवसने मातरिमं गर्भं समाश्रय' ।
बीजगन्धौषधीयुक्तमक्षतकुसुमान्वितम् ॥ ८३ ॥

हेमरत्नसमायुक्तं सह वै शस्तया मृदा ।
मन्त्रमुच्चार्य गर्ते तु संस्थाप्य श्रेय इच्छता ॥ ८४ ॥

गर्तं तु पूरयेदेवं गोमूत्रेण परिप्लुतम् ।
गर्भाधानं भवेदेवं कृतं भूमेः सुशोभनम् ॥ ८५ ॥

(प्रासादोच्छ्रायादिनिर्देशः)

गर्भन्यासे कृते पश्चात् प्रासादं तत्र कारयेत् ।
एकहस्तात् समारभ्य यावद्धस्तशतं पुनः ॥ ८६ ॥

एक भूम्यादिकं कुर्यात् यावद्वै सप्तभूमिकम् ।
आयादिपरिशुद्धं तु विमानं सर्वसिद्धिदम् ॥ ८७ ॥

(वृत्तादिभेदेनालयस्य चतुर्विधत्वं तेषां फलञ्च)

वृत्तं वा चतुरश्रं वा आयतं वृत्तमेव वा ।
आयतं चतुरश्रं वा प्रासादं च चतुर्विधम् ॥ ८८ ॥

---

८२. a : My. सपर्वतवनां देवीं.
b : My. A. एतत् for एतं.
८४. d. V. इच्छति for इच्छता.
८७. c : V. ०भिर्विशुद्धं for परिशुद्धं.
८८. d : My. A. तु for च.

वृत्तेन सर्वमाप्नोति चतुरश्रेण वाञ्छितम् ।
वृत्तायतेन मोक्षं तु विमानेन समाप्नुयात् ॥ ८९ ॥
चतुरश्रायतेनैव शान्तिं पुष्टिं लभेन्नरः ।

(प्रासादप्राकारादिस्वरूपवर्णनम्)

प्रासादेष्वेषु सर्वेषु चतुरश्रायताः द्विज ॥ ९० ॥
प्राकारलक्षणोपेताः कर्तव्यास्तु विशेषतः ।
अधस्ताज्जगतेः तद्वत् उपानात्संप्रकल्पयेत् ॥ ९१ ॥
वृत्तवृत्तायते गेहे तत्र पीठचतुष्टयम् ।
उपानात् कोणगं कुर्यादरविन्दसमन्वितम् ॥ ९२ ॥
वैनतेयं समावेश्य पूजनार्थं तु नित्यशः ।
शिलाभिरिष्टकाभिर्वा काष्ठैर्वा मृद्भिरेव वा ॥ ९३ ॥

(प्रासादमाननियमः)

कुर्यात् प्रासादमानं तु विभोरर्चानुरूपतः ।

(पदकल्पनपूर्वकं गर्भगृहादीनां स्थानादिनिर्देशः)

विभज्य सप्तधा क्षेत्रमायामाद्विस्तरादपि ॥ ९४ ॥
गर्भं तु पञ्चविंशद्भिः मध्ये तु परिकल्पयेत् ।
बहिर्भागांस्तु भित्यर्थं कल्पयित्वा द्विजोत्तम ॥ ९५ ॥
भित्तीनामुच्छ्रयो विप्र सप्तभागसमो भवेत् ।
तत्प्रमाणेन पादाः स्युः पालिकाकारसन्निभाः ॥ ९६ ॥

---

८९. a : V. वृत्ते च for वृत्तेन.
९०. d : My. A. चतुरश्रायते for चतुरश्रायताः.
९१. a : V. प्राकारा० for प्राकार०.
c : V. जगती for जगतेः.
d : V. उपानादि प्रकल्पयेत्.
९२. b : V. पीनं for पीठ०.
c : V. कोणकं for कोणगं.
९६. c : My. A. पादाभ्यां for पादाः स्युः.

भित्युच्छ्रयस्य द्विगुणं समं वा शिखरोच्छ्रयम् ।
चतस्रो नासिकाः दिक्षु कार्यास्तत्र शुभान्विताः ॥ ९७ ॥

अष्टौ कपोतनास्यस्तु तथा द्वादश वा द्विज ।

(प्रासादशिखाघटकल्पनप्रकारः)

वृत्ते च चतुरस्रे च समवृत्तशिखाघटः ॥ ९८ ॥

वृत्तायते तु प्रासादे चतुरस्रशिखाघटः ।
शिखाघटं यथाशोभं चतुरश्रायते मुने ॥ ९९ ॥

लाञ्छयेद्गरुडेनैव चतुरस्रे तथायते ।
वृत्ते वृत्तायतेऽङ्गानां लाञ्छयेद्वाहनैः शुभैः ॥ १०० ॥

(आलयपुरोग्रीवादिकल्पनंप्रकारः)

गर्भमानं समं भज्य पञ्चमांशेन बुद्धिमान् ।
एकमंशं ततो गृह्य पुरोग्रीवां प्रकल्पयेत् ॥ १०१ ॥

पादान् कपोतान् शिखरं तत्रापि परिकल्पयेत् ।
शिखाघटावलिं तत्र कुर्याद्वै पूर्वपश्चिमम् ॥ १०२ ॥

उत्तरे दक्षिणे तस्य दुर्गागणपती स्मृतौ ।
ततोऽर्धमण्डपः कार्यो गर्भविस्तारविस्तरः ॥ १०३ ॥

---

९७. a : V. भूयस्य for ०च्छ्रयस्य.
b : V. शिखरं भवेत् for शिखरोच्छ्रयम्.
c : V. छिद्रा for दिक्षु.
d : V. कुर्यात्तत्र समन्विताः.

९८. d : My. A. वृत्ति for वृत्त.

९९. b : A. चतुरस्तु शिखाघटः, My. चतुरस्तु शिलाघटः.
c : My. A. उपकल्प्या यथा शोभां.

१००. c : A. अङ्गेन for अङ्गानां.

१०१. a : V. न शुभैर्गर्भमानानां.
d : V. पुरोद्री सम्प्रकल्पयेत्.

१०२. a ; b : V. om.

१०३. c : V. ततोऽर्धमण्डपाकारो.

अर्धायतस्तस्माद्गर्भतुल्यायतोऽपि वा ।
बहिरस्य तु सर्वस्य कुर्याद्धि संवृतिं शुभाम् ॥ १०४ ॥

(विमानदेवतास्थाननिर्देशः)

विमानदेवताभेदो वक्ष्यते शृणु सुव्रत ।
प्राच्यामादिवराहं तु श्रीहरिं दक्षिणे ततः ॥ १०५ ॥

प्रतीच्यां श्रीधरो देवो हयशीर्षस्तथोत्तरे ।
द्वितले तु विशेषोऽयं कीर्त्यते मुनिसत्तम ॥ १०६ ॥

पूर्वस्यां तु वराहः स्याद्दक्षिणे तु नृकेसरी ।
आप्ये जनार्दनो देवः अनन्तस्तु तथोत्तरे ॥ १०७ ॥

अधस्तात्तदधिष्ठाने कल्पयेद्देवताः क्रमात् ।
आग्नेये हस्तिवदनमीशं दक्षिणतोऽथवा ॥ १०८ ॥

दक्षिणामूर्तिमृषिभिः सेवितं पादमाश्रितम् ।
विश्वरूपं प्रतीचीने कमलासनमुत्तरे ॥ १०९ ॥

ऐशान्यामम्बिकां देवीं माहिषे शिरसि स्थिताम् ।
अथवा केवलां वापि कल्पयेद्देशिकोत्तमः ॥ ११० ॥

(विमानाकृतिविशेषानुसारं बिम्बावस्थाननियमः)

आयते चतुरश्रे च आयते वृत्त एव च ।
शयनं तत्र कुर्वीत धर्मकामार्थमोक्षदम् ॥ १११ ॥

सर्वत्र यानं शयनं प्रासादेषु विधीयते ।
चतुरश्रे च वृत्ते च स्थानं वासनमेव वा ॥ ११२ ॥

---

१०४. a : V. अर्धाधिकायत My. अर्धावतस्तत० for अर्धायतस्त०.
d : V. कार्यश्च for कुर्याद्धि ; My. सम्प्रतिं for संवृतिं.

१०५.—११०. My. A. om.

१११. a : A. V. आलते for आयये.
c : My. नात्र for तत्र.
d : My. A. सर्व for धर्म०.

तद्ग्राममध्यमे कुर्यात् स्थानाद्यं तु चतुष्टयम् ।
पश्चिमे चासने स्थानं शयनं चोत्तरं तथा ॥ ११३ ॥

स्थानं प्राच्यां प्रशंसन्ति यानं वै दक्षिणे भवेत् ।
कोणेषु स्थानमेवं स्यात् सर्वत्र स्थानमेव वा ॥ ११४ ॥

सर्वत्र वामतः पादौ शयने देववेश्मनि ।

(विमानद्वारकल्पने नियमः)

प्राक्प्रत्यक्द्वारमेवं स्यात् स्थानयानासनेषु च ॥ ११५ ॥

पूर्वद्वारं तु धर्मार्थी कुर्यात्प्रासादमादितः ।
मोक्षार्थी दक्षिणद्वारं धमार्थी पश्चिमाननम् ॥ ११६ ॥

उदग्द्वारं तु कर्मार्थी कोणेषु परिवर्जयेत् ।
एवं कामानुरूपेण सर्वत्र द्वारमेव वा ॥ ११७ ॥

संवृतश्च यथाशोभमुन्नत्यायामविस्तरम् ।

(अवतारदेवताबिम्बकल्पनप्रकारः)

तत्रावताररूपाणि चित्राणि सह कारयेत् ॥ ११८ ॥

चित्रेण वार्धचित्रेण वित्तस्यैवानुरूपतः ।
अन्तर्बहिश्च कर्तव्याः देवाश्चान्ये यथारुचि ॥ ११९ ॥

(प्रासादद्वारादिकल्पनप्रकारः)

द्वारं तस्याग्रतस्त्वेकं तथा चैवार्धमण्डपे ।
तद्बहिस्तु गलं कुर्यात् गलाग्रे मुखमण्डपम् ॥ १२० ॥

---

११५. d : V. ०ऽपि च for ०षु च.
११९. d : My. V. अन्याः for अन्ये.
१२०. a : V. एवं for एकं.
c ; d : V. om.

स्नानकुट्टिमसंयुक्तं पूर्वास्यं लक्षणान्वितम् ।
तद्बहिर्गरुडावासं विमानाभिमुखं शुभम् ॥ १२१ ॥
एवं लक्षणमुद्दिष्टं प्रासादस्य द्विजोत्तम ।

(सालत्रयकल्पनप्रकारः)

सालत्रयं ततः कुर्यात् तस्य सर्वस्य बाह्यतः ॥ १२२ ॥
अग्रपश्चिमतो द्वारमेषां गोपुरभूषितम् ।
उपद्वारं तु सर्वत्र यथाभिमतमुच्यते ॥ १२३ ॥

(सेनेशस्यावासस्थाननिर्देशः)

सेनेशावासमैशान्यां प्रथमावरणान्तरे ।

(भूतावासमहापीठस्थानम्)

भूतावासं महापीठं द्वितीयावरणाग्रतः ॥ १२४ ॥

(मण्डपस्य स्थानम्)

बाह्यतस्तस्य पीठस्य मण्डपं वेदिकान्वितम् ।

(आस्थानमण्डपस्थानम्)

आस्थानमण्डपं कुर्यात् तृतीयावरणाग्रतः ॥ १२५ ॥

(ध्वजपीठस्य स्थानम्)

ध्वजपीठं तु तस्याग्रे गोपुरान्तर्विधीयते ।

(भूतावासमहापीठस्थाने विकल्पः)

तृतीयावरणाद्बाह्ये महापीठं पुनर्भवेत् ॥ १२६ ॥

---

१२१. a : My. A. स्थान for स्नान.
d : My. विमानभिमुतखमुच्यते.
१२२. a ; b ; c ; d : My. om.
१२३. a ; b ; c ; d : My. om.
१२५. d : My. V. तृतीयावरणेऽग्रतः.

(विमानद्वारानुसारं मण्डपस्थानकथनम्)

भवनं सर्वदेवानां भूतदैत्योरगरक्षसाम् ।
मण्डपाद्यैरलङ्कुर्यात् बहिरावरणत्रयम् ॥ १२७ ॥

चतुर्थावरणे पीठं महापीठं तु पञ्चमे ।
मण्डपाः प्राङ्मुखाः सर्वे विविधारोहणैर्युताः ॥ १२८ ॥

दक्षिणास्ये विमानेऽपि पूर्वस्याः मण्डपाः शुभाः ।
एवं वा पश्चिमास्ये तु पश्चिमास्यास्तु वा द्विज ॥ १२९ ॥

उत्तरास्ये विमाने तु पूर्वस्याः देवमण्डपाः ।
शिल्पशास्त्रानुसारेण कुर्यात् सर्वं विशेषतः ॥ १३० ॥

(पुष्पावासादिस्थलनिर्देशः)

पुष्पावासं तु पूर्वस्याम् आग्नेय्यां तु महानसम् ।
महानसेऽग्निकोणे तु चुल्लीस्थानं विधीयते ॥ १३१ ॥

चुल्लीनां पश्चिमे कुर्यान्नित्याग्न्यायतनं शुभम् ।
दक्षिणे तु हरस्थानं धान्यागारं तु नैर्ऋते ॥ १३२ ॥

पश्चिमे हेतिभवनं कुसूलं वायुगोचरे ।
उत्तरे नर्तनस्थानं पानीयस्थानमैश्वरे ॥ १३३ ॥

प्रथमावरणे वापि द्वितीयावरणेऽपि वा ।
तृतीयावरणे वापि यथाकामं तु कारयेत् ॥ १३४ ॥

---

१२७. d : A. My. अग्नि० for बहि०.
१२८. a ; b : V. om.
१३०. b : S. My. A. M. एव for देव०.
c : V. ०गुण्येन for ०सारेण.
१३१. a : S. My. A. M. पूर्वां for पुष्पा०.
१३२. c : My. A. भर for हर.
१३३. b : S My. A. M. कुसुमं for कुसूलं.
१३४. d : S. My. A. कांक्षं for कामं.

तृतीयावरणे प्राच्यां व्रजं कुर्याद्‌द्विजोत्तम ।
आग्नेऽय्यां गायकस्थानम् अश्वस्थानं तु दक्षिणे ॥ १३५॥

नैर्ऋत्यां सत्रशाला च वारुणे कूपमेव च ।
वायव्ये मण्डपं कुर्यात् उत्सवार्थं प्रपान्वितम् ॥ १३६ ॥

उत्तरस्यां गजस्थानम् ईशाने मठमुच्यते ।

(आलयकल्पनफलश्रुतिः)

एवं यो मन्दिरं कुर्यात् कृतकृत्यः स पूरुषः ॥ १३७ ॥

अनेकजन्मजनितं यत्पापं देहमाश्रितम् ।
स तस्मान्मुच्यते पापात् कृत्वा देवस्य मन्दिरम् ॥ १३८ ॥

(प्रासादसंख्यानिर्देशः)

चतुःषष्ठि समाख्याताः प्रासादाः विष्णुना पुरा ।
एवमेतत् समाख्यातं प्रासादस्य तु लक्षणम् ॥ १३९ ॥

(प्रासादद्वारलक्षणम्)

द्वारं तु सम्प्रवक्ष्यामि प्रासादानां समासतः ।
चतुष्षष्ठिपदं कुर्यात् देवतायतनं द्विज ॥ १४० ॥

द्वारन्तु द्विपदे मध्ये समं दिक्षु प्रशस्यते ।
आयामार्धेन शाखायाः द्वारविस्तार उच्यते ॥ १४१ ॥

उच्छ्रायाद्यस्तृतीयांशो नितम्बस्तत्समो भवेत् ।

(शाखास्थापनविधिः)

शाखायाः स्थापनं वक्ष्ये सर्वसम्पत्तिकारणम् ॥ १४२ ॥

---

१३५. b : S. प्रपं for व्रजं.
१३७. b : S. My. ऐशान्ये for ईशाने.
१३८. a : S. निचितं M. निरतं for जनितं.
c : V. सर्वस्मात् for स तस्मात्.

होमं तु पूर्ववत्कृत्वा गर्भन्यासविधौ यथा ।
मुहूर्ते शोभने प्राप्ते पौरुषं सूक्तमुच्चरन् ॥ १४३ ॥
स्थापयेद्द्वारशाखास्तु प्राङ्मुखो वाप्युदङ्मुखः ।
एवं मूर्धेष्टकायास्तु स्थापनं कीर्तितं मुने ॥ १४४ ॥

(द्वारदेवविवेकः)

प्रासादद्वारपार्श्वस्थौ प्रचण्डश्चण्ड उच्यते ।
जयश्च विजयश्चैव द्वास्थौ चैवार्धमण्डपे ॥ १४५ ॥
सम्प्रति द्वारपार्श्वस्थौ कुर्याद्द्वि पूर्णपुष्करौ ।
प्रथमावरणद्वारे आनन्दो नन्द एव च ॥ १४६ ॥
द्वितीयावरणद्वारे वीरसेनसुषेणकौ ।
तृतीयावरणद्वारे संभवः प्रभवस्तथा ॥ १४७ ॥

(उपद्वारदेवतानिर्देशः)

उपद्वारेषु सर्वेषु कुमुदाद्याः यथाक्रमम् ।

(द्वारदेवताबलिप्रक्षेपस्थानम्)

महापीठबलिक्षेपादेते तृप्ताः भवन्ति च ॥ १४८ ॥

(ग्रामादौ आलयाकारव्यवस्था)

ग्रामे वा नगरे वापि पत्तनादौ द्विजोत्तम ।
चतुरश्रं तु सर्वत्र चतुरश्रायतं तु वा ॥ १४९ ॥

---

१४४. a : S. My. A. शाखायाः for शाखास्तु.
१४५. d : S. A. चैवार्थ० My. वालाद्य for चैवार्ध०.
१४६. a : My. सुप्रति for सम्प्रति.
b : S. My. A. M. कुर्यात् पूर्णं च पुष्कलम्.
१४७. b : S. My. A. ०सेनं for ०सेन०.
१४९. a : A. पर्वते for नगरे.
b : S. My A. पत्तेने वा for पत्तनादौ.

वृत्तं वृत्तायतं वेश्म न ग्रामाद्यङ्गमाचरेत् ।
तत्रासन्निहितेष्वेषु तस्मिन्नायतनने भवेत् ॥ १५० ॥
एवमुत्सवयात्रां तु यथाभिमतमारभेत् ।

(ग्राममध्यादौ आलयमुखदिङ्निर्देशः)

ग्रामस्य मध्यमे वेश्म प्राक् प्रत्यङ्मुखमुच्यते ॥ १५१ ॥
पूर्वे प्रत्यङ्मुखे तद्वत् कोणेषु परिवर्जयेत् ।
पूर्वास्यं पश्चिमे कुर्यात् विमानं चतुरश्रकम् ॥ १५२ ॥
ग्रामस्य दक्षिणे वामे प्राक्प्रत्यङ्मुखमुच्यते ।

(पौराणिकालये लक्षणादिकरणे विशेषः)

पत्तने नगरे ग्रामे कल्पितं बहुशालया ॥ १५३ ॥
यावत् प्रथमकल्पे च अल्पं वा कारयेन्महत् ।
पौराणिके विमाने तु लक्षणं न समाचरेत् ॥ १५४ ॥
लक्षणं कर्तुमिच्छेद्यो न संसिद्धिमवाप्नुयात् ।
तत्रावरणभित्त्यादौ पीठे वा मण्डपेऽपि वा ॥ १५५ ॥
यथापूर्वं तु तत्रैव ज्ञेयं निर्लक्षणं च वा ।
यद्यन्यदेवतावेश्म तत्र स्याद्यत्र कुत्रचित् ॥ १५६ ॥

---

१५०. a : A. चैव for वेश्म.
d : S. My. A. तस्मिन् वायतने भवेत्.
१५१. b : S. A. तथा for यथा.
१५२. a ; b ; c ; d : S. My. A. M. om.
१५३. a ; b ; c ; d : S. My. A. M. om.
१५४. a ; b : S. My. A. M. om.
c ; d : V. om.
१५५. b : My. M. स for न.
१५६. c : S. यदस्य A. यदन्य for यद्यन्य.
d : A. My. अत्र for यत्र.

न दोषस्तत्र विज्ञेयो मुनिभिः कल्पितं यतः ।
यथापूर्ववशादेव तत्र सर्वं विधीयते ॥ १५७ ॥

सालमण्डपपीठाद्याः न विधेयाश्च नूतनाः ।
चिह्नान्यन्यानि सर्वाणि विमानादिषु यानि च ॥ १५८ ॥

तथैव देवरूपाणि विपरीतानि कुत्रचित् ।
तथा सर्वाणि तान्यत्र प्रयच्छन्ति शुभं सदा ॥ १५९ ॥

पौराणि कारयेत्तस्मात् न विपर्यासमाचरेत् ।
व्यामोहादाचरेत्तर्हि तत्कुलं तु विनश्यति ॥ १६० ॥

तत्प्राक्तनवशात्तत्र कुर्यात्तन्त्रविचक्षणः ।
एवं विमानं सर्वासां मूर्तीनां समुदाहृतम् ॥ १६१ ॥

(स्वतन्त्रपरिवाराणां विमानलक्षणम्)

यदा तु परिवाराणां स्वतन्त्राणां तु कुत्रचित् ।
कर्तुमिच्छेद्विमानं तु तत्र लक्षणमुच्यते ॥ १६२ ॥

वृत्तं वृत्तायतं चैव नैषां कुर्यात् तु पण्डितः ।
स्ववाहनाङ्कितं वापि स्वपरिवारसंयुतम् ॥ १६३ ॥

प्राक् प्रत्यगानतं चैतत् सर्वमन्यत् समं भवेत् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां प्रासाद-
लक्षणविधिर्नाम चतुर्दशोऽध्यायः

---

१५७. d : V. तत्रावलिमहोत्सवः.
१५८. d : A. विपलादिषु for विमानादिषु.
१५९. a : S. तत्रैव for तथैव.
c : V. ग्रामे वा नगरे वापि.
१६०. a : S. My. A. पौराणां for पौराणि.
d : V. समूलं A. तत्कालं for तत्कुलम्.
१६२. b : A. M. च for तु.
१६३. c : स० for स्व०.
१६४. a : S. आनतश्चै My. अनतश्चैवं for आनतं चैतत्.

# पञ्चदशोऽध्यायः

## [प्रतिष्ठाविधिनिरूपणाध्यायः]

(प्रतिष्ठाविधिप्रतिपादनार्थं नारदं प्रति गौतमकृताभ्यर्थना)

**गौतमः—**

मूर्तयो वासुदेवाद्याः विष्ण्वाद्याः मासपास्तथा ।
मत्स्यादयो दश प्रोक्ताः यास्तु तासां यथाक्रमम् ॥ १ ॥
प्रतिष्ठालक्षणं ब्रूहि सर्वत्र मुनिपुङ्गव ।

(प्रतिष्ठार्थं प्रशस्तकालः)

**नारदः—**

स्थापनं सम्प्रवक्ष्यामि क्रमेण मुनिसत्तम ॥ २ ॥
प्रथमा च द्वितीया च पञ्चमी च त्रयोदशी ।
दशमी पौर्णमासी च शुक्लपक्षे शुभाः स्मृताः ॥ ३ ॥
सोमो बृहस्पतिश्चैव भार्गवोऽथ बुधस्तथा ।
एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायागकर्मणि ॥ ४ ॥
त्रिषूत्तरेषु रेवत्यामश्विन्यां रोहिणीषु च ।
हस्ते पुनर्वसौ चापि पुष्ये च श्रवणे तथा ॥ ५ ॥

---

२. b : V. सत्तम for पुङ्गव.
   d : S. My. A. M. पुङ्गव for सत्तम.
३. d : V. त्विमाः for स्मृताः.
४. a : V. प्रोक्ताः for चैव.
   c : S. साम्य for सौम्य.
५. b : S. M. च या for ०षु च.
   c : S. My. V. ०सोश्चा० for ०सौ चा०

भरण्यां चैव नक्षत्रे विष्णोः स्थापनमुत्तमम् ।

(प्रतिष्ठायागशालायाः स्थानादिः)

प्रासादस्याग्रतः कुर्यात् मण्डपं सुपरिच्छदम् ॥ ६ ॥

त्रयोदशकरं रम्यम्

(मण्डपे वेदिकाविस्तारादिः)

अष्टहस्तां तु वेदिकाम् ।
एकहस्तोच्छ्रयां मध्ये कुर्याच्छोभासमन्विताम् ॥ ७ ॥

(चतुर्णामग्निकुण्डानां स्वरूपादिनिर्देशः)

सुसमां दिक्षु चत्वारि कुर्यात्कुण्डानि देशिकः ।
चतुष्कोणसमायुक्तं पूर्वकुण्डं सुलक्षणम् ॥ ८ ॥

दक्षिणे चार्धचन्द्रं तु वर्तुलं वारुणे यथा ।
पद्माकारं तथा सौम्ये कुर्यात्तन्त्रविचक्षणः ॥ ९ ॥

एकतालान्न च न्यूनम् एकहस्तान्न चाधिकम् ।
कुण्डानां लक्षणं प्रोक्तं देशस्यैवानुरूपतः ॥ १० ॥

(यागशालालङ्करणम्)

सर्वतश्चाम्रशाखाभिः निश्छिद्रं कारयेत् बहिः ।
वेष्टयेन्मण्डपस्तम्भान् वासोभिः रञ्जितैः शुभैः ॥ ११ ॥

---

६. d : S. तु for सु०.
७. a : S. My. M. N. त्रयोदशं रम्यमष्टा.
b : A. My. N. दश for अष्ट.
८. d : A. पूर्वे for पूर्व०.
९. a : S. V. ०नार्ध० for चार्ध०.
b : S. My. A. M. कुर्यात् for यथा.
c : S. My. A. M. N. पद्माकारं तथोत्तरम्.
११. a : S. My. M. आर्द्र० for आम्र०.
d : S. M. A. सदशैः नवैः for रञ्जितैः शुभैः

वितानमूर्ध्वतः कुर्यात् वासोभिरुज्वलैश्शुभैः ।

(यागशालातः नास्तिकादिनिष्कासनम्)

नास्तिकान् हीनमर्यादान् देवब्राह्मणदूषकान् ॥ १२ ॥
पाषण्डिनोऽन्यभक्तांश्च दीक्षासंस्कारवर्जितान् ।
वृत्तहीनान् विशेषेण ततो निर्वासयेद्बहिः ॥ १३ ॥

(यागशालायाः चतुर्दिक्तोरणादिनिर्देशः)

पताकाध्वजसम्पन्नं कृत्वा मण्डपमीदृशम् ।
तोरणानि चतुर्दिक्षु स्थापयेद्देशिकोत्तमः ॥ १४ ॥
सुशोभनं तु पूर्वस्याम् ऋग्वेदं चन्द्रदैवतम् ।
अश्वत्थतोरणं याम्यं याजुषं यमदैवतम् ॥ १५ ॥
औदुम्बरं सुभद्राख्यं तथा वारुणतोरणम् ।
नैयग्रोधं सुकर्माख्यं साम सोमाधिदैवतम् ॥ १६ ॥
सुगोत्नं नाम सौम्यं तु प्लाक्षमाथर्वणं भवेत् ।
सोमदैवत्यमेतानि क्रमात् संस्थाप्य देशिकः ॥ १७ ॥

(तोरणमानम्)

एकहस्तप्रविष्टानि चतुर्हस्तोच्छ्रयाणि च ।
पञ्चहस्तानि सर्वाणि पूजयेद्देशिकोत्तमः ॥ १८ ॥

---

१२. b : V. सदशैः N. रञ्जितैः for ०रुज्वलैः
c : S. My. A. भिन्न for हीन.
१५. a : My. पूर्वं स्यात् for पूर्वस्यां.
c : V. याम्यां for याम्यम्.
१६. c : S. सुधर्मा M. सुभाद्रा० for सुकर्मा०.
d : S. अर्थ for अधि.
१७. a : S. My. सुहोत्नं for सुगोत्नं.
c : V. सौम्य for सोम०
d : S. M. कामात् for क्रमात्.

(तोरणाभ्यन्तरस्थध्वजानां वर्णाः देवताश्च)

तोरणाभ्यन्तरे स्थाप्य ध्वजांश्चाष्टौ यथादिशम् ।
अरुणः कुमुदस्योक्तः पूर्वस्यां दिशि संस्थितः ॥ १९ ॥

कुमुदाक्षस्य चाग्न्याभः पुण्डरीकस्य चासितः ।
वामनस्य ध्वजः कार्यः स्फटिकाभस्तु नैर्ऋते ॥ २० ॥

शङ्कुकर्णस्य पीतः स्यात् सर्वनेत्रस्य चारुणः ।
शुक्लस्तु सुमुखस्योक्तः सर्ववर्णस्तु चाष्टमः ॥ २१ ॥

सुप्रतिष्ठस्य संप्रोक्तः सर्वांस्तानर्चयेत् क्रमात् ।
स्वनाम्ना कुमुदादींस्तु गन्धमाल्योपहारकैः ॥ २२ ॥

अनेककोटिसंख्यैस्तु भूतैः प्रत्येकशो वृतान् ।

(कलशस्थापनं पूजनप्रकारश्च)

गोमयेन सुशुद्धेन कृत्वा वै मण्डलं शुभम् ॥ २३ ॥

तोरणानां बहिः पार्श्वे चतुर्दिक्षु सपल्लवान् ।
संस्थाप्य पूर्णकलशान् पश्चादावाह्य पूजयेत् ॥ २४ ॥

इन्द्रादिलोकपालांस्तु गन्धादिभिरनुक्रमात् ।

'ओं इन्द्राय सुराधिपतये स्वाहा
सपरिवारप्रहरणाय नमः'।

'ओं यमाय प्रेताधिपतये स्वाहा
सपरिवारप्रहरणाय नमः'।

'ओं वरुणाय जलाधिपतये स्वाहा
सपरिवारप्रहरणाय नमः'।

---

२०. b : M. वा for चा०.
२३. a : S. सङ्ख्याः for सङ्ख्यैः.
b : S. My. A. M. N. ०शोभितान् for ०शो वृतान्.
२४. a : V. चैव for पार्श्वे.

'ओं सोमाय नक्षत्राधिपतये स्वाहा
सपरिवारप्रहरणाय नमः'।
एभिः मन्त्रैः समभ्यर्च्य पश्चाद्भूमिपरिग्रहम् ॥ २५ ॥

कृत्वा दीक्षाविधानेन विधायाग्निं तु वारुणे।
कुण्डे सन्तर्प्य विधिवत् हुत्वा पूर्णाहुतिं ततः ॥ २६ ॥

(शय्याकल्पनप्रकारः)

शयनं कल्पयेद्विद्वान् लिखित्वा मण्डलं शुभम्।
दक्षिणे वाथ पूर्वे वा वेदिकायां चतुष्करम् ॥ २७ ॥

विकीर्य सर्वधान्यांस्तु परितो'द्वादशा'त्मना।
कुशान् संस्तीर्य मध्ये तु सम्य'गष्टाक्षरे'ण तु ॥ २८ ॥

शय्यामुपरि विन्यस्य तूलपट्टांशुकावृताम्।
शिरोपधानसंयुक्तां सकपोलस्थलद्वयाम् ॥ २९ ॥

(शय्यायां देवतानामर्चनक्रमः)

'द्वादशाक्षर'मन्त्रेण पादगण्डूषशोभिताः।
विद्याधिपतयस्तत्र पूजनीयाः समन्ततः ॥ ३० ॥

विष्णुमैन्द्रे समभ्यर्च्य दक्षिणे मधुसूदनम्।
त्रिविक्रमं तु वारुण्यां वामनं तु तथोत्तरे ॥ ३१ ॥

---

२५. a : My. V. इन्द्रादीन् for इन्द्रादि०, V. च for तु.
अत्र निर्दिष्टेषु मन्त्रेषु V. सपरिवारायनमः for सपरिवार प्रहरणायनमः
c : V. एतैः for एभिः.
२६. a : V. चैव for दीक्षा०.
c : S. शुद्धे for कुण्डे.
d : S. पुण्या for पूर्णा०.
२८. d : V. वा for तु.
२९. b : S. कूट A. M. कूल for तूल.
d : S. M. तल० for स्थल०.
३०. b : A. S. V. गण्डूक for गण्डूष.

श्रीधरं च तथाग्नेय्यां हृषीकेशं तु नैर्ऋते ।
पद्मनाभं तु वायव्यां दामोदरमथेशके ॥ ३२ ॥
अर्चयेद्गन्धपुष्पैस्तु प्रत्येकं च स्वनामभिः ।

(स्नपनमण्डपस्य स्थानम्)

कुर्यान्मण्डपमन्यं तु ईशान्यां मण्डपस्य च ॥ ३३ ॥

(स्नपनवेदिकाकल्पनप्रकारः)

चतुः स्तम्भं तु तन्मध्ये चतुर्हस्तां तु वेदिकाम् ।
कृत्वा स्नपनपीठं तु तन्मध्ये कल्पयेद्बुधः ॥ ३४ ॥

(कलशेषु पल्लवादिप्रक्षेपद्रव्याणां विवरणम्)

अधिवास्य ततः कुम्भान् सिद्धौषधिसमन्वितान् ।
स्नानार्थं देवदेवस्य चतुरो निर्व्रणान् नवान् ॥ ३५ ॥
न्यग्रधोदुम्बराश्वत्थचम्पकाशोकपादपात् ।
पलाशप्लक्षवकुलकदम्बाम्रतरोस्तथा ॥ ३६ ॥
बिल्वार्जुनतरोश्चैव पल्लवान् द्वादशान् न्यसेत् ।
एकस्मिन् विन्यसेत् कुम्भे तथा पद्मकरोचनाम् ॥ ३७ ॥
दूर्वाङ्कुरं तथा दर्भम् अक्षतान् श्वेतसर्षपान् ।
सिताक्तचन्दनं चापि कुमुदं कुन्दमेव वा ॥ ३८ ॥
नन्द्यावर्तं निशैकं च द्रव्यमेतत्तथा परे ।
यवव्रीहितिलांश्चैव सुवर्णं रजतं तथा ॥ ३९ ॥

---

३२. a : V. तु for च.
d : S. तथापरे A. M. अथापरे for ०मथेशके.
३३. d : V. तु for च.
३४. d : V. कारयेत्सुधी: for कल्पयेद्बुधः.
३५. a : S. My. A. M. अधिवासनवत् for अधिवास्य ततः.

समुद्रगामिनीनद्याः कूलद्वयमृदं तथा ।
गोमयं भूमिसंस्पृष्टमेकस्मिन् सप्तविन्यसेत् ॥ ४० ॥

सहदेवीविष्णुक्रान्ताभृङ्गराजमहौषधीः ।
शमी शतावर्यमृता श्यामाकं चापरे न्यसेत् ॥ ४१ ॥

सोदकानि तथान्यस्मिन् फलान्यष्टौ क्षिपेद्घटे ।
पञ्चगव्यं तथान्यस्मिन् समन्त्रं स्थापयेद्घटे ॥ ४२ ॥

प्लक्षोदुम्बरमश्वत्थं न्यग्रोधं च पलाशजम् ।
कषायपञ्चकं स्थाप्यमन्यस्मिन् कलशे शुभे ॥ ४३ ॥

सहदेवी वचा चैव शतमूला शतावरी ।
कुमारी च गलूची च सिंहव्याघ्री तथैव च ॥ ४४ ॥

अन्यस्मिन् स्थापयेत्सर्वं मूलमौषधिमङ्गलम् ।
सप्त वल्मीकसम्भूतां मृदं संशोध्य चापरे ॥ ४५ ॥

(कलशेषु द्रव्यनिक्षेपादिमन्त्राः)

'सोमाय वनस्पत्यन्तर्गताय नमः'।
क्षिपेदनेन मन्त्रेण कुम्भेष्वेतान्निवेशयेत् ।
'हिरण्यवर्णां हरिणी'मित्युक्त्वा तत्स्पृशेत्क्रमात् ॥ ४६ ॥

---

४०. a : V. देवखाते तथा नद्याः.
४१. c : S. My. A. M. शतावर्यमृतां श्यामां.
४२. d : V. मन्त्रेण for समन्त्रं.
४३. a : V. शमी for प्लक्ष.
c : S. My. A. M. सार्धं for स्थाप्यं.
४४. b : V. ०मूली for मूला.
d : My. A. सिंही for सिंह०.
४५. c : S. M. सप्तवर्ग समुद्भूतां ; My. A. सप्तवक्रसमभान्तां०.
d : S. My. A. M. संसाध्य for संशोध्य ; S. My. M. वाचरेत् for चापरे.
४६. S. My. A. M. वनस्पतये for वनस्पत्यन्त०.

(कलशस्थापनक्रमः)

एकाशीतिपदेष्वन्यान् परान् गन्धोदकान्वितान् ।
संस्थाप्य मन्त्रयेद्विद्वान् मन्त्रेण 'द्वादशा'त्मना ॥ ४७ ॥

धान्यराशिषु संस्थाप्याः साधाराः सर्व एव तु ।
एवं संस्थाप्य विधिवत् कलशान् देशिकोत्तमः ॥ ४८ ॥

(स्नपनाङ्गहोमः)

आहुतीनां शतं हुत्वा 'द्वादशाक्षर'विद्यया ।
पूर्णाहुत्या च सन्तर्प्य ध्यायन् सर्वेश्वरं हृदि ॥ ४९ ॥

(प्रतिमास्थापनविवेकः)

प्रतिमामुपतिष्ठेत धान्यराशौ स्थितां शुभाम् ।
मूलार्चास्थापनेऽन्यत्र कर्मार्चामुभयेन तु ॥ ५० ॥

मृण्मयीं दारुजां वापि शैलजां वापि पूर्वतः ।
संस्कृत्य स्थापयित्वा तां भूषयित्वा तु वर्णकैः ॥ ५१ ॥

प्रतिष्ठां कर्तुकामोऽत्र कर्मार्चामेव सङ्ग्रहेत् ।
अथवा वर्णरहितां बहुबेरविधौ तथा ॥ ५२ ॥

शैलजां स्थापयेन्मन्त्री लोहजां वा विचक्षणः ।
उभे तदोपतिष्ठेत स्थापयेत् युगपच्च ते ॥ ५३ ॥

---

४९. c : S. My. A. तु for च.
५०. b : V. कारुशाला for धान्यराशौ.
c : S. मूलान्ता for मूलार्चा ; तत्र for ऽन्यत्र.
d : S. कर्मान्ता for कर्मार्चा.
५१. b : V. तु for ०पि.
५२. b : S. My. A. M. कर्मणामेव for कर्मार्चामेव.
d : A. ०विधानतः S. My. M. ०विधौ ततः for विधौ तथा.
५३. c : My. तथैव A. कदेव for तदोप०.

पृथग्वा स्थापयेत्तत्र कर्मार्चां पूर्ववत्क्रमात् ।

(लोहादिशयनबिम्बनिषेधादिः)

न लोहरत्नपाषाणैः शयनं कारयेत्सुधीः ॥ ५४ ॥
पश्चादेवं प्रतिष्ठाप्य शयने कर्मकौतुकम् ।

(शय्यास्थप्रतिमाविज्ञापनं कौतुकबन्धनक्रमश्च)

'नमस्तेऽर्चे सुरेशेश प्रतीके विश्वकर्मणः ॥ ५५ ॥
प्रभाविता शेषजगद्धात्रि तुभ्यं नमो नमः ।
त्वयि सम्पूजयामीशं नारायणमनामयम् ॥ ५६ ॥
रहिता द्रव्यदोषैस्तु ऋद्धियुक्ता सदा भव' ।
विज्ञाप्यैवं दुकूलांशुसिद्धार्थकयुतं शुभम् ॥ ५७ ॥
ऊर्णामयेन बध्नीयात् कौतुकं दक्षिणे करे ।
'अष्टाक्षरे'ण मन्त्रेण सप्तवाराभिमन्त्रितम् ॥ ५८ ॥

(स्नानवेदिं प्रति प्रतिमायाः आनयनम्)

ब्रह्मयानेन तां पश्चात् निनयेत्स्नानमण्डपम् ।
पठद्भिः 'शाकुनं सूक्तं' शनैः विप्रैः समावृतैः ॥ ५९ ॥

---

५४. b : S. My. A. सर्व for पूर्व०.
५५. b : S. V. शयनं for शयने.
c : S. My. A. M. सुरेशान for सुरेशेश.
d : A. M. प्रतिष्ठे My. प्रतीक्षे for प्रतीके.
५६. a : V. विश्व for शेष.
c : A. N. अधि० for त्वयि.
५७. a : A. My. शेष० for द्रव्य.
५९. d : S. My. N. सदाहितैः for समावृतैः.

भद्रासने समारोप्य 'भद्रं कर्णे'ति मन्त्रिताम् ।

(बिम्बसंस्कारः नेत्रोन्मीलनप्रकारश्च)

प्राङ्मुखां प्रतिमां तस्मिन् उत्तरस्यां यजेत्ततः ॥ ६० ॥

यत्वाहारक्षमा च्छाया ? स्थाल्ये न्यस्य तु केवलम् ।
प्रतिमां मन्त्रसंस्कुर्यात् छायां वा दर्पणान्विताम् ॥ ६१ ॥

आज्येन तु सुगन्धेन गव्येनाभ्यञ्जयेत्ततः ।
मसूरपिष्टेनोद्धुर्त्य तथा प्रक्षाल्य वारिणा ॥ ६२ ॥

मृदा वाम्लाकयालिप्य 'मूर्धानं दिव' इत्यृचा ।
'समुद्रजेष्ठ'मन्त्रेन मूलैश्चैवाष्टमङ्गलैः ॥ ६३ ॥

'या दिव्या' इति मन्त्रेण नेत्रे चोन्मीलयेत्क्रमात् ।
आज्यं तत्र समादाय माक्षिकेन समन्वितम् ॥ ६४ ॥

पात्रे तु तैजसे क्षिप्त्वा 'मधुवाते'ति मन्त्रितम् ।
'हिरण्यगर्भे'ति मन्त्रेण सौवर्णस्य शलाकया ॥ ६५ ॥

'चित्रं देवे'ति मन्त्रेण नेत्रे चोन्मीलयेत्ततः ।

(नेत्रोन्मीलनदक्षिणा)

उन्मीलयमाने नेत्रे तु धेनुर्वै दक्षिणाभवेत् ॥ ६६ ॥

---

६०. a : S. My. M. समावेश्य for समारोप्य.
b : A. मन्त्रतः for मन्त्रितां.
d : S. उत्तरास्ये for उत्तरस्यां ; V. मन्त्रराट् for यजेत्ततः.

६३. a : A. V. वल्मीकया for वाम्लाकया.
c : V. ०ज्योति for जेष्ठ०.
d : V. मूले for मूलैः.

६५. a : My. V. कृत्वा for क्षिप्त्वा.

(कलशाद्यैः स्नपनादिमन्त्रनिर्देशः)

स्नापयेत्कलशैः पश्चात् प्रथमोक्तैः क्रमात्ततः ।
'हंसश्शुची'ति मंत्रेण प्रथमेनाभिषेचयेत् ॥ ६७ ॥

'विष्णोरराट'मन्त्रेण द्वितीयेनाभिषेचयेत् ।
'सोमं राजानमि'ति च तृतीयेनाभिषेचयेत् ॥ ६८ ॥

'विश्वतश्चक्षुरि'ति च चतुर्थेनाभिषेचयेत् ।
'द्रुपदादी'ति मन्त्रेण कुर्याद्दुद्वर्तनं ततः ॥ ६९ ॥

शिरस्यामलकं दद्यात् 'मानस्तोक्या'भिमन्त्रितम् ।
मुरामांसीयुतं पश्चात् क्षालयेत् गन्धवारिणा ॥ ७० ॥

'विष्णोरराट'मन्त्रेण ततः शुद्धोदकैः शुभैः ।
'इदमापः प्रवहतः' इत्यृचा स्नापयेत्ततः ॥ ७१ ॥

(स्नापनानंतरं भगवदाराधनक्रमः)

ततश्चावाहयेद्देवं पीताम्बरधरं हरिम् ।
'एह्येहि भगवन् विष्णो लोकानुग्रहकारक ॥ ७२ ॥

यज्ञभागं गृहाणेमं वासुदेव नमो नमः' ।
'हिरण्मये'ति मन्त्रेण अर्घ्यं पाद्यं प्रदापयेत् ॥ ७३ ॥

गन्धं माल्यं पवित्रं च 'इदं विष्णु' इति ऋचा ।
'बृहस्पति'स्तु मन्त्रेण वासस्तु परिधापयेत् ॥ ७४ ॥

---

६७. a : इतः आरभ्य १२९. श्लो०. a : पर्यन्तं वर्तमानः पाठः My. कोषे नोपलभ्यते.
d : S. M. कुर्याद्दुद्वर्तनं ततः,
७१. b : S. A. M. घटैः for शुभैः.
७२. c : My. V. एह्येति for एह्येहि.
७३. d : S. A. M. अर्घ्यपात्रं for अर्घ्यं पाद्यं.
७४. c : V. बृहस्पतेति for बृहस्पतिस्तु.

'वेदाहमि'ति मन्त्रेण सोत्तरीयं तु कारयेत् ।
'विश्वतश्चक्षुरि'त्येवं कुर्यात् सकलनिष्कलम् ॥ ७५ ॥

'ओषधीश्चे'ति मंत्रेन पुष्पावकिरणं तथा ।
'धूरसी'ति च मन्त्रेण धूपं दद्यात् समाहितः ॥ ७६ ॥

'समिद्ध'इति मन्त्रेण अञ्जनं तु प्रदापयेत् ।
'येन केसे'ति मन्त्रेण रोचनां तु प्रदापयेत् ॥ ७७ ॥

ततः पुष्पाणि माल्याणि 'दीर्घायुत्वाय वर्चसे' ।
ततस्तु देवदेवेशम् एतैस्सामभिरग्रतः ॥ ७८ ॥

स्तुत्वा 'रथन्तरा'ख्येन 'वैराजे'न तथैव च ।
'सावित्रसाम्ना' पश्चात्तु स्तुवीत पुरुषोत्तमम् ॥ ७९ ॥

(बिम्बोत्थापनं शयनमण्डपे तस्यानयनं च)

'उत्तिष्ठे'ति समुत्थाप्य कृत्वा ब्रह्मरथं शुभम् ।
'पौरुषेण' तु सूक्तेन मण्डपं तु प्रवेशयेत् ॥ ८० ॥

'द्वादशाक्षर'मन्त्रेण शय्यायां तु प्रवेशयेत् ।
'विश्वतश्चक्षु'रित्येवं सकलीकृत्य शाययेत् ॥ ८१ ॥

(अर्चाभिमानिजीवसंयोजनं तस्य शोधनक्रमश्च)

'प्रणवे'न समायोज्य जीवमर्चाभिमानिनम् ।
उत्क्रम्यात्मैकतां कृत्वा स्वस्मिन् सर्वेश्वरे हरौ ॥ ८२ ॥

---

७७. a : V. N. समिद्धाजेति for समिद्ध इति.
७८. b : A. युक्तेन for युत्वाय.
c : M. N. ततः स्तुवीत देवेशम्.
८०. b : S. शिवं for शुभम्.
d : S. सम् for तु.
८२. c : V. उत्कृत्य for उत्क्रम्या०.
d. V. यस्मिन् for स्वस्मिन्.

संशोष्य मरुता पृथ्वीं दग्ध्वा बीजान्विताग्निना ।
अद्भिः संप्लाव्य तां वायुशुष्कां वह्नौ विलाप्य तु ॥ ८३ ॥

संहृत्य वायुना वह्निं वायुमाकाशतां नयेत् ।
आध्यात्मिकाधिदैवैस्तु करणैः विषयैः सह ॥ ८४ ॥

तत्त्वानि संस्थितान्येवं क्रमात् संहृत्य देशिकः ।
नभो मनसि संहृत्य मनसोऽहंकृतिं पुनः ॥ ८५ ॥

महत्यात्मनि तत्त्वानि नयेदव्याकृतैकताम् ।

(भगवति तत्त्वानां ध्यानम्)

शान्तेऽनन्ते परेव्योम्नि निष्क्रिये ज्ञानविग्रहे ॥ ८६ ॥

तं ध्यायेत्परमानन्दे संस्थितं शान्तविग्रहम् ।
यस्मिन्नव्याकृतं लीनं यत्संस्थं यत्स्वरूपकम् ॥ ८७ ॥

परस्य ब्रह्मणः शक्तिं विदुस्तत् परमेष्ठिनम् ।
स वासुदेवो विज्ञेयः सर्वात्मा सर्ववित्प्रभुः ॥ ८८ ॥

परापरविकल्पैकस्वरूपो ज्ञानहेतुकः ।

(भगवतः पञ्चशक्तिवर्णनम्)

तां स्वामव्याकृतिं मायामधिष्ठाय सिसृक्षया ॥ ८९ ॥

---

८३. b : V. बीजानि चाग्निना.
d : V. ०ते for तु.
८४. d : A. M. N. कारणैः for करणैः.
८५. b : S. M. N. शोधकः for देशिकः.
d : A. ततो for मनसो.
८६. b : S. अध्यात्मने रताम्, A. N. नयेदध्यात्मनैकतां.
d : S. M. विक्रिये for विग्रहे.
८७. a : S. आत्मानं for आनन्दे.
८८. b : A. बिन्दुः for विदुः.
c : V. वासुदेवः सुविज्ञेयः.
d : A. My. S. ०कृत्० for ०वित्.
८९. c : S. A. M. ०पिनीं for ०कृतिं.

नादात्मा जनयन् मूर्तिं पौरुषीं स्पर्शसंज्ञिताम् ।
सङ्कर्षणः स विज्ञेयः पुरुषश्चेति कथ्यते ॥ ९० ॥

पुरुषस्याकृतिं मायां क्षोभयित्वा जगत्पतिः ।
विश्वतेजोमयं रूपं प्रद्युम्नमसृजत्प्रभुः ॥ ९१ ॥

पुनस्तेजोमयीं तासां प्रकृतिं प्रविलोड्य तु ।
विश्वाह्लादकरैः शान्तैः रसमात्राभिरीश्वरः ॥ ९२ ॥

निवृत्तिसंज्ञामपरामकरोत्तामसीं तनुम् ।
विदुस्तमनिरुद्धाख्यं जलोदरशयं हरिम् ॥ ९३ ॥

पुनरव्याकृतिं मायां विक्षोभ्य जगतीश्वरः ।
गन्धतन्मात्रकं देवं सर्वात्मानं प्रजापतिम् ॥ ९४ ॥

पञ्चैताः शक्तयः प्रोक्ताः परस्य परमात्मनः ।
अशेषजगदाधाराः पदे दिव्ये व्यवस्थिताः ॥ ९५ ॥

(आध्यात्मिकादिभेदकारणम्)

आध्यात्मिकाधिभूताधिदैवभेदस्य कारणम् ।
पञ्चतन्मात्रतत्त्वेन कीर्तिताः वेदवादिभिः ॥ ९६ ॥

---

९०. a : A. M. N. जनयेत् for जनयन्.
b : V. वासुदेवस्य संज्ञकम्.
९१. a : S. A. M. N. न पुरा वाकृतिर्मायां.
९२. b : S. M. प्रतिबोध्य N. प्रविबोध्य for प्रविलोड्य.
९३. a : S A. M. N. त्रिवृत्ति० for निवृत्ति०.
९४. c : A. M. N. मात्रात्मकं for तन्मात्रकं.
९५. c : A. M. N. ०धारे for ०धाराः
९६. c : V. शब्देन for तत्त्वेन.
d : V. देव for वेद०.

(ब्रह्माण्डसृष्टिक्रमः)

स हि सर्वात्मको ब्रह्म सिसृक्षुः सकलं जगत् ।
सृष्ट्याधारमपूर्वं तु तदन्तमकरोत्प्रभुः ॥ ९७ ॥

ताभिस्तन्मात्रभूताभिरद्भिरण्डमथासृजत् ।
तदण्डं पञ्चभूतानां भूतं शुद्धं हिरण्मयम् ॥ ९८ ॥

तत्र सङ्क्रमते जीवः शक्तिरात्मनि संहता ।
तन्मात्रपञ्चकाधारा संहताशेषवृत्तिका ॥ ९९ ॥

जीवेनाधिष्ठितः प्राणो लब्धसत्तस्तदा भवेत् ।
स व्याप्यकृतसंज्ञस्तु प्राणोऽध्यात्मिक उच्यते ॥ १०० ॥

गुणत्रयमयी बुद्धिः जायते तोषवृत्तिकी ।
अहंकारस्ततस्तस्मात् कर्तृशक्तिश्च जायते ॥ १०१ ॥

शब्दाद्यर्थमयी वृत्तिः मनसस्तदनन्तरम् ।
सङ्कल्पादिमयास्तस्मादर्थाः पश्चाद्विजज्ञिरे ॥ १०२ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्ध इतीरिताः ।
तैर्ज्ञानकर्तृशक्तीनि खाद्यारब्धान्यतः परम् ॥ १०३ ॥

---

९७. b : V. विविधं for सकलं.
c : S. M. A. N. सृष्ट्या साधारणं पूर्वं.
d : A. M. N. V. तदाज्ञां for तदन्तम्.
९८. b : S. M. N. एभिः for अद्भिः.
c : S. M A. N. भूतात्मा for भूतानाम्.
९९. b : S. M. N. संहृताः for संहताः.
d : A. V. M. N. संहृता for संहता०.
१००. b : S. मन्तः M. वृत्तिः for ०सत्तः ; V. जलसंज्ञः तथा भवेत्.
d : S. शान्तिक for ०ध्यात्मिक.
१०१. a : S. A. M. N. तत्त्व for त्रय०.
b : V. तोष्ट० for तोष०.

श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं ज्ञानार्थमिन्द्रियम् ।
वाक् पाणिपादौ पायुश्च तथोपस्थं च पञ्चमम् ॥ १०४ ॥

एतानि कर्मसंज्ञानि पञ्चभूतान्यतः परम् ।
पृथिव्यापश्च तेजश्च वायुराकाशमेव च ॥ १०५ ॥

एभिः स्थूलशरीरं तु सर्वाधारः प्रजायते ।

(मूर्तिमन्त्रवर्णनम् तेषां न्यासक्रमादिनिर्देशश्च)

एतेषां वाचकाः मन्त्राः लिख्यन्तेऽतः परं क्रमात् ॥ १०६ ॥

मकारं जीवभूतं तु शरीरे व्यापकं न्यसेत् ।
भकारं प्राणभूतं तु जीवोपाधिं तथा न्यसेत् ॥ १०७ ॥

बकारं हृदयावासं बुद्धितत्त्वं स्मरेद्बुधः ।
अहंकारं फकारं तु न्यसेत्तत्रैव बुद्धिमान् ॥ १०८ ॥

तत्रैव च पुनस्तत्त्वं सङ्कल्पाद्यात्मकं न्यसेत् ।
नकारं शब्दतन्मात्रं मस्तके सन्निवेशयेत् ॥ १०९ ॥

धं वक्त्रे स्पर्शतन्मात्रं दं रूपं हृदि विन्यसेत् ।
थं वक्त्रे रसतन्मात्रं तं घ्राणे गन्धमात्रकम् ॥ ११० ॥

श्रोत्राद्युपस्थपर्यन्तं णादिचान्तं न्यसेत् क्रमात् ।
विन्यस्य पञ्चभिः शेषैः स्थूलदेहं प्रकल्पयेत् ॥ १११ ॥

ककारं पृथिवी तत्त्वं पादयोः संस्थितं न्यसेत् ।
ऊरौ तु खं न्यसेत्तेजो हृदि गं विन्यसेत्ततः ॥ ११२ ॥

---

१०७. c : V. तत्त्वं for ०भूतं.
१०८. b : S. बुध स्मरेत् for स्मरेद्बुधः.
११०. c : S. वस्रो for वक्त्रे;
११२. c : S. A. M. N. वस्तौ for ऊरौ.

घं पायौ नासिकासंस्थं न्यसेदथ हस्तके तले।
हृत्पुण्डरीके शं विद्यात् हं सूर्यद्वादशात्मकम् ॥ ११३ ॥

(वह्निमण्डलबिन्दुध्यानक्रमः)

द्विसप्तति सहस्राणि व्याप्य नाडी व्यवस्थिता।
कलाषोडशकं सोमं तन्मध्ये संविचिन्तयेत् ॥ ११४ ॥

तन्मध्ये चिन्तयेद्दीप्तं बिन्दुं वै वह्निमण्डलम्।

(मूर्तिपञ्चशक्तियोजनक्रमः)

जीवं तमीशभावस्थं योजयेत्परमेष्ठिना ॥ ११५ ॥

षां बीजेन ततो ध्यायेत् पौरुषं भावमाश्रितम्।
यां बीजेन ततो विश्वं भावस्थं सर्वसाक्षिणम् ॥ ११६ ॥

ध्यायेद्रामिति बीजेन सर्वज्ञं विश्वतोमुखम्।
अनुग्रहकरं भावं सविसर्गेण येन तु ॥ ११७ ॥

ध्यायेन्निवृत्तिसंज्ञं तु शान्तं शान्तेन चेतसा।
सर्वसंहृतिकर्तारं सर्वात्मानं पुनः स्मरेत् ॥ ११८ ॥

लां बीजेन ततः पश्चात् सर्वसंहृतिकारणम्।
कर्तारं च विकर्तारं सर्वाधारं विचिन्तयेत् ॥ ११९ ॥

---

११३. a : S. A. M. N. यं वायौ for घं पायौ.
b : V. न्यसेत्सदं मस्तके मुखम्.
११४. d : S. A. M. N. तु for सं०.
११६. c : S. M. याचितेन for यां बीजेन.
११७. S. A. M. N. om.
११८. S. A. M. N. om.
११९. a : S. A. M. N चिन्तयेत्कोपतत्त्वज्ञः.
b : S. A. M. N. संयम for ०संहृति०.

(परमेष्ठ्यादिपञ्चशक्तिविवरणम्)

शक्तयः प्रथिताः पञ्च परमेष्ठ्यादयस्त्विमाः ॥
नासंहताः शक्नुवन्ति प्रकाशयितुमञ्जसा ॥ १२० ॥

ऐश्वर्यं जगतां हेतोः परस्य परमात्मनः ।
चिच्छक्तिः सर्वकार्याणाम् अवकाशकरी परा ॥ १२१ ॥

परमेष्ठीति विख्याता कूटस्थाकाशवत्स्थिता ।
द्वितीया पुरुषाख्या तु विक्रियाख्या जगन्मयी ॥ १२२ ॥

तथा च छिद्यमानस्तु परमात्मा निरञ्जनः ।
विश्वात्मा विविधो भावो जायते कारणात्मकः ॥ १२३ ॥

सा पुनर्विषयाकारं प्राप्य तत्रावतिष्ठते ।
निवृत्तिशक्तिः सा प्रोक्ता व्यज्यते तदनन्तरम् ॥ १२४ ॥

कर्ता च करणं कर्म क्रियाकारकतत्फलम् ।
तेन सर्वात्मिका प्रोक्ता शक्तिः सा परमात्मनः ॥ १२५ ॥

ताः एताः संहताः पञ्च शक्तय. सर्वहेतवः ।
एताभिः शक्तिभिर्युक्तः परमात्मा सनातनः ॥ १२६ ॥

---

१२०. c : V. नासंगमाः शक्ति पङ्क्तः.
d : S. प्रसाद for प्रकाश०.

१२२. c : S. ०ता for तु.

१२३. a : S. M. N. सतया for तथा च.
c : V. विविधानासो for विविधो भावो.
d : A. My. N. कारणात्मनः for करणात्मकः.

१२४. b : S. M. A. N. प्राचीनाभ्युपतिष्ठते.
c : S. My. A. M. गोविन्द for निवृत्ति०.

१२५. d : M. शक्तिस्था for शक्तिः सा.

१२६. c : My. A. M. N. पञ्चभिः for शक्तिभिः.

उत्पत्तिस्थितिसंहारहेतुः स्यादक्रियोऽपि सन् ।
निग्रहानुग्रहं चापि करोति जगतः प्रभुः ॥ १२७ ॥

मन्त्रात्मिकी भवेन्मूर्तिः उपाधिः शक्तयः स्मृताः ।
एवं सूक्ष्मतनुं विष्णुं नानाद्वारं सुरेश्वरम् ॥ १२८ ॥

वाच्यवाचकसंबन्धविभक्ताशेषमण्डलम् ।
व्याप्य सम्यगमी हस्तसंस्थितं ज्ञानशक्तिभिः ॥ १२९ ॥

ध्यात्वा तु मन्त्रमूर्तिं तु कल्पयेद्देशिकोत्तमः ।
अङ्गप्रत्यङ्गभेदेन पूर्वोद्दिष्टेन वर्त्मना ॥ १३० ॥

(मण्डले भगवदाराधनक्रमः)

ततो गन्धैश्च पुष्पैश्च निवेद्यैर्विविधैरपि ॥ १३१ ॥

अलङ्कारैश्च विविधैरर्चयेत्तं सुभावितः ।
प्रभूतैर्याज्ञिकैर्मेध्यैस्ततश्चक्राब्जमण्डले ॥ १३२ ॥

यजेत विधिना विद्वान् साङ्गं देवमधोक्षजम् ।
[आसनं पूर्ववद्ध्यात्वा सगात्रं सपरिच्छम् ।]

(अध्वहोमविधानम्)

अध्वहोमं ततः कुर्यात् यथा दीक्षाधिवासने ॥ १३३ ॥

प्राक्कुण्डे चतुरश्रे तु देशिकः पूर्वसङ्ख्यया ।

(मूर्तिशान्त्युदकसेचनम्)

ताः शान्त्युदकं सिंचेत् प्रतिमामूर्ध्नि साधकः ॥ १३४ ॥

---

१२७. b : S. My. A. M. N. हि सः for ऽपि सन्.
१२८. a : इतः आरभ्य श्लो० १३०. b : पर्यन्तं स्थितः पाठः S. My. A. M. N. कोषेषु om.
१३३. a : A. विधिवत् for विधिना.
१३४. a : S. My. A. M. N. प्रागुक्ते for प्राक्कुण्डे.

(यागशालायां कुण्डेषु होमक्रमः)

कुण्डेषु पावकं स्थाप्य प्रणये'द्वादशात्मना'।
ततो'वेदादि'भिर्मन्त्रैः मूर्तिपाः मूर्तिविग्रहाः ॥ १३५ ॥

शतं सहस्रं वा शक्त्या जुहुयुः समिधः क्रमात्।
शान्तिहोमं ततः कुर्यात् आचार्यः सुसमाहितः ॥ १३६ ॥

घृतेन दध्ना पयसा मधुना च यथाक्रमम्।
पूर्वं पादं घृतं हुत्वा दधिनाभ्यन्तरं स्पृशेत् ॥ १३७ ॥

क्षीरं हुत्वा तु हृदयं मूर्धानं मधु संस्पृशेत्।
सह सर्वं ततो हुत्वा सर्वगात्रं तु संस्पृशेत् ॥ १३८ ॥

पलाशशाखया प्राच्यां सिञ्चेत्तन्मूर्ध्नि साधकः।
दक्षिणस्यां ततः सिञ्चेत् खदिरस्य तु शाखया ॥ १३९ ॥

औदुम्बरस्य चोदीच्यां प्रतीच्यां बिल्वशाखया।

(देवाय चरुनिवेदनक्रमः दिक्पालानां बल्याहरणञ्च)

चतस्रो धेनवः स्थाप्याः दक्षिणद्वारदेशतः ॥ १४० ॥

उत्तराभिमुखास्तत्र रज्जुबद्धाः पृथक् पृथक्।
गङ्गा च यमुना चैव तथा गोदा सरस्वती ॥ १४१ ॥

तासु गोषु दुहेत् क्षीरं चरुं च श्रपयेत्ततः।
निवेद्य देवदेवाय दिक्पालानां बलिं हरेत् ॥ १४२ ॥

(ब्राह्मणादिसम्मानक्रमः)

ब्राह्मणान् भोजयेत्तत्र भक्तान् द्वादश पायसम्।
मण्डपस्योत्तरे पार्श्वे हिरण्यं दक्षिणा भवेत् ॥ १४३ ॥

---

१३५. b : S. वारेण My. A. प्रणवेन M. N. तारेण for प्रणयेत्.
१३७. c : V. स्पृशेत् for पूर्वं.
१३८. a ; b : S. My. A. M. N. om.
१४१. d : V. गोदा चैव A. गोदावरी for तथा गोदा.
१४३. b : My. भक्तं V. हविः for भक्तान्.
c : S. My. A. M. N. ब्राह्मणस्य for मण्डपस्य.

नृत्तगेयैस्तथा वाद्यैः स्तोत्रैः मन्त्रैस्तु पावनैः ।
पुराणैर्वैष्णवैश्चैव वेदाध्ययनपूर्वकैः ॥ १४४ ॥
जयशब्दादिनादैश्च क्ष्वेलितास्फोटितैरपि ।

(स्थण्डिलकल्पनक्रमः तत्र होमविधिश्च)

होमार्थं वालुकाभिस्तु प्रासादस्य समन्ततः ॥ १४५ ॥
वितस्तित्रयविस्तारान् स्थण्डिलान् कारयेत् पृथक् ।
दिक्षु चाष्टासु कृत्वैवमष्टौ तु कलशान् न्यसेत् ॥ १४६ ॥
सपुष्पपल्लवान् पार्श्वे वैष्णवानभिमन्त्रितान् ।
'अष्टाक्षरे'ण मन्त्रेण पूर्वादिक्रमयोगतः ॥ १४७ ॥
प्रणीय संस्कृतं वह्निं 'मूल'मन्त्रेण देशिकः ।
समिधो जुहुयात् ब्राह्मे सहस्रं शतमेव वा ॥ १४८ ॥

(विष्णुगायत्रीस्वरूपम्)

'ओं नमो नारायणाय विद्महे वासुदेवाय धीमहि
तन्नो विष्णुः प्रचोदयात्' ।
अनया 'विष्णुगायत्र्या' सर्पिषाष्टोत्तरं शतम् ।
हुत्वा तु शक्तितो विद्वान् शान्तितोयं समाहरेत् ॥ १४९ ॥
वैष्णवे ताम्रपात्रे तु सर्वकुंभोपसंभृतम् ।
शतवारं तु 'मूले'न मन्त्रयित्वा तु देशिकः ॥ १५० ॥

---

१४५. b : My. स्फोटनैः A. स्फोरितैः for स्फोटितैः.
१४६. a : S. My. A. M. N. दीर्घ for त्रय.
c : S. My. A. N. तत्र for कृत्वा.
१४८. a : S. A. M. N. संस्तुतं for संस्कृतं.
c : S. My. A. M. N. समीपे for समिधः.
१५०. a : My. तत्र for ताम्र०.
b : S. A. M. N. तीर्थ My. पात्र for कुंभ०.
c : V. सहस्रधारं for तु मूलेन.

सिञ्चेन्मूर्ध्नि तथार्चायाः सर्वतीर्थमयं जलम् ।
वासोभिर्वेष्टयित्वार्चां रक्षां कृत्वा विधानतः ॥ १५१ ॥

(पिण्डिकाधिवासनादिक्रमः)

तस्मिन्नेव तु काले तु पिण्डिकां चाधिवासयेत् ।
एवं कृत्वाधिवासं तु त्रिरात्रं वैकरात्रकम् ॥ १५२ ॥

तथैव स्वप्नमाकाङ्क्षेत् यथा दीक्षाविधौ गुरुः ।
अशुभे शान्तिकं होमं पूर्ववच्च समाचरेत् ॥ १५३ ॥

प्रभातायां तु सर्वर्यां स्तुत्वा जप्त्वा यथाविधि ।
प्रविश्य गर्भागारं तु 'मूल'मन्त्रेण मन्त्रवित् ॥ १५४ ॥

सशलाकैः ततो दर्भैः सहदेवीविमिश्रितैः ।
मार्जनं सर्वतः कुर्यात् प्राङ्मुखो वाप्युदङ्मुखः ॥ १५५ ॥

पञ्चगव्येन संप्रोक्ष्य 'द्वादशाक्षर'विद्यया ।

(गर्भागारे ब्राह्मादिपदकल्पनप्रकारः)

गर्भागारं तु विभजेत् सप्तसप्तविभागतः ॥ १५६ ॥

ब्राह्मदैवमनुष्याणां पिशाचानां पदानि तु ।
मध्यादारभ्य यत्नेन क्रमाज्ज्ञेयानि देशिकैः ॥ १५७ ॥

(ब्राह्मे पदे पिण्डिकास्थापनावसरः)

ब्राह्मे तु पिण्डिका स्थाप्या स्थावरार्चा यदा भवेत् ।

(दैवमानुषपदयोः मध्ये पिण्डिकास्थापनावसरः)

अस्थावरविधाने तु दैवमानुषमध्यमे ॥ १५८ ॥

---

१५२. d : V. च for वा.
१५४. b : V. N. स्नात्वा for स्तुत्वा.
१५५. b : S. My. A. M. गर्भं दधि for सहदेवी.
१५८. a : S. My. A. पिशिता for पिण्डिका.
b : S. यथा for यदा.

(पिण्डिकास्थापने रत्नविन्यासक्रमः)

उभयोः रत्नविन्यासं नपुंसकशिलोपरि ।
गर्तास्तु निम्नावरणं कर्तव्यास्तु विचक्षणैः ॥ १५९ ॥

आहुतीनां शतं हुत्वा 'गायत्र्या'विष्णुसंज्ञया ।
तयाभिमन्त्र्य रत्नानि गर्तेषु विनियोजयेत् ॥ १६० ॥

यवान् व्रीहींश्च निष्पावान् प्रियङ्गुतिलमाषकान् ।
नीवारांश्च महाशालीन् विन्यसेदष्टदिक्षु च ॥ १६१ ॥

ऐन्द्रादीशानपर्यन्तं मध्ये सिद्धार्थकं न्यसेत् ।
रत्नमैन्द्रदिशि न्यस्य आग्नेय्यां मौक्तिकं भवेत् ॥ १६२ ॥

वैडूर्यं च तथा याम्यां नैर्ऋत्यां शङ्खमेव च ।
स्फटिकं पश्चिमायां तु वायव्यां पुष्टिकं भवेत् ॥ १६३ ॥

चन्द्रकान्तं तथोदीच्यामैशान्यामिन्द्रनीलकम् ।
मध्ये च पद्मरागं च यथावद्विनिवेशयेत् ॥ १६४ ॥

मनःशिलाहरीतालमञ्जनं श्यामसीसकम् ।
सौराष्ट्रं रोचनं चैव गैरिकं चाष्टदिक्षु वै ॥ १६५ ॥

पारदं मध्यमे न्यस्य यथावदनुपूर्वशः ।
हिरण्यं रजतं ताम्रमायसं त्रपु कांस्यकम् ॥ १६६ ॥

सौवर्णं कूर्मरूपं च सुवर्णं शङ्खमेव च ।
दिक्षु सर्वासु विन्यस्य ब्रह्मस्थाने हिरण्यकम् ॥ १६७ ॥

---

१६१. c : V. तथा for महा॰.
१६२. c : V. वज्रम् for रत्नम् ; S. My. M. ऐन्द्रयां for ऐन्द्र॰.
१६४. a : My. M. N. अथ for तथा.
c : V. तु for च.
१६५. c : S. पौरुष for सौराष्ट्रं.
१६७. b : S. My. A. M. N. दुर्वर्णं for सुवर्णं.
d : V. ॰मयम् for ॰यकम्.

संस्पृशेत् 'विष्णुगायत्र्या' तांस्तु सर्वान् प्रदक्षिणम् ।

(बीजादिप्रतिनिधिनिरूपणम्)

अलाभे सर्वबीजानां शालिबीजं प्रशस्यते ॥ १६८ ॥

रत्नानामप्यलाभे तु शस्तं मुक्ताफलं भवेत् ।
धातूनामप्यलाभे तु हरितालं विशिष्यते ॥ १६९ ॥

लोहानामप्यलाभे तु सुवर्णं शस्यते परम् ।
पुण्याहं वाचयेत्तत्र वैष्णवैः सह मन्त्रवित् ॥ १७० ॥

रत्नन्यासं ततः कुर्यात् नपुंसकशिलोपरि ।

(रत्नन्यासकर्तव्याकर्तव्यविवेकः)

रत्नन्यासं तु कुर्वीत पिण्डे लोहमये द्विज ॥ १७१ ॥

तथा रत्नमये बिम्बे न कुर्याच्च विचक्षणः ।

(पादशिलास्थापनादिनिर्देशः)

ततः पादशिलां न्यस्य विविधाङ्गपरीक्षिताम् ॥ १७२ ॥

उपरि प्रतिमा कार्या प्रासादस्य प्रमाणतः ।

(विमाने पञ्चविंशतितत्त्वचिन्तनक्रमः)

तत्रापि तत्त्वविन्यासं वक्ष्यामि शृणु तत्त्वतः ॥ १७३ ॥

शिला ध्यातास्य पृथिवी स्नानवेद्याप उच्यते ।
तेजो रविकराः ज्ञेयाः जालान्तर्गताः मुने ॥ १७४ ॥

---

१६८. b : My. A. M. N. गर्तान् for सर्वान्.
c : V. अभावे for अलाभे.
१६९. b : S. शुक्तिः for शस्तं.
१७१. a : M. तु कुर्वीत् for ततः कुर्यात्.
१७२. a : My. A. N. व्यक्त० for रत्न०.
d : V. स्त्रीलिङ्गेन for विविधाङ्ग०.

गवाक्षस्तु समीरस्स्यात् गगनं गगनं स्मृतम् ।
प्राग्द्वारमुच्यते तस्य कवाटौ कीर्तितौ करौ ॥ १७५ ॥

पादाः पादास्तु विज्ञेयाः पायुः स्याज्जलनिर्गमः ।
योनिराणि समाख्याता विमानस्याग्रतो मुने ॥ १७६ ॥

श्रोत्रे कपोतपाली तु त्वक् सुधा परिकीर्तिता ।
नेत्रे शिखरपार्श्वे तु जिह्वा ज्ञेया च वेदिका ॥ १७७ ॥

घ्राणं नासा समाख्याता गीर्वाणनिकरान्विता ।
श्यामकृष्णौ तथा पीतं रक्तश्वेतौ यथाक्रमम् ॥ १७८ ॥

गन्धमाल्यादिकाः पञ्च वर्णास्तु परिकीर्तिताः ।
मनो दीपस्तु विज्ञेयः पिण्डिका बुद्धिरुच्यते ॥ १७९ ॥

पादाधारो विमानस्तु प्रकृतिः पिण्डिकान्तरम् ।
पञ्चविंशतिको ज्ञेयः प्रतिमा पुरुषः परः ॥ १८० ॥

विज्ञेया दण्डकूर्चास्तु केशरोमाणि सर्वतः ।
विमानमेवं सङ्कल्प्य सर्वतत्त्वसमन्वितम् ॥ १८१ ॥

(बिम्बप्रतिष्ठापनक्रमः)

गन्धाद्यैर्धूपपर्यन्तैः 'मूल'मन्त्रेण पूजयेत् ।
शश्वद्द्विधावप्येकं तु ध्यात्वा सम्पूजयेत्सुधीः ॥ १८२ ॥

वासोभिर्वेष्टयेच्छुद्धैरहतैः तत् समन्ततः ।
मुहूर्ते शोभने प्राप्ते वैष्णवानामनुज्ञया ॥ १८३ ॥

---

१७५. a : S. M. N. गवाक्षस्तस्य वायुः.
c : My. A. नव for प्राग्द्वा०, V. A. ०स्यैव for तस्य.
१७६. c : V. ०माणि for ०राणि.
१७७. b : S. My. A. M. वसुधा समुदाहृता.
१७८. a : S. नास्यः My. A. M. N. नास्या for नासा.
१८०. a : S. N. पादघ्यारोभिमानस्तु ; V. M पादाधारोऽभिमानस्तु.
१८२. c : V. शश्वद्विधायाप्येवं तु.

' उत्तिष्ठ ब्रह्मणस्पते ' इत्युक्त्वोत्थापयेत् प्रभुम् ।
' अतो देवा अवन्तु न ' इति सूक्तं समुच्चरन् ॥ १८४ ॥

प्रवेशयेत् प्रयत्नेन प्रासादं देशिकोत्तोमः ।
' त्रैलोक्य विकाराय विक्रमाय नमो नमः ' ॥ १८५ ॥

पिण्डिकायां तु संस्थाप्य स्थिरी कुर्यादनेन तु ।
' ध्रुवाद्यौरि'तिमन्त्रेण प्रयत्नाद्देशिकोत्तमः ॥ १८६ ॥

पठेच्चैवाग्रतः पश्चा'द्विश्वतश्चक्षु'रित्यपि ।
विग्रहं कारयेत्तत्र ' परमेष्ठ्या'दिभिः क्रमात् ॥ १८७ ॥

(बिम्बसजीवकरणप्रकारः)

सजीवकरणं कुर्यात् ' मूल'मन्त्रेण मन्त्रवित् ।
नाभेरधस्तादुत्थाप्य करणैश्च समन्वितम् ॥ १८८ ॥

तन्मात्रदेहं प्राणैश्च पञ्चभिर्व्याप्तविग्रहम् ।
ऐश्वर्यधर्मज्ञानैश्च वैराग्येण समन्वितम् ॥ १८९ ॥

स्फुरद्रश्मिप्रकाशेन व्याप्तशेषदिगन्तरम् ।
दिवाकरसहस्राभं विद्युत्संघातसप्रभम् ॥ १९० ॥

वामनास्या निर्गमय्य स्वदेहात्तु विचक्षणः ।
ब्रह्मरन्ध्रेण तद्देहं प्रविशन्तं विचिन्तयेत् ॥ १९१ ॥

---

१८४. b : A. My. S. इत्युक्त्वा स्थापयेत्प्रभुम्.
१८७. a : S. N. अवभृतः for अग्रतः.
१८८. c : S. My A. M. N. कर्तव्यं for उत्थाप्य.
१८९. b : S. My. A. M. N. चाप्त for व्याप्त.
१९१. a : My. नाड्या for ०नास्या ; V. विनिगत्य for निर्गमय्य.
b : A. M. देहः for देहात्.
c : S. My. A. तं देवं for तद्देहं.

किञ्चित् स्थित्वा ललाटेऽस्य कर्णिकाद्वारमानयेत् ।
शीर्षण्या मस्तके प्राणान् तत्रस्थापि नियोजयेत् ॥ १९२ ॥

चक्षुः श्रोत्रं नासिका च रसनं त्वचमेव च ।
पिण्डिकाद्वारमार्गेण प्रविश्य हृदयं ततः ॥ १९३ ॥

वृत्तिपञ्चकभेदेन प्राणांस्तत्र नियोजयेत् ।
पादाङ्गुष्ठसमारभ्य नासिकान्तं द्विजोत्तम ॥ १९४ ॥

प्राणान्नियोजयेदेवमाचार्यो भगवन्मयः ।
पाणिद्वये पृष्टदेशे ग्रीवायाः पश्चिमे तथा ॥ १९५ ॥

अपानं विन्यसेदेवं न्यसेद्व्यानं तु सर्वगम् ।
समानं चापि हृदये न्यसेद्देवस्य मन्त्रवित् ॥ १९६ ॥

सुषुम्नामध्यगर्भे च उदानं ब्रह्मरन्ध्रगम् ।
वाक्पाणिपादपायुं च तत्रोपस्थे च योजयेत् ॥ १९७ ॥

पुर्यष्टकं हृदि स्थाप्य तन्मध्ये पुरुषोत्तमम् ।
अनुग्रहात्मकं सौम्यं सर्वभूतहिते रतम् ॥ १९८ ॥

---

१९२. c : S. शीर्षभ्यां for शीर्षण्या ; S. My. A. M. तु ततः for मस्तके.
d : S. A. V. तत्रस्थो for तत्रस्था०.

१९३. c : V. कर्णिका for पिण्डिका.

१९४. a : M. वाचक for पञ्चक.

१९५. a : M. देवं for एवं.
c : V. पार्ष्णि for पाणि०, V. पार्श्वे for देशे.
d : S. A. N. ग्रीवायां for ग्रीवायाः.

१९६. b : S. My. A. M. N. सर्वशः for सर्वगम्.
c : V. नाभि for चापि.

१९७. a : S. My. A. M. N. मध्यमं चैव for मध्यगर्भे च.
b : S. My. ०कम् for ०गम्.
c : S. My. N. वाक्पादपाणिपायुश्च.
d : My. A. M. तथोपस्थं for तत्रोपस्थे.

एवं कृते ततस्सा तु सजीवा जायते क्षणात् ।
सर्वासामेव मूर्तीनां प्रतिष्ठैवं विधैव हि ॥ १९९ ॥

वासुदेवादिमूर्तीनां विष्ण्वादीनां महामुने ।
द्वादशानां दशानां तु मत्स्यादीनां तु सुव्रत ॥ २०० ॥

अन्यासां देवतानां वा कुर्यादेवं न चान्यथा ।

(प्रतिष्ठायाः पञ्चविधत्वम्)

स्थापनास्थापने चैव तथा संस्थापनेति च ॥ २०१ ॥

प्रस्थापना प्रतिष्ठा च प्रतिष्ठा सा तु पञ्चधा ।

(स्थापनायाः लक्षणम्)

या प्रतिष्ठा भवेत्स्थाने स्थापना सा प्रकीर्तिता ॥ २०२ ॥

(आस्थापनायाः लक्षणम्)

या प्रतिष्ठासने प्रोक्ता सा चास्थापनसंज्ञिका ।

(संस्थापनायाः लक्षणम्)

शयने या प्रतिष्ठा तु सा च संस्थापना मता ॥ २०३ ॥

(प्रस्थापनायाः लक्षणम्)

याने तु यानया प्रोक्ता सा च प्रस्थापना भवेत् ।

(प्रतिष्ठायाः लक्षणम्)

ब्रह्मस्थानेऽर्चनापीठे स्थाप्यते प्रतिमा तु या ॥ २०४ ॥

---

१९९. a : ततस्था for ततस्सा.
d : S. My. A. M. प्रतिमैवं for प्रतिष्ठैवं.
२००. d : V. सर्वतः for सुव्रत.
२०३. b : S. A. संश्रिता for संज्ञिका.
२०४. d : My. A. M. प्रतिमार्धया A. प्रतिमोत्थया for प्रतिमा तु या.

कर्माचा सा तु विज्ञेया सर्वकर्मावहा शुभा ।
तस्याः सा तु क्रिया प्रोक्ता पूर्वोक्तविधिना तु या ॥ २०५॥

सा प्रतिष्ठेति संप्रोक्ता सर्वत्र मुनिपुङ्गव ।
प्रतिष्ठापञ्चकेऽप्येष विधिः साधारणः स्मृतः ॥ २०६ ॥

(कर्मार्चायाः स्थापने विशेषः)

कर्मार्चायाः प्रवक्ष्यामि विशेषं स्थापनादिषु ।
अधिवास्य तु कर्मार्चां पूर्वोक्तविधिना ततः ॥ २०७ ॥

प्रवेश्य गर्भागारं तां मूलार्चायां नियोजयेत् ।
इयं सा देवतामूर्तिः 'ओं' इत्युक्त्वा तु देशिकाः ॥ २०८ ॥

'सर्वेण' पादपीठे तां स्थापयित्वा द्विजोत्तम ।
मन्त्रन्यासं तु कुर्वीत कर्मार्चायां स्वभावतः ॥ २०९ ॥

(स्थानकादिबिम्बेषु स्थित्यादिन्यासक्रमः)

स्थितेऽपि च स्थितिन्यासमासने सृष्टिसंज्ञकम् ।
शयने संहृतिन्यासं यानके त्रितयं भवेत् ॥ २१० ॥

(संहारन्यासलक्षणम्)

पादजान्वोरुपस्थे च नाभौ हृदि मुखेक्षयोः ।
ललाटादिचतुर्दिक्षु शिरसो मूर्ध्नि च न्यसेत् ॥ २११ ॥

न्यसेन्मन्त्राक्षराण्येवं केवलानि द्विजोत्तम ।
एष संहारसंज्ञस्तु न्यासः संपरिकीर्तितः ॥ २१२ ॥

---

२०५. b : My. A. M. कर्ममहा for ०कर्मावहा.
२०६. c : A. ह्येष M. प्येषु for ०येष.
२०८. c : S. My. A. M. N. इह वा इयं सा.
२०९. c : इतः आरभ्य ११२. b : पर्यन्तं S. My. A. M. N. om.

(सृष्टिन्यासस्वरूपम्)

मूर्धादिपादपर्यन्तं सृष्टिन्यासः प्रकीर्तितः ।

(स्थितिन्यासस्वरूपम्)

नाभ्यादिहृदयान्तस्तु स्थितिन्यासः उदाहृतः ॥ २१३ ॥

अङ्गानि मूर्तौ विन्यस्य यानि यस्योदितानि वै ।

(द्वारपालस्थानादिनिर्देशः)

परिवारान् न्यसेत्पश्चात् यत्र यत्कल्पचोदितम् ॥ २१४ ॥

दर्शयित्वा ततो मुद्राः पूजयेत्पुरुषोत्तमम् ।
चण्डप्रचण्डौ द्वारस्थौ बहिर्निष्क्रम्य पूजयेत् ॥ २१५ ॥

द्वारार्धमण्डपस्याग्रे जयं च विजयं न्यसेत् ।
पूर्णश्च पुष्करश्चैव सम्प्रति द्वारपालकौ ॥ २१६ ॥

संस्थाप्य पूजनीयौ तौ वैष्णवौ विष्णुवल्लभौ ।
गरुडं बाह्यतः स्थाप्य पूजयेन्मखमण्डपात् ॥ २१७ ॥

(प्रथमावरणे कुमुदादिभूतेशस्थाननिर्देशः)

कुमुदाद्यांस्तु भूतेशान् प्रथमावरणे यजेत् ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ॥ २१८ ॥

शङ्कुकर्णः सर्पनेत्रो सुमुखः सुप्रतिष्ठितः ।
तत्रेशानस्थिते कोणे प्रथमावरणे स्वके ॥ २१९ ॥

सेनेशं तत्र संस्थाप्य पूजयेत्सादरं गुरुः ।

(प्रथमावरणद्वारपालौ)

प्रथमावरणद्वारे त्वानन्दं नन्दमर्चयेत् ॥ २२० ॥

---

२१५. b : V. प्रणम्य for पूजयेत्.
२१६. a : S. My. A. M. द्वारे० for द्वारा०.
२१७. d : V. मण्डपे for ०मण्डपात्.
२१९. c : S. My. M. यत्र for तत्र.
२२०. b : S. My. A. सततं for सादरं.

स्थापयित्वा विधानेन दक्षिणोत्तरपार्श्वयोः ।

(द्वितीयावरणस्थदेवतास्थाननिर्देशः)

उपेन्द्रः पूर्वदिग्भागे संस्थितो द्विजसत्तम ॥ २२१ ॥

वह्नौ तेजोधराख्यस्तु दक्षिणे दुरतिक्रमः ।
नैर्ऋते तु महाकर्मा पश्चिमे तु महाहृदः ॥ २२२ ॥

अग्राह्यो वायुदिग्भागे वसुरेतास्तथोत्तरे ।
पूर्वोत्तरे वर्धमानो द्वितीयावरणे क्रमात् ॥ २२३ ॥

(सप्तमातृणां स्थाननिर्देशः)

आलयस्योत्तरे मातॄण् दक्षिणे वाथ कल्पयेत् ।
प्रथमावरणे वापि द्वितीयावरणेऽपि वा ॥ २२४ ॥

(सप्तमातृणां नामानि तासां स्थितिश्च)

वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः सृष्टिस्तथैव च ।
विद्या कान्तिश्च सप्तैताः मातरो दक्षिणाननाः ॥ २२५ ॥

(मातृद्वारपालौ)

श्रीधरं हयवक्त्रं चाप्यासां वै द्वारपालकौ ।

(मातृणामालयमुखदिग्विवेकः भूतेशस्थानञ्च)

दक्षिणास्यमुदग्वक्त्रं विमानं दुरितावहम् ॥ २२६ ॥

एताः न तत्र संस्थाप्या राजराष्ट्रहितैषिणा ।
पूर्वास्ये पश्चिमास्ये च विमाने शुभदाः इमाः ॥ २२७ ॥

---

२२१. c : इतः आरभ्य २२४. d : पर्यन्तं S. My. A. M. N. om.

२२५. a : S. M. ०ति या for क्रिया ; S. My. A. M. N. शक्तिः for कीर्तिः.
d : V. कथिताः विष्णुमातरः.

२२६. b : S. My. A. M. एतौ for ०प्यासाम्.

तत्राग्रतो महापीठे भूतेशान् स्थापयेत्क्रमात् ।
द्वितीयावरणे स्थाप्या स्थाप्य संपूजयेत्ततः ॥ २२८ ॥

(तृतीयावरणदेवतास्थाननिर्देशः)

इन्द्रादीन् लोकपालांस्तु तृतीयावरणे न्यसेत् ।
वीरसेनं सुषेणं च क्रमाद्वै दक्षिणादितः ॥ २२९ ॥
तृतीयावरणे स्थाप्याः परिवाराः द्विजोत्तम ।

(तृतीयावरणद्वारदेवौ)

तत्र द्वार उभौ द्वारे संभवः प्रभवस्तथा ॥ २३० ॥

(देवताराक्षसादिस्थाननिर्देशः)

एतेषां तु बहिः पीठे देवान् रक्षांसि भोगिनः ।
दैत्यदानवपक्षीन्द्रान् अन्याः सर्वाश्च देवताः ॥ २३१ ॥
विन्यस्य सर्वरक्षार्थं वैष्णवांस्तु विशेषतः ।

(होमबलिदानादिविधिः)

पूजयित्वा तु तान् सर्वान् प्रासादं प्रविशेत्ततः ॥ २३२ ॥
आचम्य देवं संस्मृत्य न्यासं कृत्वा यथाविधि ।
गर्भगेहं ततो प्राप्य संपूज्य च यथाविधि ॥ २३३ ॥
होमं तु पूर्ववत् कृत्वा हविर्दत्त्वा तु पूर्ववत् ।
बलियात्रां ततः कृत्वा सर्वेष्वावरणेष्वपि ॥ २३४ ॥

---

२२८. b : M. भक्त for भूत; S. My. M. N. V. आनयेत् for स्थापयेत्.
२२९. b : S. My. A. M. N. स्वदिक्षु स्थापयेत्क्रमात्.
२३०. c : S. My. A. N. ततो द्वारस्थावुभौद्वारि.
२३१. b : S. My. यक्षान् A. M. ऋक्षान् for रक्षांसि.
c : S. My. A. M. तथा for दैत्य.
२३३. d : S. जयकामिभिः for च यथाविधि.
२३४. b : V. N. बलिं for हविः.

स्तुत्वा स्तोत्रैः नमस्कृत्य प्रहृष्टेनान्तरात्मना ।
स्तुवीत देवदेवेशं यथाशक्ति पुनः पुनः ॥ २३५ ॥

(आलयार्थं वृत्तिकल्पनविधानम्)

कालेऽस्मिन् यजमानस्तु पूज्य भागवतोत्तमान् ।
प्रसादयेत् सबिम्बं तु यागोपकरणान्वितम् ॥ २३६ ॥

क्षेत्रारामधनाद्याढ्यं दासदासीगणान्वितम् ।
दद्यात्तेभ्योऽम्बुपूर्वं तु देवस्याभिमुखस्थितः ॥ २३७ ॥

तेऽपि संपूजयेयुस्तां प्रतिमां तत्र नित्यशः ।
विधिनानेन मुख्येन पञ्चरात्रेण सर्वदा ॥ २३८ ॥

धर्मार्थकाममोक्षाणां सिद्धये सर्वदेहिनाम् ।
आत्मनश्च हितार्थाय भगवद्वंशजास्त्विमे ॥ २३९ ॥

(गुरवे दक्षिणादानक्रमः)

आत्मानं गुरवे दत्त्वा यजमानः समाहितः ।
दद्याद्वस्त्रयुगं दिव्यं पर्यङ्कं छत्रमासनम् ॥ २४० ॥

गां चैवालङ्कृतां दद्यात् सुवर्णमणिसञ्चयम् ।
क्षेत्रारामगृहांश्चैव दासीदाससमन्वितम् ॥ २४१ ॥

कटकं कटिसूत्रं च हस्त्यश्वं शिबिकां तथा ।
यद्यदिष्टतमं लोके यद्यदिष्टं तथात्मनः ॥ २४२ ॥

---

२३६. c : My. A. M. N. प्रासादं यत्सबिम्बिं तु.
२३७. d : S. My. A. N. पूर्व for देव०.
२३८. c : S. M. मुक्तेन for मुख्येन.
२३९. d : S. My. A. M. N. om. तु.
२४०. d: S. A. M. चित्रं My. चक्रं for छत्रम्.
२४१. c : S. My. A. M. N. क्षेत्रग्राम for क्षेत्राराम.

तत्सर्वं गुरवे दद्यात् वित्तसाढ्यविवर्जितम् ।

(यजमानस्यात्मसमर्पणम्)

अहमाज्ञाकरो दासः सद्भृत्यस्तव सुव्रत ॥ २४३ ॥

यदस्तीदं गृहे वित्तं तेन सार्धं गृहाण माम् ।

इत्यात्मानं निवेद्यास्मै मूर्तिपान् पूजयेत्ततः ॥ २४४ ॥

वासोभिश्चैव विविधैः धनधान्यैः समाहितः ।

(अन्येषां स्थपत्यादीनां च सम्माननम्)

अन्यांश्च पूजयेत् विद्वान् विद्यागुणविशेषतः ॥ २४५ ॥

स्थपतिं पूजयेत् पश्चात् दीनानथ जनांस्ततः ।

ब्राह्मणान् भोजयेत्पश्चात् मित्रस्वजनबान्धवान् ॥ २४६ ॥

आत्मनो भृत्यवर्गं च स्ववृत्तिविभवेन तु ।

(प्रतिष्ठान्तोत्सवाचरणविधानम्)

अपरेऽहनि कुर्वीत विष्णोरुत्सवविस्तरम् ॥ २४७ ॥

एकरात्रं द्विरात्रं वा पञ्चरात्रमथापि वा ।

नव द्वादशरात्रं वा ध्वजारोहणपूर्वकम् ॥ २४८ ॥

तीर्थयात्रावसानं तु ततः स्नपनमाचरेत् ।

(पुराणप्रतिमाप्रतिष्ठायां क्रमः)

स्थापिता तु पुराणा वा प्रतिमा वै धिया शुभा ॥ २४९ ॥

---

२४३. d : M. वृत्तः for भृत्यः.

२४४. a : V. यदस्तिमत् for यदस्तीदं.

२४५. c : S. M. N. सं V. तु for च.

२४६. b : S. वाच for अथ.
c : N. पूजयेत् for भोजयेत्.

२४७. b : S. A. M. वृत्त for वृत्ति०.

२४८. a : N. त्रिरात्रं for द्विरात्रं.
b : S. My. च for वा.
d : S. V. ०रोपण for ०रोहण.

२४९. d : A. My. V. प्रतिमाद्वय वै शुभा.

तन्त्राप्येष विधिः प्रोक्तस्त्वधिवासनवर्जितः ।

(स्थापितप्रतिमायाः उद्धरणनिषेधः)

स्थापितां नोद्धरेत् कांचित् प्रतिमां तन्त्रवित्तमः ॥ २५० ॥

उत्पाटने महान्दोषो राष्ट्रभङ्गश्च जायते ।
तस्मात् सर्वप्रयत्नेन स्थापितां नोद्धरेद्बुधः ॥ २५१ ॥

(स्थापितप्रतिमापूजनप्रकारः)

पूर्वोक्तेन विधानेन स्थापयित्वा तु देशिकः ।
ध्यानमार्गेण संशोध्य सृष्टिमार्गव्यवस्थया ॥ २५२ ॥

तत्त्वैः सर्वैस्तु संयोज्य ततो मूर्तिं प्रकल्प्य च ।
अङ्गावरणभेदेन पूजयेत्पुरुषोत्तमम् ॥ २५३ ॥

(स्वयंव्यक्तादिबिम्बप्रतिष्ठानिषेधः)

न प्रतिष्ठापनं कुर्यात् स्वव्यक्ते मुनिकल्पिते ।
भिन्ने जीर्णेऽथवा बिम्बे प्रासादे वा न तत्त्यजेत् ॥ २५४ ॥

(स्वतन्त्रपरिवारप्रतिष्ठाक्रमः)

एवं विघ्नाधिपादीनां स्थापनं च समीरितम् ।
स्वतन्त्राणां महाभाग सर्वेषां तु क्रिया समा ॥ २५५ ॥

परिवारैः स्वकैश्चैव युक्तानां तु यथाक्रमम् ।
न पृथक् स्थापनीयास्तु द्वारपालेष्टकास्तथा ॥ २५६ ॥

एषां साधारणः प्रोक्तः विधिः संस्कारकर्मणि ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां प्रतिमा-
प्रतिष्ठालक्षणं नाम पञ्चदशोऽध्यायः

---

२५०. d : S. My. A. M. तत्त्व for तन्त्र०.
२५४. c : V. तथा for ०थवा.
२५५. a : M. विष्व० for विघ्ना०.
d : S. A. M. निवासिनाम् for क्रिया समा.
२५६. a : S. My. A. M. N. ०रेव for चैव.
d : S. My. द्वारावशेषितस्तथा.

# षोडशोऽध्यायः

## [सालादिप्रतिष्ठापनाध्यायः]

(सालादिप्रतिष्ठापनविधिकथनार्थं गौतमकृताभ्यर्थनम्)

**गौतमः—**

सालानां मण्डपानाञ्च गोपुराणां तथैव च ।
तथा महानसादीनां स्थापनं मुनिसत्तम ॥ १ ॥

ब्रूहि मेऽद्य प्रपायाश्च संक्षेपेण यथातथम् ।
पायात् कृतानामेतेषां समाप्तानां यथाविधि ॥ २ ॥

(सालानां प्रतिष्ठापनप्रकारः)

**नारदः—**

वक्ष्यामि मण्डपादीनां स्थापनां मुनिसत्तम ।
सालस्य दक्षिणे भागे पूर्वस्यां दिशि पूर्ववत् ॥ ३ ॥

कुण्डं वा स्थण्डिलं वापि कृत्वास्मिन् होममाचरेत् ।
मन्त्रैस्तु लोकपालानां प्रत्येकं षोडश क्रमात् ॥ ४ ॥

समिद्भिः सर्पिषा चैव चरुणा च यथाक्रमम् ।
स्वदिक्षु पूजयित्वा तान् जपेन्मन्त्रांस्तु शक्तितः ॥ ५ ॥

सालानां स्थापनं ह्येवम्

(मण्डपप्रतिष्ठापनप्रकारः)

मण्डपानामथोच्यते ।
पुण्याहं वाचयित्वास्मिन् अलङ्कृत्य च पूर्ववत् ॥ ६ ॥

---

१. a : S. बालानां for सालानां.
२. a ; b ; c ; d : S. My. A. M. om.
३. a ; b : S. My. A. M. om.
 c : S. A. M. बालस्य for सालस्य.
५. b : A. चरुणार्च्य M. चरुणार्चा for चरुणा च.

तोरणानि च सम्पूज्य ध्वजांश्चैव यथाक्रमम् ।
द्वारकुम्भांस्ततोऽभ्यर्च्य पूर्वादिक्रमयोगतः ॥ ७ ॥

कुम्भे सम्पूजयेद्देवं करकेऽस्त्रं सदक्षिणे ।
दीक्षाविधौ यथा तद्वत् कृत्वा सर्वं यथाविधि ॥ ८ ॥

कुर्यान्मिण्डपमध्ये तु वेदिकां शालितण्डुलैः ।
क्षालितैश्च तथा शुक्लैश्चतुरश्रां त्रिमेखलाम् ॥ ९ ॥

हस्तमात्रायतोत्सेधां तावद्विस्तारसंयुताम् ।
तस्मिन् सम्पूज्य विधिवत् देवदेवं जनार्दनम् ॥ १० ॥

मण्डपेशानकोणे तु कुण्डे वा स्थण्डिलेऽपि वा ।
होमं कृत्वा विधानेन समिच्चरुघृतैस्तिलैः ॥ ११ ॥

एवं निशायां कृत्वा तु तदर्वाग्वा यथारुचि ।
मुहूर्ते शोभने प्राप्ते वैष्णवानामनुज्ञया ॥ १२ ॥

कुम्भस्थेनैव तोयेन देवताः परिकल्पयेत् ।
पूर्णं च पुष्करं चैव पूर्वद्वारे तु कल्पयेत् ॥ १३ ॥

आनन्दं नन्दनं चैव दक्षिणद्वारि कल्पयेत् ।
वीरसेनं सुषेणं च पश्चिमद्वारि कल्पयेत् ॥ १४ ॥

सम्भवप्रभवौ तत्र उत्तरद्वारि कल्पयेत् ।
प्राच्यां सुशोभनं न्यस्य तोरणे रत्नसन्निभम् ॥ १५ ॥

---

७. c : V. तथा for ततो०.
८. a : My. N. कुम्भैः for कुम्भे.
c : S. My. A. M. N. निष्ठा for दीक्षा.
d : S. My. A. M. धर्मं for सर्वं.
९. c : S. शुद्धैः My. शुभ्रैः A. N. शुष्कैः for शुक्लैः.
d : V. तु for त्रि.
१०. b : N. तद्वत् for तावत्.
११. a : S. My. A. M. मण्डपादीशकोणे तु ; N. ०षु for तु.
१२. b : S. तदर्पाया A. तदहर्वा V. तद्गर्वाद्या for तदर्वाग्वा.

दक्षिणे तोरणे पीतं सुभद्रं विकृताननम् ।
सुगन्धं पश्चिमे पश्चात् न्यसेत्कृष्णं तु तोरणे ॥ १६ ॥

सुहोत्रं सुषितं पश्चात् न्यसेदुत्तरतोरणे ।
न्यसेत्पद्ममधस्तात्तत्स्तम्भानां च स्थले सुधीः ॥ १७ ॥

गदां स्तम्भे तु विन्यस्य शङ्खं मध्ये तु विन्यसेत् ।
स्तम्भोपरिष्टाच्चक्रं तु सहस्रारं न्यसेत् क्रमात् ॥ १८ ॥

वह्निस्थं मण्डलस्थं च कुम्भस्थं च विसर्जयेत् ।
आचार्यं पूजयेत्पश्चात् स्वशक्त्या भक्तिपूर्वकम् ॥ १९ ॥

स्थापनं मण्डपस्योक्तमेवमेव द्विजोत्तम ।

(गोपुरस्य स्थापनप्रकारः)

गोपुरस्याथ वक्ष्यामि स्थापनं मुनिसत्तम ॥ २० ॥

कुण्डं वा स्थण्डिलं वापि कृत्वा दक्षिणतो बहिः ।
गोपुरस्य चतुर्दिक्षु स्थिताः याः मूर्तयो द्विज ॥ २१ ॥

तासां स्वनामभिः कुर्यात् होमं शक्त्यनुरूपतः ।
यत्र दिङ्मूर्तयो न स्युः गोपुरे सूकरादयः ॥ २२ ॥

तस्मिंस्तु 'मूल'मन्त्रेण जुहुयान्मन्त्रवित्तमः ।
ततस्तु शान्तितोयेन न्यसेद्वै देवताः क्रमात् ॥ २३ ॥

---

१८. a : S. तदा for गदां.
१९. b : S. My. M. N. विवर्जयेत् for विसर्जयेत्.
२०. c : S. अत्र for अथ.
d : S. My. A. M. N. द्विज० for मुनि०.
२२. a : S. My. A. M. N. नामतः for नामभिः.
d : S. My. A. N. गोपुरेषु क्रमादयः.
२३. c : S. My. A. M. N. होमेन for तोयेन.

दक्षिणोत्तरपार्श्वस्थौ न्यस्यौ तद्द्वारपालकौ ।
स्वस्थाने मूर्तयो न्यस्या देवा ये तत्र निर्मिताः ॥ २४ ॥
जलेन तेन सम्प्रोक्ष्य स्वैस्स्वैर्मन्त्रैर्यथाक्रमम् ।
पुण्याहं वाचयित्वा तु 'मूल'मन्त्रं जपेत्ततः ॥ २५ ॥
पूजयित्वा गुरुं पश्चात् ब्राह्मणानपि भोजयेत् ।
गोपुरस्थापनं ह्येवं मया लेशेन कीर्तितम् ॥ २६ ॥

(महानसादीनां स्थापनप्रकारः)

ततो महानसादीनां स्थापनं शृणु सुव्रत ।
पुण्याहं वाचयित्वा तु भूषयित्वा महानसम् ॥ २७ ॥
मूलमन्त्रं शतं जप्त्वा ध्यायेज्जिष्णुं समाहितः ।

(प्रपाप्रतिष्ठापनप्रकारः)

अन्येषां स्थापनं चैव प्रपायास्त्वधुनोच्यते ॥ २८ ॥
पुण्याहं वाचयित्वा तु पूजयित्वा जपेत्तथा ।

(सामान्यजीर्णसन्धानविधिनिर्देशः)

एवं वै जीर्णसन्धाने कुर्यात्तेषां समाहितः ॥ २९ ॥
इति ते सर्वमाख्यातं स्थापनम् ऋषिसत्तम ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां मण्डपादिप्रतिष्ठापनं नाम षोडशोऽध्यायः

---

२४. b : V. न्यसेत् for न्यस्यौ.
d : A. My. S. नन्दिताः for निर्मिताः.
२५. b : M. स्वस्वैः for स्वैस्स्वैः.
२८. a : S. My. A. M. N. गुरुः for मन्त्रं.
b : My. A. M. N. विष्णुं for जिष्णुं.
२९. b : My. ततः for तथा.
c : S. My. A. M. N. सदने for सन्धाने.
d : S. My. A. N. एष M. एषु for तेषां.
30. a ; b : S. My. A. M. N. om.
S. My. A. प्रतिष्ठास्थापनं for प्रतिष्ठापनं.

# सप्तदशोऽध्यायः

## [जीर्णसंस्कारविधिनिरूपणाध्यायः]

(जीर्णसंस्कारविधिनिरूपणार्थं नारदं प्रति गौतमकृताभ्यर्थना)

**गौतमः—**

जीर्णबिम्बे विमाने वा प्राकारे मण्डपे मुने ।
गोपुरे परिवारादौ स्थापिते यत्र कुत्रचित् ॥ १ ॥
तत्र ब्रूहि विधानं मे श्रोतुमिच्छामि साम्प्रतम् ।

(जीर्णबिम्बसंस्कारस्य त्रिविधत्वकथनम्)

**नारदः—**

विधानं जीर्णबिम्बानां त्रिविधं परिकीर्तितम् ॥ २ ॥
मानुषं चार्षकञ्चैव स्वव्यक्तमिति भेदतः ।

(द्विविधमानुषबिम्बपूजनम्)

वक्ष्यामि मानुषं पूर्वं शृणुष्वैकमना मुने ॥ ३ ॥
अस्थावरं स्थावरं च द्विविधं तत्र पूजनम् ।

(स्थावरबिम्बादिजीर्णे बालालयकल्पनक्रमः)

जीर्णे तु स्थावरे बिम्बे विमाने चोभयोरपि ॥ ४ ॥

---

१. b : S. A. M. N. P. प्रासादे for प्राकारे.
३. a : My. अमानुषं for आर्षकम्.
   b : V. सु P. स्वं for स्व ; N. स्मृतं for भेदतः.
   d : My. ०धुना for मुने.
४. b : A. विविधं for द्विविधं ; S. A. M. N. P. पूजयेत् for पूजनम्.
   c : My. च for तु.
   d : S. My. A. M. P. चोभयेऽपिवा for चोभयोरपि.

ऐन्द्रेशानविभागे तु सोमेशानान्तरेऽपि वा ।
प्रत्यक्द्वारं नवं गेहं कुर्यान्मृत्काष्ठकैः दलैः ॥ ५ ॥

(अस्थावरबिम्बसंस्कारे बालालयक्रमः)

अस्थावरेऽग्रतः कुर्यात् विमानाभिमुखं क्रमात् ।
विमाने दक्षिणद्वारे उदग्द्वारे तु वा मुने ॥ ६ ॥
ऐन्द्रेशानविभागे वा सोमेशानान्तरेऽपि वा ।
प्रत्यग्द्वारं तु कुर्वीत बालवेश्म विचक्षणः ॥ ७ ॥

(बिम्बविमानोभयजीर्णत्वे सामान्यक्रमः)

बिम्बे जीर्णे विमाने वा द्वयोर्वा पूर्ववद्द्विज ।

(बालालयस्वरूपादिकथनम्)

वृत्तं वा चतुरश्रं वा उभयायतमेव वा ॥ ८ ॥
एकहस्तावरं कुर्यात् दशहस्तान्तमुच्छ्रयम् ।
विस्तारं च तथा कुर्यात् तथैवायामसंयुतम् ॥ ९ ॥
अस्मान्न चाधिकं न्यूनं बालवेश्म विगर्हितम् ।

(बालालयकल्पननिमित्तादिनिर्देशः)

अङ्गोपाङ्गादिभिन्ने तु कृमिवह्न्यादिदूषिते ॥ १० ॥
नष्टे ससुषिरे भग्ने चोरैरपहृतेऽपि च ।
पूयविण्मूत्ररुधिरैः सुरया चापि दूषिते ॥ ११ ॥

---

५. d : S. A. M. N. P. वैकाष्ठ for मृत्काष्ठकैः.
६. a : S. M. N. P. ततः My. श्रुतः for ऽग्रतः.
d : V. ऽथवा for तु वा.
७. b : My. पूर्वे for सोमे.
c : V. न for तु ; My. om.
८. a ; b : My. V. om.
d : M. च for वा.
१०. d : My. M. N. वन्यादि for वह्न्यादि.
११. b : My. वा for च.
d : My. वापि for चापि.

स्फुटिते चलिते बिम्बे जीर्णे कालवशाद्द्विज ।
दोषैरन्यैस्तथा दुष्टे नदीवेगादिभिस्तु वा ॥ १२ ॥

पीठे भिन्ने तथा जीर्णे देव्योर्वा जीर्णयोरपि ।
प्रासादेऽशनिना भग्ने जीर्णे कालवशाद्यदि ॥ १३ ॥

एवं तु लक्षणोपेतं कृत्वा बालगृहं शुभम् ।
प्रथमावरणे विप्र द्वितीयावरणेऽपि वा ॥ १४ ॥

(बालालये बिम्बपीठस्वरूपायामादिनिर्देशः)

तस्य मध्ये न्यसेत्पीठं काष्ठजं तु नवं दृढम् ।
जलनिर्गमनोपेतं सश्वभ्रबलयान्वितम् ॥ १५ ॥

चतुरश्रं तु वा वृत्तं द्वितालायामविस्तरम् ।
अथवा तालमानेन विस्तारायामसंयुतम् ॥ १६ ॥

विस्तारार्धोच्छ्रयं विप्र सर्वलक्षणसंयुतम् ।

(बालालये बिम्बावस्थानविवेकः)

तस्मिन् लोहमयं बिम्बं काष्ठजं शैलजं तु वा ॥ १७ ॥

स्थानके स्थानकं बिम्बम् आसीनं चासने तथा ।
यानगे यानगं तद्वत् नान्यथा द्विजसत्तम ॥ १८ ॥

स्थानकं चासनं वापि शयने बालकौतुकम् ।
सौम्यवक्त्रं चतुर्बाहुं कर्मार्चालक्षणान्वितम् ॥ १९ ॥

---

१२. d : V. तथा for तु वा.
१३. a : My. थवा for तथा.
b : S. M. इति for अपि.
१५. b : S. My. A. M. N. P. मृदुद्रवन् for नवं दृढम्.
d : S. स्वतंत्रं My. अस्वतंत्रम् for सश्वभ्र.
१६. c : My. तल for ताल.
१८. a : S. My. A. M. N. P. स्थानगे स्थानगं वापि.
१९. a : S. A. M. N. P. वासने for चासनं.
d : S. My. A. लक्षणैर्युतं for लक्षणान्वितम्.

नाधिकं हस्तमानात्तु न न्यूनं चतुरङ्गुलात् ।
मत्स्यकूर्मवराहाणां नृहरेर्वामनस्य च ॥ २० ॥

रामयोः कृष्णमूर्तेश्च बुद्धकल्क्योस्तथैव च ।
प्रवासावसथार्चायाः संस्थानं मूलबिम्बवत् ॥ २१ ॥

चतुर्भुजं वा कुर्वीत वासुदेवानुरूपतः ।
नित्यनैमित्तिकार्चानामेवमेषां तु लक्षणम् ॥ २२ ॥

मूलगेहगतानां च बालवेश्मगतस्य च ।
लक्षणं कर्मबिम्बानां द्विविधं समुदाहृतम् ॥ २३ ॥

(बालार्चासन्निद्धौ कीलस्थापनम्)

बालार्चासन्निधौ कीलं खादिरं द्वादशाङ्गुलम् ।
तस्मिन् पीठे तु संस्थाप्य निश्चलं तु यथा भवेत् ॥ २४ ॥

(मूलालये भगवतः आराधनक्रमः)

प्रातिष्ठिकेन संस्थाप्य स्नपनेन विशुद्धये ।
पुण्याहं वाचयित्वा तु ब्राह्मणैः स्वस्ति वाच्य च ॥ २५ ॥

देवस्य महतीं पूजां कृत्वा भागवतोत्तमः ।

(शक्त्यावाहनार्थं पात्रस्थापनम्)

सौवर्णं राजतं वापि ताम्रं वा विपुलं शुभम् ॥ २६ ॥

देवस्य पुरतः स्थाप्य पात्रं वा कुम्भमेव वा ।
तोयेनापूर्य गन्धाद्यैरलङ्कृत्य यथाविधि ॥ २७ ॥

---

२०. b : S. My. M. N. P. चतुरङ्गुलं for चतुरङ्गुलात्.
d : M. P. वा for च.
२१. b : M. N. P. बौद्ध for बुद्ध.
d : P. S. M. स्थापनं for संस्थानं.
२३. c : V. मूल० for कर्म.
२५. d : S. वाचकैः for वाच्य च.
२६. d : S. M. सु for वा.
२७. c : My. P. कुम्भाद्यैः for गन्धाद्यैः.

(बालबिम्बसंस्कारादिक्रमः)

मूलगेहाद्बिनिर्गत्य प्रविश्याभिनवं गृहम् ।
दीक्षाविधानमार्गेण बिम्बसंस्कारमारभेत् ॥ २८ ॥

संहारसृष्टियोगेन ध्यात्वा तत्त्वानि देशिकः ।
जननादिकमाध्यात्वा संस्कृत्यैवं ततो बहिः ॥ २९ ॥

(बालालये कर्मकालस्यावधिः)

निर्गत्य पृच्छेदाचार्यं कर्मकालावधिं पुनः ।
कियन्तं कालमत्रेशः प्रवासावसथे वसेत् ॥ ३० ॥

इति पृष्टास्तु ते ब्रूयुः गेहं निर्मापयामहे ।
कालेनैतावता यत्नात् बिम्बं वाभिनवं शुभम् ॥ ३१ ॥

मासादूर्ध्वं द्वादशाब्दादर्वाक् कालावधिः स्मृतः ।
तस्मादूर्ध्वं क्लेशवासं वासुदेवो न मन्यते ॥ ३२ ॥

(आलये भगवद्विज्ञापनम्)

विज्ञापयेत्ततो देवं प्रविश्य सुसमाहितः ।
भगवन् वास्त्वभिनवं बिम्बं वा तव शोभनम् ॥ ३३ ॥

कारयिष्यन्ति ते भक्तास्ताननुज्ञातुमर्हसि ।
क्लेशावासस्त्वया देव रोचनीयोऽल्पके गृहे ॥ ३४ ॥

---

२८. a : M. च for वि० ; My. निर्गम्य for निर्गत्य.
२९. c : My. M. N. क्रमात् for कमा०.
d : S. संस्तुत्य for संस्कृत्य.
३०. b : S. My. A. M. N. P. कतृ for कर्म.
३१. a : My. A. N. पृष्ट्वा for पृष्टाः, My. A. ततः for तु ते.
c : S. My. A. M. N. P. यस्मात् for यत्नात्.
d : V. वापि for वाभि०.
३३. d : V. चैव तु for वा तव.
३४. b : S. M. ततो for तान०.
d : A. M. P. शोचनीयः for रोचनीयः.

(मूलबेरात् घटादौ भगवतः आवाहनम्)

इत्युक्त्वावाहयेद्देवं घटे वा पात्र एव वा ।
'पञ्चोपनिषदै'र्मन्त्रैः मन्त्रमूर्तिसमन्वितम् ॥ ३५ ॥

(बालालये शक्तियुक्तस्य घटस्यानयनम्)

कुम्भं तु शिरसि स्थाप्य निर्गच्छेद्यत्नतो गुरुः ।
शङ्खदुन्दुभिनिर्घोषैः जयशब्दरवैस्तथा ॥ ३६ ॥
गेहं प्रदक्षिणीकृत्य ब्रह्मघोषसमन्वितम् ।
तत्र गेहं नवं प्राप्य प्रविशेत् सप्रदक्षिणम् ॥ ३७ ॥

(बालालये भगवद्विज्ञापनम्)

प्रविश्य तैः समादिष्टं कालं विज्ञाप्य विष्णवे ।
भगवन्नल्पगेहेऽस्मिन् वासः क्लेशोऽपि ते हरे ॥ ३८ ॥
वस्तव्यो भगवंस्तावत् यावत् कर्म समाप्यते ।
कारकस्य परामृद्धिमनुज्ञाप्य महोदयाम् ॥ ३९ ॥

(बालबिम्बे शक्तिसंयोजनादिक्रमः)

इत्युक्त्वा किञ्चिदानम्य सिंचेत्तद्वारि मूर्धनि ।
'पञ्चोपनिषदो' मन्त्रान् ध्यात्वा 'सर्वे'ण देशिकः ॥ ४० ॥

---

३५. b : S. P. पटे My. वटे for घटे.
d : M. मन्त्री for मन्त्र०.
३६. b : My. यान० for यत्न०.
३७. d : V. संविशेत् for प्रविशेत्.
३८. b : S. My. वैष्णवे for विष्णवे.
c : My. काले for गेहे.
३९. a : S. A. M. तत्र for तावत्.
४०. b : S. सिंचितं द्वारि V. My. सिंचेत्तद्द्वारि for सिंचेत्तद्वारि.
c : My. A. V. M. N. उपनिषदान् for उपनिषदो.
d : My. ज्ञात्वा for ध्यात्वा.

ततो मूर्त्या च संयोज्य पूजयेत्कल्पवर्त्मना ।
यत्कर्म यत्र बिम्बे तु प्रोक्तं तत्कर्म कारयेत् ॥ ४१ ॥

अर्चनं वह्नियागं च बलिदानं च पूर्ववत् ।
उत्सवं स्नपनं चैव पवित्रारोहणं तथा ॥ ४२ ॥

पूर्ववत्सकलं कुर्यान्न विशेषो विधीयते ।
अथवा नित्यमेव स्यात् शीघ्रनिर्माणहेतुतः ॥ ४३ ॥

(विमानजीर्णोद्धारे क्रमः)

विमानान्तर्गताः यास्तु देवतास्ताः महामुने ।
बालवेश्मनि पीठस्थाः कृत्वा पूज्यास्तु पूर्ववत् ॥ ४४ ॥

विमाने ये स्थिताः देवाः तांस्तु बालगृहे न्यसेत् ।
तथा नृत्तं च वाद्यं च कारयेत् हृष्टमानसः ॥ ४५ ॥

अनिवारितमन्नाद्यं सार्वजन्यं च कारयेत् ।
ततः प्रभृति तत्कर्ता नियमस्थो भवेत्सदा ॥ ४६ ॥

(जीर्णबिम्बत्यागप्रकारः)

जीर्णे बिम्बे द्विजश्रेष्ठ ब्राह्मणानामनुज्ञया ।
उद्धृत्य प्रतिमां तस्मान्मूलरत्नादिसंयुताम् ॥ ४७ ॥

यानमारोप्य तामर्चां विष्वक्सेनात्मना गुरुः ।
नीत्वागाधजलं तत्र विष्वक्सेनमनुस्मरन् ॥ ४८ ॥

---

४१. b : V. पूरयेत् for पूजयेत्, S. A. M. धर्मणा for वर्त्मना.
d : V. तत्तत्र for तत्कर्म.
४३. d : M. क्षिप्रं for शीघ्र ; S. My. A. हेतुकः for हेतुतः.
४४. b : S. M. N. P. तु for ताः.
४५. a : A. खे for ये.
c : V. ततो for तथा, S. A. P. नृत्यं for नृत्तं.
४६. c : S. A. M. N. P. तदा for ततः.
४७. d : My. कूल for मूल.

निक्षिपेत्तत्र तामर्चामाचार्यः स्वस्थमानसः ।

(अंशतः उपहते बिम्बादौ संस्कारक्रमः)

यदि नोपहतामर्चां समग्रावयवां यदि ॥ ४९ ॥

तामाच्छाद्य तु यत्नेन कटदार्वादिभिः दृढम् ।
अथ शीघ्रं नवं कुर्यात् विमानं बिम्बमेव वा ॥ ५० ॥

(जीर्णसंस्कारक्रमे नवबिम्बावस्थानविवेकः)

स्थानके स्थानकं पश्चात् आसने चासनं भवेत् ।
शयिते शयनं तद्वत् नान्यथा द्विजसत्तम ॥ ५१ ॥

पूर्वं यद्येकबेरं तु तथा पश्चाद्विधीयते ।
तथैव बहुबेरं च व्यत्यासं न समाचरेत् ॥ ५२ ॥

(पश्चाद्वर्णैः भूषणे दोषाभावकथनम्)

वर्णशोभाविहीनं चेत् बहुबेरं पुरा द्विज ।
वर्णैर्विभूषयेत्पश्चात् न दोषस्तत्र विद्यते ॥ ५३ ॥

(जीर्णसंस्कारे बिम्बोपादानद्रव्यविवेकः)

या मूर्तिः स्थापिता पूर्वं पश्चात्तामेव कारयेत् ।
मृण्मयी यदि पूर्वार्चा पुनश्चैव मृदा भवेत् ॥ ५४ ॥

पूर्वं शिलामयी या तु पुनश्चैव शिलामयी ।
लोहजा रत्नजा तद्वत् सर्वं पूर्ववदाचरेत् ॥ ५५ ॥

---

४९. c : My. चोपहता for नोपहता०.
d : S. My. A. M. N. P. समिश्रावयवां यदि.
५०. b : M. N. कटु A. कर for कट.
d : N. च for वा.
५१. d : V. My. पुङ्गव for सत्तम.
५४. d : A. N. S. तथा for मृदा.

कृतो यदि विपर्यासः राजराष्ट्रौ विनश्यतः ।
तस्मात् सर्वप्रयत्नेन पूर्ववत्कारयेत् पुनः ॥ ५६ ॥

(जीर्णसंस्कारानन्तरं भगवतः आवाहनादिक्रमः)

बिम्बं संस्कृत्य विधिवत् पुरादृष्टेन वर्त्मना ।
आवाह्य पूर्ववद्देवं क्रियाः कृत्वा तु पूर्ववत् ॥ ५७ ॥

कुम्भे 'पञ्चोपनिषदैः' हरिं भक्त्यैव पूर्ववत् ।
विधिवच्च समानीय सिंचेत् 'सर्वे'ण मूर्धनि ॥ ५८ ॥

ततः पूर्वोक्तविधिना पूजयेत्पुरुषोत्तमम् ।

(पूयादिदूषितजीर्णबिम्बनवीकरणप्रकारः)

पूयादिदूषिते बिम्बे दारुजे मृण्मयेऽपि वा ॥ ५९ ॥

त्यक्त्वा तद्बिम्बमन्यत्तु संस्थाप्यैवं विधीयते ।
लोहपाषाणबिम्बे तु तथा पूयादिदूषिते ॥ ६० ॥

बालगेहस्य निर्माणं कुर्यात्तन्त्रविचक्षणः ।
मृदुमृद्वारिभिः स्नाप्य बहुशः कुशलो गुरुः ॥ ६१ ॥

प्रतिष्ठाकर्मणा कुर्यात् संस्कारं सादरो गुरुः ।
एवं पूयादिदुष्टेषु कर्मबिम्बेषु कारयेत् ॥ ६२ ॥

---

५६. a : My. कृते सति विपर्यासे.
b : V. राजा राष्ट्रं विनश्यति.

५७. a : My. विधिना for विधिवत्.
c : S. A. M. N. P. विधिवत् for पूर्ववत्.

५८. b : V. यद्देवं विन्यसेद्धरिम्.
c : V. पूर्ववत् सर्वमानीय.

५९. d : V. My. मृन्मये दारुजेऽपि वा.

६१. a : V. न मृण्मया बालगेहे.
b : My. तत्र for तन्त्र.
c : S. A. M. N. P. संस्थाप्य for ०भिः स्नाप्य.

६२. a ; b : V. om.

जीर्णे तु कर्मबिम्बे तु भेदच्छिद्रादिदूषिते ।
मूलबिम्बे समारोप्य 'सर्वे'ण सुसमाहितः ॥ ६३ ॥
सन्धानयोग्यं सन्धेयमन्यत्त्याज्यं तु पूर्ववत् ।

(सुवर्णादिजीर्णबिम्बसंस्कारप्रकारः)

सौवर्णं राजतं बिम्बं द्रावयित्वा पुनर्भवेत् ॥ ६४ ॥
लोहजं ताम्रजं वापि द्रावयित्वा पुनस्तथा ।
प्रतिष्ठाप्य यथान्यायं पूजयेत्पूर्ववद्गुरुः ॥ ६५ ॥

(क्रव्यादादिदूषितबिम्बसंस्कारः)

क्रव्यादम्लेच्छचण्डालसूतकाद्यैश्च दूषिते ।
प्रतिष्ठाकर्म कुर्वीत न्यासावाहनवर्जितम् ॥ ६६ ॥

(भेदादिदूषितजीर्णपीठसंस्कारप्रकारः)

पीठप्रभास्त्रवस्त्रादौ भेदच्छिद्रादिदूषिते ।
आरोप्य पूर्ववद्देवं सन्धेयं शिल्पिभिस्ततः ॥ ६७ ॥

(जीर्णे परिवारादौ संस्कारप्रकारः)

जीर्णे तु परिवारादौ केवले द्विजपुङ्गव ।
पीठं तस्याग्रतः कृत्वा पीठालाभेऽन्यतोऽपि वा ॥ ६८ ॥

---

६४. b : My. कुर्यात् for त्याज्यं.
६५. a : S. M. ताम्रजं A. P. रीतिजं V. अन्याम्य० for लोहजम्.
 b : V. पुनः for तथा.
 d : A. पूजयित्वा पुनर्गुरुः
६६. a : S. My. A. M. N. P. अतिवाशौच for क्रव्यादम्लेच्छ.
 b : S. सूकरा for सूतका०.
६७. c : V. पूर्व देवेशं for पूर्ववद्देवं.
६८. b : M. केवलं for केवले.
 c : V. तस्य तु कृत्वाग्रे for तस्याग्रतः कृत्वा.
 d : A. ०लोहे for लाभे ; My. न्यथा for ०न्यतो ; V. तद० for पीठा०

आवाह्य तत्र तं देवं नवं कृत्वा यथाविधि ।
प्रतिष्ठाप्य यथान्यायं पूजयेत्पूर्ववत्सुधीः ॥ ६९ ॥

(मण्डपादौ जीर्णबिम्बसंस्कारप्रकारः)

मण्डपे ये स्थिताः देवाः साले वा गोपुरादिषु ।
तेषु जीर्णेषु संस्कुर्यात् एवमेव द्विजोत्तम ॥ ७० ॥
सन्निधानं भवेद्येषु बिम्बेष्वेतेषु देवता ।
अर्चनीया विशेषेण नित्यनैमित्तिकादिषु ॥ ७१ ॥
न चोत्सवो न स्नपनं पवित्रारोहणं न च ।
न बलिर्न च होमश्च न कर्मार्चादिकं तथा ॥ ७२ ॥
सर्वमन्यत्समं प्रोक्तं नैवेद्यान्तं तु पूजनम् ।
अत्र वै जीर्णसंस्कारं मूलबिम्बवदाचरेत् ॥ ७३ ॥

(मृद्बिम्बे विशेषकथनम्)

मृद्बिम्बे यच्च कर्मोक्तं दर्पणे तत्समाचरेत् ।
यत्कर्म तत्र कर्तव्यं अथवा चोत्सवे चरेत् ॥ ७४ ॥
प्रतिष्ठायां न चान्यत्र देशिकः परमार्थवित् ।

(सिद्धावतारितजीर्णबिम्बसंस्कारप्रकारः)

सिद्धावतारिते जीर्णे बिम्बे नोद्वासनं हितम् ॥ ७५ ॥
पूर्ववद्विद्यमानेषु नित्यनैमित्तिकादिषु ।
नवकर्म सदा कार्यं कुशलैस्तु द्विजातिभिः ॥ ७६ ॥

---

७०. a : S. A. M. N. P. ऽवस्थितान् देवान् for ये स्थिताः देवाः.
७१. a : S. My. M. N. यस्मिन् for येषु.
७३. c : S. My. A. M. P. अत्रैव N. तत्रैव for अत्र वै.
७४. a ; b : V. om.
७५. a : S. M. प्रतिष्ठार्चा My. A. प्रतिष्ठा वा for प्रतिष्ठायां.
b : My. मरमात्म for परमार्थ.
७६. a : My. V. वर्तमान for विद्यमाने०.

(सिद्धकल्पितजीर्णविमानसंस्कारविधिः)

प्रासादं तक्षकैर्वापि कुलालैस्तदभावतः ।
दीक्षासंस्कारसंयुक्तैः शूद्रैर्वापि द्विजोत्तम ॥ ७७ ॥
अस्मिन्ननेन विधिना समाप्ते नवकर्मणि ।
कर्म प्रतिष्ठितं कुर्यात् आचार्यो भगवन्मयः ॥ ७८ ॥
एवं जीर्णविमाने तु संस्कुर्यात्सिद्धनिर्मिते ।

(स्वयं व्यक्ते जीर्णबिम्बादौ संस्कारप्रकारः)

एवमेव स्वयं व्यक्ते बिम्बे वायतने द्विज ॥ ७९ ॥
जीर्णे कुर्याद्विमानादौ नान्यथा द्विजपुङ्गव ।

(पौराणिकजीर्णबिम्बादिसंस्कारप्रकारः)

बिम्बे पौराणिके जीर्णे विमाने वाथ गोपुरे ॥ ८० ॥
तत्र बालगृहे यात्रां कृत्वा संस्कारमारभेत् ।

(जीर्णमण्डपादिसंस्कारप्रकारः)

मण्डपे गोपुरे साले जीर्णे कालानलानिलैः ॥ ८१ ॥
अन्यत्राभिमते देशे कृत्वा वै बालमण्डपम् ।
यथेच्छायामविस्तारसमुच्छ्रायसमन्वितम् ॥ ८२ ॥
सालं वा गोपुरं वाथ कटमृत्काष्ठजं शुभम् ।
तत्र देवान् समाहूय ये स्थिता मण्डपादिषु ॥ ८३ ॥

---

८०. d : S. A. M. N. P. केवले for गोपुरे.
८१. a : S. A. M. तत्र बालकृते यत्र.
८२. c : V. आयत for आयाम.
८३. a : My. A. M. N. P. वापि for वाथ.
b : S. A. कर for कट ; My. A. काक॰ for काष्ठ॰.

तत्कर्म कार्यं तत्रैव स्नपनाद्यं द्विजोत्तम ।
ततस्त्वभिनवं कृत्वा पूर्ववन्मण्डपादिकम् ॥ ८४ ॥
स्थापनं च ततः कुर्यात् पूर्वोदिष्टेन वर्त्मना ।

(जीर्णबिम्बादिसंस्कारे सद्यःकल्पनकथनम्)

बिम्बं विमानं प्राकारं गोपुरं मण्डपं तु वा ॥ ८५ ॥
यदा तु जीर्णतां याति तदैवोद्वासयेत्ततः ।
न कालं प्रार्थयेदत्र पश्चादावाहनेऽपि च ॥ ८६ ॥

(अनुक्तकर्मविषये पुरातनाचार्याणां प्रमाणत्वम्)

अनुक्तमत्र यत्कर्म तदाचार्याः पुरातनाः ।
पञ्चरात्रविदः कुर्युः तथैवात्र समाचरेत् ॥ ८७ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
जीर्णसंस्कारविधिर्नाम सप्तदशोऽध्यायः

---

८४. a : My. कर्म कार्य च तत्रैव ; S. A. M. N. P. अत्रैव for तत्रैव.
c : N. तु भवनं for अभिनवम्.
८५. d : My. मण्डपं गोपुरं तु वा.
८६. a : S. A. M. N. P. यत् for तु ; S. M. ०मायाति for ०तां याति.
c : M. तत्र for अत्र.

# अष्टादशोऽध्यायः

## [ध्वजारोहणविधिनिरूपणाध्यायः]

(उत्सवविधिप्रतिपादनार्थं गौतमकृताभ्यर्थना)

**गौतमः—**

उत्सवस्य विधिं ब्रूहि ममेदानीं मुनीश्वर।
यत्कृत्वा साधकः सम्यक् प्रतिष्ठाफलमश्नुते ॥ १ ॥

(उत्सवशब्दार्थप्रतिपादनम्)

**नारदः—**

सव इत्युच्यते यज्ञो विद्वद्भिः साधुसम्मतैः।
उद्भतस्तु सवो यस्मात् तस्मादुत्सव उच्यते ॥ २ ॥

(त्रिविधोत्सवनामकीर्तनम्)

नित्यो नैमित्तिकः काम्यस्त्रिविधश्चोत्सवो मतः।

(नित्योत्सवस्य लक्षणम्)

वत्सरे वत्सरे यस्तु क्रियते स तु नित्यकः ॥ ३ ॥

(नैमित्तिकोत्सवलक्षणम्)

भूमिकम्पे दिशां दाहे महोत्पातेषु सत्सु च।
दुर्भिक्षे व्याधिते राष्ट्रे तथा वै शत्रुसंकटे ॥ ४ ॥

अनावृष्टौ च समये नक्षत्रपतने च खात्।
व्यत्यासे दिशि सूर्यस्य देवताहसने सति ॥ ५ ॥

---

१. c : S. नायकः for साधकः

२. a : My. विघ्नः for यज्ञः.
b : S. N. P. सम्मितैः My. सत्तम for सम्मतैः.
c : A. M. N. P. स for तु.

३. b : S. भवेत् for मतः.

५. c : My. A. निशि for दिशि.

रोदने चाङ्गचलने बिम्बे चलति चासनात् ।
शान्त्यर्थं यत् प्रकुर्वीरन् स नैमित्तिक उच्यते ॥ ६ ॥

(काम्योत्सवस्य लक्षणम्)

फलेच्छया कृतो यस्तु कामिभिः काम्य उच्यते ।

(एकैकोत्सवस्य त्रैविध्यकथनम्)

एकैकमुत्सवं विद्धि त्रिविधं द्विजपुङ्गव ॥ ७ ॥
ध्वजारोहणपूर्वस्तु देवताह्वानपूर्वकः ।
अङ्कुरार्पणपूर्वस्तु विहितस्स्यान्महोत्सवः ॥ ८ ॥

(त्रिविधोत्सवानां फलवर्णनम्)

ध्वजारोहणपूर्वस्तु राजराज्यसुखप्रदः ।
देवताह्वानपूर्वस्तु स्वर्गभोगफलप्रदः ॥ ९ ॥
अङ्कुरार्पणपूर्वस्तु सर्वेषां मोक्षदो भवेत् ।

(एकैकोत्सवस्य षड्विधत्वम्)

एकैकमुत्सवस्तद्वत् षड्विधः समुदाहृतः ॥ १० ॥
द्वादशाहो नवाहश्च सप्ताहश्च तथापरः ।
पञ्चाहस्त्रियहो विप्र तथैकाहस्तु कीर्तितः ॥ ११ ॥

(महोत्सवारंभस्य तीर्थदिनस्य च कालनिर्देशः)

चैत्रादिषु च मासेषु श्रवणर्क्षे प्रशस्यते ।
द्वादश्यां वा महाभाग पञ्चदश्यामथापि वा ॥ १२ ॥

---

६. c : S. P. यत्र My. A. यप्र for यत् प्र० ; My. कुर्वीत for कुर्वीरन्.
७. c : V. विद्यात् for विद्धि.
८. d : My. विदितः for विहितः.
९. b : V. राष्ट्र for राज्य.
१२. b : V. ०षु for ०र्क्षे.

यजमानस्य जन्मर्क्षे ग्रहणे विषुवे तथा ।
अयने वा मुनिश्रेष्ठ नवम्यां वापि कारयेत् ॥ १३ ॥
नगरग्रामजन्मर्क्षे प्रतिष्ठादिवसे तथा ।
प्रासादारंभनक्षत्रे राज्ञो जन्मदिनेऽपि वा ॥ १४ ॥
एकस्मिन्नेषु सर्वेषु तीर्थयात्रा विधीयते ।

(अध्वजोत्सवनिषेधः)

उत्सवं तत्र वक्ष्यामि ध्वजस्थापनपूर्वकम् ॥ १५ ॥
अध्वजश्चोत्सवो यस्तु स न कार्यो हितैषिणा ।

(उत्सवध्वजारोहणकालः)

विनैकाहोत्सवाच्चापि त्रिदिनात् पञ्चवासरात् ॥१६ ॥
तीर्थयात्रादिनादर्वागेकविंशतिमे दिने ।
ध्वजस्यारोहणं कुर्यात् उत्सवार्थं प्रयत्नतः ॥ १७ ॥
एकाहस्य त्रिरात्रस्य पञ्चाहस्य तथैव च ।
सप्ताहस्य नवाहस्य द्वादशाहस्य सुव्रत ॥ १८ ॥
दैविकैर्मानुषैर्विघ्नैः द्रव्याणां सङ्कटेन वा ।
अतिक्रान्ते दिने चास्मिन् एकविंशतिमे दिने ॥ १९ ॥

---

१३. a : V. नक्षत्रे for जन्मर्क्षे.
b : S. ग्रहणादिषु वै तथा.
१४. d : V. राज० for राज्ञो.
१५. a : A. एव for एषु.
d : My. V. ध्वजोत्था० for ध्वजस्था०.
१६. c : M. दिनै० for विनै०, A. S. उत्सवार्चपि for उत्सवाच्चापि.
१७. c : N. आरोपणं for आरोहणम्.
१८. b : S. A. M. N. P. वा for च.
१९. c : S. N. वा० My. A. P. त० for चा०.
d : V. विंशतिके for विंशतिमे.

उत्सवारंभदिवसे ध्वजारोहणमाचरेत् ।

(अङ्कुरार्पणकालः)

ध्वजस्यारोहणं कुर्याद्यस्मिन्नहनि साधकः ॥ २० ॥

तस्यार्वाक् सप्तमे वापि नवमे पञ्चमेऽपि वा ।
अङ्कुरानर्पयित्वा तु यथाविधि समाहितः ॥ २१ ॥

(ध्वजकल्पनप्रकारः)

ध्वजार्थं वस्त्रमाहृत्य क्रीतं वाभिनवं शुभम् ।
प्रासादद्वारमात्रं वा मूलबिम्बसमं तु वा ॥ २२ ॥

पञ्चहस्तायतं वापि चतुस्तालेन विस्तृतम् ।
एकहस्तोन्नतशिरः तथा पादद्वयान्वितम् ॥ २३ ॥

पताकायामविस्तारौ यथाशोभं यथारुचि ।
ध्वजे गरुडमालिख्य द्विभुजं पक्षभूषितम् ॥ २४ ॥

मूलबिम्बस्य नाभ्यन्तो बाह्वन्तो गरुडोच्छ्रयः ।
तीक्ष्णदंष्ट्रं बृहत्कायं नीलकुञ्चितनासिकम् ॥ २५ ॥

तप्तकाञ्चनसंकाशं नवतालक्रमान्वितम् ।
वामपादं समाकुञ्च्य दक्षिणं स्थाप्य भूतले ॥ २६ ॥

कृताञ्जलिपुटं सौम्यम् ईषत्प्रहसिताननम् ।
मुकुटादिविचित्राङ्गं नागराजविभूषितम् ॥ २७ ॥

एवं कृत्वा ध्वजं पश्चात् आनयेद्यागमण्डपे ।

(ध्वजगरुडाक्षिमोचनम्)

ध्वजारोहणनक्षत्रात् पूर्वेद्युर्निशि देशिकः ॥ २८ ॥

---

२३. a : A. My. S. दश for पञ्च० .
२४. a : V. My. A. N. विस्तारं for विस्तारौ.
२६. b : My. A. P. सम० for क्रमा०.
२८. b : V. अर्ध for याग०.

विसृज्य शिल्पिनं पश्चात् संप्रोक्ष्य च यथाविधि ।
दृष्टिमुद्घाटय पक्षीशं 'तच्चक्षु'रिति कीर्तयन् ॥ २९ ॥

(ध्वजगरुडाद्यधिवासक्रमः)

विमानाभिमुखे वापि दक्षिणे वान्यतोऽपि वा ।
हस्तमात्रोन्नते पीठे शालितण्डुलनिर्मिते ॥ ३० ॥

ध्वजं संस्थाप्य यत्नेन ब्राह्मणैः 'स्वस्ति'वाच्य च ।
नवाम्बरधरः पश्चात् पुण्याहं वाचयेत्सुधीः ॥ ३१ ॥

नृत्तगीतशुभाख्यानैः वेदस्याध्ययनैरपि ।
पुरस्तात्तोषयेत्तार्क्ष्यं विन्यस्ताङ्गो जितेन्द्रियः ॥ ३२ ॥

तस्य दक्षिणपार्श्वे तु तथा पीठं प्रकल्प्य च ।
पूर्णं कुम्भं तु संस्थाप्य वस्त्रयुग्मविभूषितम् ॥ ३३ ॥

तस्मिन्नावाहयित्वा तु पक्षीशं पूजयेत्ततः ।
तत्त्वैः संयोजयेत्खेशं सृष्टिसंहारवर्त्मना ॥ ३४ ॥

शान्तिहोमं ततः कुर्यात् नित्याग्नौ पूर्ववद्गुरुः ।
सम्पाताज्येन संस्पृश्य संपूज्य च यथाविधि ॥ ३५ ॥

विनिवेद्य हविः पश्चात् दद्याद्धून्ध्यातुरादिषु ।
ध्वजस्य पुच्छे बध्नीयात् कौतुकं तस्य विद्यया ॥ ३६ ॥

---

२९. c : A. My. उत्पाद्य for उद्घाटय.
३०. c : S. मान for मात्र.
३१. a : S. My. A. M. N. P. देवाग्रे for यत्नेन.
३२. a : V. नृत्तगीतैश्च वाद्यैश्च.
d : M. जगत्प्रियः for जितेन्द्रियः.
३३. c : S. My. M. N. P. पूर्वं for पूर्णं.
३४. c : S. पूजयेत् for योजयेत्; My. ईशं A. N. P. M. वीशं for खेशं.
३६. a : M. ततः for हविः.
c : My. ध्वजवंशे च for ध्वजस्य पुच्छे.

गरुडं शाययेत्पश्चात् शय्यायां दक्षिणामुखम् ।
पताकां वैणवं दण्डं स्तम्भं चैवाधिवासयेत् ॥ ३७ ॥

एवं कृत्वाधिवासं तु रात्रौ जागरणान्वितः ।

(ध्वजपीठस्थानम् तत्र स्तंभस्थापननिर्देशश्च)

प्रभातायां तु शर्वर्यां स्नात्वाचार्यस्तु साधकः ॥ ३८ ॥

नवाम्बरधरो भूत्वा भूषणैरपि भूषितः ।
ध्वजपीठं समासाद्य तृतीयावरणे कृतम् ॥ ३९ ॥

द्वितीयावरणे वापि प्रथमावरणेऽपि वा ।
देवस्याभिमुखं वृत्तं चतुरश्रमथापि वा ॥ ४० ॥

संप्रोक्ष्य गन्धतोयेन स्पृष्ट्वा प्रसृतमुद्रया ।
स्तंभं स्थापयेत्तत्र

(सफेणकस्य स्तंभस्य लक्षणं तस्य स्थापनञ्च)

तस्य लक्षणमुच्यते ॥ ४१ ॥

शततालं समायामं तदर्धार्धायतं तु वा ।
आर्द्रमृजुं नवं स्निग्धं विवरस्फोटवर्जितम् ॥ ४२ ॥

सम्यक् परीक्षयित्वा तु शास्त्रदृष्ट्या द्विजोत्तम ।
वैणवं नालिकेरं वा क्रमुकं तालमेव वा ॥ ४३ ॥

---

३७. c : My. A. N. P. वैष्णव for वैणवं, V. यष्टिं for दण्डं.
३८. d : V. स्नानं कृत्वा for स्नात्वाचार्यः; My. समाहितः for साधकः.
३९. d : S. A. M. N. P. तथा My. ०पिवा for कृतम्.
४०. a : V. विप्र for वापि.
४१. b : A. N. प्रसृति for प्रसृत.
४२. c : S. आर्द My. आद्रं for आर्द्रं, My. A. मृदुं for ऋजुं.
d : My. वक्र for विवर.

अयुग्मपर्वकं शुद्धं सत्वचं फेणकान्वितम् ।
फेणकाः सप्तपञ्चोक्ताः त्रयो वा हस्तसम्मिताः ॥ ४४ ॥

तदर्धविस्तृता वापि चतुरङ्गुलविस्तृता ।
तथा शोभान्विताः सम्यक् सारवन्तो बलीयसः ॥ ४५ ॥

स्तंभाग्रात् संव्यपोह्यैव द्वितालं तालमेव वा ।
अधोधः फेणकाः सर्वे स्थापनीयाः सुनिश्चलाः ॥ ४६ ॥

एकैकस्यान्तरं प्रोक्तं तालं वा हस्तमेव वा ।
एवं कृत्वा ततः स्तंभं क्षालयित्वा तु वारिभिः ॥ ४७ ॥

ब्राह्मणैः स्थापयेत्स्तंभं शूद्रैर्दासैस्तु पावनैः ।
प्रासादाभिमुखं स्थाप्य वालुकाभिस्तु पूरयेत् ॥ ४८ ॥

एवं स्तंभं दृढं गर्ते निश्चलं स्थाप्य यत्नतः ।

(ध्वजारोहणप्रकारः)

ततः प्रविश्य पक्षीशं सम्पूज्यान्नं निवेद्य च ॥ ४९ ॥

होमं कृत्वा यथान्यायं 'गारुडेन' तु मन्त्रवित् ।
वैणवीं यष्टिमादाय सुदृढामभिधाय ताम् ॥ ५० ॥

सपताकध्वजं तत्र योजयित्वा विधानवित् ।
अलङ्कारैरलङ्कृत्य गुरुं सम्पूज्य शक्तितः ॥ ५१ ॥

---

४४. b : My. A. V. N. पेणका for फेणका.
d : S. My. M. संयुताः for संमिताः.
४७. d : V. ०थ for तु.
४८. b : V. वा मुने for पावनैः.
४९. d : S. अभिनिवेद्य My. A. N. P. अधिनिवेश्य for ०ज्यान्नं निवेद्य च.
५१. b : M. N. ०वत् for वित्.
d : V. गुरुन् for गुरुम्, S. चैव हि My. एव तु for शक्तितः.

शङ्खदुन्दुभिनिर्घोषैः गेयनृत्तसमन्वितम् ।
अङ्कुरैः धूपदीपैश्च ध्वजं सम्पूज्य साधकः ॥ ५२ ॥

चत्वारोऽभिनवैर्वस्त्रैः भूषणैरपि भूषिताः ।
प्रासादं तु परिभ्रम्य सर्वेष्वावरणेष्वपि ॥ ५३ ॥

महाजनैश्च संयुक्तं ग्रामं चापि परिभ्रमेत् ।
प्रविश्य देवभवनं सर्वमङ्गलसंयुतम् ॥ ५४ ॥

ध्वजपीठं समासाद्य प्रदक्षिणवशेन तु ।
पुण्याहं वाचयित्वा तु वैष्णवैर्मन्त्रवित्तमैः ॥ ५५ ॥

दीक्षितं शूद्रमाहूय तस्य हस्तेऽर्पयेद्ध्वजम् ।
आरुह्य बध्वा स्तंभाग्रे पाशैः सोऽपि प्रयत्नवान् ॥ ५६ ॥

अवरुह्य शनैः पश्चात् नमस्कुर्याच्च साधकान् ।

(गरुडार्चनविधिः)

आदाय साधितं कुंभं वस्त्रपीठोपरिस्थितम् ॥ ५७ ॥

नववस्त्रधरानीतमाचार्यः स्वस्थमानसः ।
पक्षीशं 'मूल'मन्त्रेण ध्वजं संप्रोक्षयेज्जलैः ॥ ५८ ॥

संपूज्य च यथान्यायं 'तार्क्ष्य'मन्त्रेण मन्त्रवित् ।
'वाहनाय महाविष्णोः तार्क्ष्यायामिततेजसे ॥ ५९ ॥

---

५२. a : V. घोषैश्च for निर्घोषैः.
d : V. संगृह्य for सम्पूज्य.
५३. a : S. M. हि for ०भि०.
५६. a : A. My. S. विप्रम् for शूद्रम्.
५७. a : S. My. A. N. P. स्तम्भात् for पश्चात्
b : S. My. A. N. नमस्कृत्वार्च्य for नमस्कुर्याच्च.
c : S. आधाय for आदाय.
५८. d : My. पूजयेत्तन्त्रवित्तमः.

गरुडाय नमस्तेऽस्तु सर्वसर्पेन्द्रमृत्यवे’।
अनेन ‘मूल’मन्त्रेण पूजयेत्तन्त्रवित्तमः ॥ ६0 ॥
अङ्गानि परमन्त्राणां न्यस्तव्यानि न देशिकैः।

(स्तंभमूलस्थवेदिकायां परिवारार्चनक्रमः)

मेखलात्रयसंयुक्तां वेदिकां पद्मभूषिताम् ॥ ६1 ॥
स्तंभमूले शुभां कृत्वा परिवारांस्तु कल्पयेत्।
प्रथमावरणे स्थाप्याः शङ्खचक्रादयो द्विज ॥ ६२ ॥
द्वितीयावरणे स्थाप्याः लोकपालाः स्वदिक्षु वै।
तृतीयावरणे स्थाप्याः कुमुदाद्यास्तु भूतपाः ॥ ६३ ॥
एतान् सम्पूज्य विधिवत्

(गरुडं प्रति ज्ञापनक्रमः)

इमं मन्त्रमुदीररयेत्।
‘नमोऽस्तु वैनतेयाय नमस्ते गरुडाय च ॥ ६४ ॥
पन्नगाश नमस्तेऽस्तु नमस्तेऽस्तु गणाधिप।
कल्याणार्थं हरेरत्र तिष्ठ नित्यं महाबल ॥ ६५ ॥
यावत्समाप्यते यागस्तावत्पक्षिगणेश्वर’।
एवं ध्वजं समारोप्य दिवैव गुरुरात्मवान् ॥ ६६ ॥

---

६0. b : My. सर्व० for सर्प०.
d : V. मन्त्र for तन्त्र.

६1. a : M. अन्नाति for अङ्गानि, My. तन्त्रा for मन्त्रा०.
b : P. न्यस्तव्यं तस्य देशिकः.

६४. b : A. My. दिक्षु for इमं.
d : My. A. P. वै for च.

६५. a : S. पन्नगाशी My. A. M. N. P. पन्नगाशिं for पन्नगाश.

(कामनानुसारं ध्वजारोहणादिकालविवेकः)

दिवैवारोपयेद्देवं भूमिगानां तु वृद्धये ।
अन्तरिक्षचराणां तु रात्रौ कुर्वीत वृद्धये ॥ ६७ ॥

तदा प्रभृति तत्रैव पूजयेद्विधिपूर्वकम् ।
त्रिकालं वा द्विकालं वा एककालमथापि वा ॥ ६८ ॥

(ध्वजपतनादिप्रायश्चित्तनिर्देश)

परिभ्रमणकाले तु ध्वजस्तु पतितो यदा ।
वायुना वा प्रमादेन तमुद्धृत्य तदैव हि ॥ ६९ ॥

प्रोक्षयेत्तमभिन्नश्चेत् 'पञ्चोपनिषदै'र्जलैः ।
'पुण्याहं' वाचयित्वा तु शेषकर्म समापयेत् ॥ ७० ॥

भिन्नश्चेत्तं परित्यज्य सम्पाद्यान्यं तु पूर्ववत् ।
संस्कृत्य पूर्ववत् पश्चात् शेषं कर्म समाचरेत् ॥ ७१ ॥

(ध्वजारोहणदिने देवपूजनक्रमः)

तस्मिन्नहनि देवेशं स्नापयेद्विधिपूर्वकम् ।
महाहविर्निवेद्याथ ब्राह्मणानपि पूजयेत् ॥ ७२ ॥

(उत्सवे देवताह्वानविधिः 'भेरीताडनम्')

सम्प्राप्तायां निशायां तु देवावाहनमारभेत् ।
ध्वजस्य दक्षिणे पूर्वे कृत्वा गोमयमण्डलम् ॥ ७३ ॥

पिष्टचूर्णैरलङ्कृत्य धान्यपीठं प्रकल्पयेत् ।
पटहं तत्र विन्यस्य वस्त्रेण परिवेष्टितम् ॥ ७४ ॥

---

६९. b : V. A. यदि for यदा.
d : A. M. V. तथा for तदा.

७०. d : My. समाचरेत् for समापयेत्.

७३. b : My. देववाहन for देवावाहन°.
c : S. My. A. M. N. P. ध्वजपीठस्य पीठे तु.

कोणदक्षिणतः स्थाप्य पूजयित्वा यथाविधि ।
ब्राह्मणाच्छूद्रकन्यायां जातः पारशवः स्मृतः ॥ ७५ ॥

तेनैव वादनं कुर्यात् ग्रामे वा नगरेऽपि वा ।
घोषयित्वालयं तत्र प्रदक्षिणवशेन तु ॥ ७६ ॥

पश्चाद्ग्रामं परिभ्रम्य सर्वालङ्कारसंयुतम् ।
तथैव घोषयित्वा तु 'तारका'द्यमुदीरयन् ॥ ७७ ॥

दिक्षु सर्वासु कृत्वैवं प्रविशेदालयं शनैः ।
एवं ग्रामं परिभ्रम्य प्रासादं संप्रविश्य तु ॥ ७८ ॥

गरुडस्थानमासाद्य घोषयित्वा खगध्वजम् ।
तालिकैः स्तुतिरवैश्च विष्वक्सेनं च तोषयेत् ॥ ७९ ॥

अनेन विधिना देवाः आहूताः स्युर्न संशयः ।
उत्सवारंभदिवसे ध्वजस्यारोहणं यदि ॥ ८० ॥

सहध्वजोत्सवेनैव देवतावाहनं स्मृतम् ।
देवतावाहनं येऽत्र द्रष्टुकामाः समागताः ॥ ८१ ॥

तदा प्रभृति ते तस्मान्नगच्छेयुर्हितेप्सवः ।
अज्ञानाद्यदि गच्छेयुः ते भविष्यन्ति रोगिणः ॥ ८२ ॥

रोगाद्विमुक्तिमिच्छन्तः पुनरागत्य देशिकम् ।
पूजयित्वा नमस्कृत्य वैनतेयं च वैष्णवान् ॥ ८३ ॥

---

७५. a : S. My. A. V. कोणं for कोण०.
d : My. N. पाखश: for पारशवः.
७६. c : S. M. N. P. योज० for घोष०.
७७. c : A. My. तदा for तथा.
d : M. तारं गाथाम् for तारकाद्यम्.
८१. c : My. A. N. M. यत्र for येऽत्र.
d : My. M. समाहिताः for समागताः.
८२. b : V. इच्छवः for इप्सवः.
८३. b : V. पुरागत्याधिदेशिकम्, My. A. P. आगम्य for आगत्य.

तीर्थयात्रां तु संसेव्य भविष्यन्ति हि नीरुजः ।

(उत्सवे ग्रामाद्यलङ्करणकथनम्)

यदा वै देवताह्वानं तदा प्रभृति नित्यशः ॥ ८४ ॥

आलयं समलङ्कुर्यात् ग्रामस्यान्यतमं तु वा ।
मार्जनं सर्ववीथीनां सक्तासक्तयथाविधि ॥ ८५ ॥

उत्थापयित्वा केतूंश्च तोरणानि च शक्तितः ।
ग्रामद्वारेषु सर्वेषु तथा चैव चतुष्पथे ॥ ८६ ॥

सभाद्वारेषु सर्वेषु क्रमुकैस्तोरणैस्तथा ।
तथैव कदलीस्तंभैः केतुमालाविभूषितैः ॥ ८७ ॥

अलङ्कुर्यात् विशेषेण ग्राममध्यं विशेषतः ।

(द्वादशाहाद्युत्सवे ध्वजारोहणदिनविवेकः)

द्वादशाहं नवाहं वा सप्ताहं वा महोत्सवम् ॥ ८८ ॥

पञ्चाहं त्रयहं वापि तद्वदेकाहमेव वा ।
यस्मिन् दिने तु विप्रेन्द्र ध्वजस्यारोहणं कृतम् ॥ ८९ ॥

द्वादशाहोत्सवारंभं तस्मात्तु दशमेऽहनि ।
एवं त्रयोदशदिने नवाहोत्सवमारभेत् ॥ ९० ॥

तद्वत्पञ्चदशाहे तु सप्ताहोत्सवमारभेत् ।
तद्वत्सप्तदशाहे तु पञ्चाहोत्सवमारभेत् ॥ ९१ ॥

---

८५. b : S. My. A. M. वा० for ०स्या०.
d : S. M. A. N. P. सिक्ता सिकता for सक्तासक्त.

८६. c : My. ग्रामे for ग्राम०.

८८. b : V. मध्ये for मध्यं.

८९. a : V. N. P. त्र्यहं for त्रयहं.

९१. a : V. तथा for तद्वत्.

तथा नवदशाहे तु तत्ल्यहोत्सवमारभेत् ।
तथैकाहोत्सवारंभः एकविंशद्दिने द्विज ॥ ९२ ॥
एकविंशद्दिनादूर्ध्वम् उत्सवं न समारभेत् ।

(अङ्कुरार्पणकालनिर्देशः)

उत्सवारंभदिवसात् अर्वाग्वै पञ्चमेऽहनि ॥ ९३ ॥
कृत्वाङ्कुरार्पणं सम्यक् मृदाद्युत्सवकर्मणि ।

(उत्सवे कौतुकबन्धनकालः)

उत्सवारंभदिवसात् पूर्वेद्युर्निशि कौतुकम् ॥ ९४ ॥
बध्वा तु साधकः सम्यक् आधूपकसमन्वितम्
आरंभेदुत्सवं पश्चात् स्नपनाद्यं महामुने ॥ ९५ ॥

इति श्रीपाञ्चरात्ने नारदीयसंहितायां
ध्वजारोहणविधिर्नाम अष्टादशोऽध्यायः

---

९२. b : S. त्रय०. My. त्रिय० for तत्ल्य०.
९३. b : My. A. N. P. आचरेत् for आरभेत्.
९५. b : A. My. आपूपिक for आधूपक.

# एकोनविंशोऽध्यायः

## [महोत्सवविधिनिरूपणाध्यायः]

### (अङ्कुरार्थं मृत्तिकादिसङ्ग्रहप्रकारः)

**नारदः—**

अथातः संप्रवक्ष्यामि महोत्सवविधिं परम् ।
कृत्वा यं साधकः क्षिप्रं कांक्षितं फलमाप्नुयात् ॥ १ ॥

उत्सवार्थं तु विहितं बिम्बं यत्पूर्वलक्षणम् ।
अथवा बलिबिम्बं वा कर्मबिम्बं तु वा द्विज ॥ २ ॥

उत्सवारंभदिवसे पूर्वाह्णे मुनिसत्तम ।
स्नपनं विधिवत्कृत्वा निवेद्य च महाहविः ॥ ३ ॥

अपराह्णे तु सम्प्राप्ते मृदाद्युत्सवमारभेत् ।
शङ्खदुन्दुभिनिर्घोषैः नृत्तगीतसमन्वितैः ॥ ४ ॥

छत्रध्वजवितानैश्च मङ्गलाङ्कुरभाजनैः ।
भक्तैः भागवतैः सार्धं यतिभिर्मुनिभिस्तथा ॥ ५ ॥

प्रासादं तु परिभ्रम्य पुण्योद्याने वनेऽपि वा ।
मृत्तिकां सङ्ग्रहेच्छुद्धां 'क्षिति'मन्त्रेण साधकः ॥ ६ ॥

नद्यास्तु वालुका ग्राह्या करीषं गोकुलात्तथा ।
वाससा वेष्टयित्वा तु शिरसा धारयेद्गुरुः ॥ ७ ॥

---

१. A. M. om नारदः.
४. b : S. A. M. मृता उ० for मृदाद्यु०.
c : V. घोषैश्च for निर्घोषैः.
५. a : A. My. चित्र for छत्र.
६. b : S. My. A. M. तथा for ०पि वा.
c : S. My. M. चूर्णं for शुद्धां.
d : A. My. S. देशिकः for साधकः.

ग्रामं प्रदक्षिणं कृत्वा

(अङ्कुरार्थं पालिकान्यासक्रमः)

प्रविश्याथ हरेर्गृहम् ।

देवस्य पुरतो वापि देशे वाभिमते शुभे ॥ ८ ॥

मण्डलं तु शुभं कृत्वा शकृता सुशुभेन तु ।
पिष्टचूर्णैरलङ्कृत्य चतुरश्रं समन्ततः ॥ ९ ॥

कोष्ठकानां चतुःषष्टिं तथा कुर्याद्विचक्षणः ।
मध्येऽष्टदिक्षु नवकं चतुःकोष्ठं प्रकल्पयेत् ॥ १० ॥

शालिभिः पीठकास्तत्र कार्याः पञ्चाङ्गुलोन्नताः ।
एको द्वौ बहवो वापि विज्ञेयाः देशिकोत्तमाः ॥ ११ ॥

नवाम्बरधराः सर्वे सोत्तरीयाः अलङ्कृताः ।
न्यसेद्वै पालिकास्तेषु दूर्वाकाण्डाद्यलङ्कृताः ॥ १२ ॥

(पालिकोपादानद्रव्यनिर्देशः)

लोहजा पालिका कार्या मृण्मया वा सलक्षणा ।

(पालिकायाः त्रिविधत्वम्)

पालिकास्त्रिविधाः प्रोक्ताः मङ्गलाङ्कुरकर्मणि ॥ १३ ॥

पालिका घटिका चैव शरावाश्च त्रिभेदतः ।

(पालिकालक्षणम्)

साङ्गुलं चैकहस्तं वै पालिकोच्छ्राय उच्यते ॥ १४ ॥

---

९. b : S. सकृदास्युशुभेन तु ; V. सकृतानद्यहेन तु.

१०. a : V. कोष्ठानां च for कोष्ठकानां.
 d : A. My. S. कोणं for कोष्ठं.

१२. b : V. त्वल० for अल०.
 c : S. A. M. वालुका for पालिका.

१३. b : S. वोपलक्षणाः for वा सलक्षणा.

१४. c : S. M. तैक S. च for वै.

पालिकावक्त्रविस्तारमुच्यते षोडशाङ्गुलम् ।
उन्मत्तकुसुमाकारं वक्त्रं पद्माकृतिर्भवेत् ॥ १५ ॥
उत्सेधः पालिकायास्तु तदर्धं वा सविस्तरम् ।

(घटिकालक्षणम्)

षोडशाङ्गुलमायामं घटिकायाः प्रकीर्तितम् ॥ १६ ॥
घटिका पञ्चवक्त्रा स्यात्तदूर्ध्वं कलशाकृतौ ।
उत्सेधस्तु तदर्धं वा

(शरावस्य लक्षणम्)

शरावस्याधुनोच्यते ॥ १७ ॥
उत्सेधश्चोर्ध्वविस्तारात् द्वादशाङ्गुलमुच्यते ।
चतुरङ्गुलविस्तारमधस्तात्पीठसंयुतम् ॥ ॥ १८ ॥

(पालिकाधिदेवता)

पालिका वैष्णवी चान्या ब्राह्मी शैवं शरावकम् ।
त्रिदैवतं तु विज्ञेयं यागेषु त्रितयं भवेत् ॥ १९ ॥

(अङ्कुरार्थं पालिकादिसंख्या)

केवला वैष्णवी वापि पालिका षोडश द्विज ।
पालिका षोडश प्रोक्ता घटिका षोडश द्विज ॥ २० ॥
शरावं द्वादशप्रोक्तं मङ्गलाङ्कुररोपणे ।

(अङ्कुरबीजानि)

व्रीहिमुद्गतिलाः श्यामाः शिम्बनिष्पावसर्षपाः ॥ २१ ॥

---

१६. a : My. om उत्सेधः.
d : A. घटिकायामं for घटिकायाः.
१७. b : S. वृत्तम् for ०कृतौ.
१९. c : S. त्रिदिवं तत for त्रिदैवतं तु.
२०. c : My. A. M. P. द्वादश for षोडश.
d : My. द्वादश for षोडश.
२१. c : V. शासाः for श्यामाः.

प्रियङ्गुमाषकौलत्थाः बीजान्येतानि चोच्यते ।

(अङ्कुरबीजावापक्रमः)

पयसा दश बीजानि क्षालयेद्'द्वादशा'त्मना ॥ २२ ॥

दशभिर्नामधेयैस्तु चतुर्थ्यन्तैः पृथक् पृथक् ।
पूजयित्वा तु गन्धाद्यैः वाससा परिवेष्ट्य च ॥ २३ ॥

मृदाद्यै'र्मूल'मन्त्रेण पूरयेत्पालिकाः क्रमात् ।
घृतारोपणपूर्वं तु तेन सम्पूजयेत्ततः ॥ २४ ॥

'जितन्त' इति मन्त्रेण सर्वबीजानि वापयेत् ।
'द्वादशाक्षर'मन्त्रेण सिञ्चेद्धारिद्रवारिणा ॥ २५ ॥

परिवेष्ट्य ततो वस्त्रैः नवैस्तु सदशैश्शुभैः ।

(भूतक्रूरबलिदानादिक्रमः)

भूतक्रूरबलिं दद्यात् अष्टदिक्षु यथाक्रमम् ॥ २६ ॥

भूतानां कुमुदादीनां पूर्वदिक्क्रमयोगतः ।
तदा प्रभृति ताः सर्वा रक्षन्ति कुमुदादयः ॥ २७ ॥

एवं सर्वेषु यागेषु मङ्गलाङ्कुरमाचरेत् ।
निष्फलाः सर्वयज्ञास्तु मङ्गलाङ्कुरवर्जिताः ॥ २८ ॥

(अङ्कुरार्पणस्य रात्रौ कर्तव्यतायां कारणम्)

वृक्षाणामधिपः सोमो ओषधीशोऽमृतात्मकः ।
सोमौषधिद्वयबलात् रात्रावेवाङ्कुरार्पणम् ॥ २९ ॥

---

२२. a : S. My. A. M. P. श्याम for माष.

२३. c : S. M. P. गव्याद्यैः for गन्धाद्यैः.

२६. b : My. दशभिः for सदशैः.

२७. a : इतः आरभ्य श्लोकसंख्या. ३५. c : यावत् स्थितः पाठः केवलं V. कोषे उपलभ्यते ।

(गुप्त्यै अङ्कुराणां स्थापनादिकम्)

क्रमादुद्धृत्य ताः सर्वाः सुगुप्त्यै स्थापयेत्ततः ।
पञ्चसप्तनवाहे वा कुर्यादेवं महोत्सवे ॥ ३० ॥
एकद्वित्रिदशाहे तु [चतुर्थे] पञ्चमेऽपि वा ।
तीर्थयात्रादिनादर्वाक् कारयेदङ्कुरार्पणम् ॥ ३१ ॥
विधिवद्यागसिद्धिः स्यात् मङ्गलाङ्कुरवर्धनात् ।

(उत्सवरात्रबलिदैवतवर्णनम्)

दद्याद्दिने रजन्यां च प्रतिरात्रं बलिं पृथक् ॥ ३२ ॥
प्रथमं सर्वभूतानां रात्रं प्रीतिकरं भवेत् ।
भक्त्या गच्छन्ति ये देवं भवन्त्यघविवर्जिताः ॥ ३३ ॥
द्वितीयं पैत्रिकं रात्रं पितृणां प्रीतिवर्धनम् ।
रात्रं तृतीयं यक्षाणां सर्वलोकेष्टसिद्धिदम् ॥ ३४ ॥
सर्वरक्षाकरं मन्त्रं नागानां तु चतुर्थकम् ।
पञ्चमं ब्रह्मणो रात्रं रात्रं षष्ठं शिवस्य तु ॥ ३५ ॥
सप्तरात्रात्समारभ्य वैष्णवं सकलं परम् ।

(प्रतिदिनं दीयमानानां बलीनां द्रव्यदेवताविवेकः)

निशाचूर्णं तु पललं सलाजं दधि सक्तुकम् ॥ ३६ ॥
भूतक्रूरमिति प्रोक्तं तेषां तेन बलिं क्रमात् ।
द्वितीये पैत्रिके दद्यात् सतिलैः शालितण्डुलैः ॥ ३७ ॥
लाजया मधुबीजैश्च यक्षरात्रिबलिं क्रमात् ।
नालिकेरपयः पिष्टशक्तुभिश्चापरेऽहनि ॥ ३८ ॥

---

३६. b : V. पदम् for परम्.
३७. d : S. P. सलिलैः for सतिलैः.
३८. a : My. V. धानोडुम्बिकलाजैश्च.
 c : V. पृष्ट for पिष्ट.

दद्यान्नागबलिं पश्चात् ब्राह्मं पद्माक्षतैः क्रमात् ।
यवैश्च चरुणापूपैः गुलान्नेन च वैष्णवम् ॥ ३९ ॥

अष्टमे पायसं प्रोक्तं नवमे कृसरं तथा ।
शुद्धान्नं दशमे दद्यात् मुद्गान्नमपरेऽहनि ॥ ४० ॥

द्वादशाहे बलिं दद्यात् क्षीरं दध्याज्यमिश्रितम् ।
शुद्धान्नं शालिजं विप्र गुडखण्डसमन्वितम् ॥ ४१ ॥

(महोत्सवे होमक्रमः)

विधिहोमं ततः कुर्यात् कुण्डं कृत्वा विधानतः ।
यात्रान्तं नित्यकुण्डे वा धूमच्छेदं न वा भवेत् ॥ ४२ ॥

अष्टोत्तरसहस्रेण अष्टोत्तरशतेन वा ।
आचार्यो 'मूल'मन्त्रेण विष्णुयागपरायणः ॥ ४३ ।

ब्रह्मवृक्षसमिद्भिस्तु पुष्पैः पद्मादिकैस्तथा ।
धूपेन मधुपर्केण शालिबीजतिलैस्तथा ॥ ४४ ॥

सुसितान्नेन चाज्येन परिवाराङ्गसंयुतम् ।
ततः 'पुरुष'सूक्तेन प्रत्येकं षोडशाहुतीः ॥ ४५ ॥

'पञ्चोपनिषदा' पञ्च बलिद्रव्येण होमयेत् ।
यात्राधिदेवतामन्त्रं ध्यात्वा तेनैव होमयेत् ॥ ४६ ॥

---

३९. a : S. याग for नाग.
४२. a : V. सिद्धि for विधि.
c : A. S. V. यात्रार्थं for यात्रान्तं ; V. च for वा.
४३. a : V. सहस्रं वा for सहस्रेण.
b . V. शतं तुवा for शतेन वा.
४४. a : My. लक्ष for वृक्ष.
४५. a : A. My. S. असित० for सुसित०.
४६. c : My. S. यत्रा for यात्रा०.
d : V. तेनाभि० for तेनैव.

रात्राधिदेवतामन्त्रं ध्यात्वा 'मूलं' जपेद्गुरुः ।

(द्वादशरात्रोत्सवे प्रतिरात्राणां देवताः)

शृणु द्वादशरात्राणां क्रमाद्वक्ष्येऽधिदैवतम् ॥ ४७ ॥

वराहपूर्वाः कृष्णान्ताः सप्तरात्राधिदैवतम् ।
अष्टमस्य तथा कल्की मत्स्यात्मा नवमस्य तु ॥ ४८ ॥

सर्वाधारस्तु कूर्मात्मा दशमस्याधिदैवतम् ।
एकादशस्यानन्तात्मा तथा नारायणः प्रभु ॥ ४९ ॥

क्रमाद्द्वादशरात्राणां दैवतं परिकीर्तितम् ।

(मण्डले बलिदानक्रमः अङ्कुरसंरक्षणञ्च)

एवं कृत्वाग्निकार्यं तु साधको मुनिसत्तम ॥ ५० ॥

पालिकानान्तु परितः क्रमादष्टासु दिक्षु च ।
बलिं तु मण्डले दद्यात् सेन्द्रादिक्रमयोगतः ॥ ५१ ॥

भूतानां कुमुदादीनां नमोन्तैस्तु स्वनामभिः ।
यदा चोप्तानि बीजानि तदा प्रभृति नित्यशः ॥ ५२ ॥

न कश्चित् प्रविशेदत्र न स्पृशेद्वा कथञ्चन ।
आचार्य एव प्रविशेत्तच्छिष्यो वा समाहितः ॥ ५३ ॥

उच्छिष्टादीनि सर्वाणि दूरतः परिवर्जयेत् ।
अदत्वा तद्बलिं काञ्चिन्न कुर्यात् पालिकाक्रियाम् ॥ ५४ ॥

---

४७. a : S. A. M. राष्ट्रा० for रात्रा०, S. A. M. अन्तं for मन्त्रम्.
b : S. A. M. P. मन्त्रं for मूलम्.

४८. c : My. कूर्म for कल्की.

५२. a : S. My. भूमान्तं A. M. भूतान्तं for भूतानाम्.

५४. b : S. My. A. M: दूरेण for दूरतः.
c : V. तु for तत्.

(महोत्सवे आचार्यसंख्यादिनिर्देशः)

चत्वारोऽष्टौ द्वादश वा प्रारभेयुर्महोत्सवम् ।
सुसितैर्नववस्त्रैस्तु भूषिताः भूषणैरपि ॥ ५५ ॥

समाहितास्तु शुचयः कृतदन्तानुधावनाः ।
हविष्यान्नभुजो हृष्टाः आचार्याः बहवः स्मृताः ॥ ५६ ॥

गुरोरनुज्ञया युक्ताः प्रधानस्य विपश्चितः ।
होमशेषं तु कुर्वीत युक्त एकः प्रसन्नधीः ॥ ५७ ॥

आनयेयुः बलिं चान्ये पूजयेयुः परेऽहनि ।

(महोत्सवविधिनिरूपणम्)

रथं वा कुञ्जरं वापि शिबिकां वा स्वलङ्कृताम् ॥ ५८ ॥

एषामलाभे प्रियं वा सम्पूज्य गरुडात्मना ।
तत्रोत्सवार्चामारोप्य बलिबिम्बं तु वा द्विज ॥ ५९ ॥

कर्तुरिच्छावशेनैव कर्मार्चां वा विभूषिताम् ।
पूजयित्वार्घ्यपाद्याद्यैः स्तुत्वा प्रतिसरान्विताम् ॥ ६० ॥

शङ्खदुन्दुभिनिर्घोषैः जयनादसमन्वितैः ।
स्तुतिभिर्नृत्तगीतैश्च ध्वजैर्नानाविधैस्तथा ॥ ६१ ॥

रामाभिर्वारमुख्याभिः सलीलाभिरितस्ततः ।
वैष्णवैर्यतिभिर्विप्रैः साधकैः भगवन्मयैः ॥ ६२ ॥

---

५६. a : V. च for तु.
c : S. दिव्या० for हविष्या०.

५७. b : S. प्राधान्य for प्रधानस्य.
c : My. V. होममेषां for होमशेषम्.

६०. c : A. S. V. पुष्प for पाद्य०.

६१. a : S. शब्द० for शङ्ख०, V. घोषैश्च for निर्घोषैः.
b V. शब्द for नाद.

६२. b : V. यतस्ततः for इतस्ततः.

हृष्टपुष्टजनैरन्यैः वन्दिभिः सूतमागधैः ।
शिल्पिभिः कृतहस्तैश्च निपुणैर्बलिभिस्तथा ॥ ६३ ॥

वैतालिकैश्च शैलूषैः मल्लाद्यैश्च समाकुलैः ।
वाहयेद्ब्राह्मणैर्देवं शिबिकास्थं प्रसन्नधीः ॥ ६४ ॥

देवस्य पुरतो दूराद्गच्छेयुः बलिदायिनः ।
प्रदक्षिणं परिभ्रम्य प्रासादं तु पुनः पुनः ॥ ६५ ॥

प्रदीपशतसंयुक्तं रात्रौ कार्यं महोत्सवम् ।
नगरं पत्तनं ग्राममन्यद्वा समलङ्कृतम् ॥ ६६ ॥

प्रदक्षिणं परिभ्रम्य बलिदानपुरस्सरम् ।
अष्टदिक्षु बलिं दत्वा ग्राममध्ये समापयेत् ॥ ६७ ॥

कुमुदाद्यास्तु भूतेशाः तेन तृप्यन्ति नित्यशः ।
बलिमन्त्रं स्वनाम्ना तु तेषां चैव नमोऽन्वितम् ॥ ६८ ॥

भूतक्रूरबलिं दद्यात् अस्यां रात्रौ यथाविधि ।

(ग्रामयात्रोद्यतदेवार्चनादिफलम्)

ग्रामयात्रोद्यतं देवं योऽर्चयेद्भक्तिपूर्वकम् ॥ ६९ ॥

भक्ष्यैर्भोज्यैश्च लेह्यैश्च चोष्यैः पेयैः सुसंस्कृतैः ।
तस्य पुण्यफलावाप्तिं कश्शक्नोत्यभिवर्णितुम् ॥ ७० ॥

---

६३. a : My. A. M. रम्यैः for अन्यैः.
६४. d : My. A. शिबिकाः सं० for शिबिकास्थम्.
६५. c : S. परिक्रम्य for परिभ्रम्य.
d : V. प्रासादान्तं for प्रासादं तु.
६७. c : S. A. M. P. चतुर for अष्ट.
६९. b : My. A. रात्र्यां for रात्रौ.
c : V. om देवं.

अनुगच्छन्ति ये भक्ता कौतुकं कौतुकान्विताः ।
विमुक्तकल्मषास्ते स्युः क्रमात् पारिषदेश्वराः ॥ ७१ ॥

नृत्यन्त्यत्र च ये हर्षात् लुठन्ति च रमन्ति च ।
आस्फोटयन्ति ये हर्षात् अपवर्गं समाप्नुयुः ॥ ७२ ॥

(ग्रामयात्रायाः अनन्तरमालये देवस्य पुनरानयनादिक्रमः)

ग्रामं च भ्रामयित्वैवं प्रासादं च पुनः पुनः ।
पूर्ववत्पूजयित्वा तम् अवरोप्य च वाहनात् ॥ ७३ ॥

प्रासादे स्थापयित्वा तु पुष्पैराराध्य केवलैः ।
मूलबिम्बे यथापूर्वं 'मूले'न प्रतिरोपयेत् ॥ ७४ ॥

(उत्सवे उत्सवादिबिम्बोपयोगे विशेषः)

यदोत्सवार्चा कर्मार्चा नियुक्ता वा महोत्सवे ।
तदैकदैव कुर्वीत रात्रावहनि चोत्सवम् ॥ ७५ ॥

यदा महोत्सवविधौ बलिबिम्बं प्रयुज्यते ।
कालयोरुभयोस्तद्वत् कर्तुरिच्छानुरूपतः ॥ ७६ ॥

तत्रोत्सवार्चया कुर्यात् एकदा नित्यमुत्सवम् ।
यथाभिमतकाले तु यथाभिमतवीथिषु ॥ ७७ ॥

---

७१. d : S. पार्श्वदे My. पार्षपदे for पारिषदे०.
७२. a : S. नृत्यन्तः for नृत्यन्ति.
b : S. My. A. M. नन्दन्ति for लुठन्ति.
c : S. My. A. M: हर्षन्ति for ये हर्षात्.
७३. c : My. A. तु for तम्.
७५. b : My. A. नक्तार्चा for नियुक्ता
c : S. V. तत् for तदा.
७६. c : S. A. M. तत् for वत्.

(उत्सवबिम्बाभावे प्रतिनिधिः)

असत्यामुत्सवार्चायां कर्मबिम्बे समाचरेत् ।

(निशोत्सवावसाने अभिषेकनिषेधः)

निशोत्सवावसाने तु नाभिषिञ्चेज्जनार्दनम् ॥ ७८ ॥

प्रत्यहं देवदेवस्य स्नपनं चाह्नि कारयेत् ।

(उत्सवे नित्याराधनादिप्रकारः)

पूर्वस्माद्द्विगुणैर्भोगैः नित्याराधनमुच्यते ॥ ७९ ॥

ब्राह्मणान् भोजयेन्नित्यं दीक्षितांश्च विशेषतः ।
एवं कृत्वोत्सवं सम्यक् प्रथमेऽहनि साधकः ॥ ८० ॥

अह्निप्रदक्षिणं कुर्याच्छेषेषु दिवसेषु च ।
दिवोत्सवान्ते देवेशं स्नानाद्यैः पूजयेत्सदा ॥ ८१ ॥

सहस्रधारया स्नानं कृत्वा 'मूले'न मन्त्रवित् ।
अलङ्कृत्य यथान्यायं यथाशोभं यथारुचि ॥ ८२ ॥

अम्भसा कलशं पूर्णं पत्रपुष्पाद्यलङ्कृतम् ।
दीपपात्रेण संयुक्तं भ्रामयित्वा तु मूर्धनि ॥ ८३ ॥

---

७८. a : My. हीनायाम् for असत्याम्.
c : S. My. A. ०सानं for ०साने.
d : My. अभि० for नाभि.

७९. c : S. My. A. यत्न for भोगैः.
d : My. कथ्यते for उच्यते.

८०. b : S. वा for च.

८१. a : S. My. अग्नि for अह्नि.
c : My. V. दीपो for दिवो०.
d : S. My. M. स्नानान्तं for स्नानाद्यैः.

८३. c : V. मात्रेण for पात्रेण.

एकधा वा त्रिधा वापि देवमूर्धोपरि क्रमात् ।
देवागाराद्बहिः पश्चात् 'क्षिपेदि'ति विसर्जयेत् ॥ ८४ ॥

भोज्यासनं ततो दत्त्वा पाद्यमाचमनं तथा ।
मधुपर्कं तथाचामं ताम्बूलं गन्धभावितम् ॥ ८५ ॥

ततश्चाचमनं दत्त्वा विनिवेद्य महाहविः ।
राजोपचारमार्गेण मुखवासावसानकम् ॥ ८६ ॥

एवं दिने निशीथे च कुर्यादेव महोत्सवम् ।
एवं नित्यं परिभ्राम्य दत्त्वा तत्तद्बलिं क्रमात् ॥ ८७ ॥

(महोत्सवाङ्गरूपे तीर्थोत्सवे प्रतिसरबन्धविज्ञापनप्रकारः)

रात्रौ प्रतिसरारंभं पूर्वेद्युः कारयेत्सुधीः ।
सौवर्णं राजतं वापि ताम्रजं वाल्पविग्रहम् ॥ ८८ ॥

बिम्बं तु तीर्थयात्रार्थं शङ्खचक्रसमन्वितम् ।
वामेन कटिमालम्ब्य पाणिना वामपार्श्वतः ॥ ८९ ॥

वनमालान्वितं हस्तं दक्षिणं स्वागतान्वितम् ।
अथवा नित्यपूजायां विहितं कौतुकं तु वा ॥ ९० ॥

अलाभे त्वस्य बिम्बस्य बलिबिम्बं तु वा भवेत् ।
तत्र सायं परिभ्रम्य दत्त्वा च बलिमुत्तमम् ॥ ९१ ॥

---

८४. b : V. भ्रमेत् for क्रमात्.
d : My. दिवि for इति.
८७. a : S. M. तु for च.
b : A. P. एवं for एव.
c : A. My. S. भ्रम्य for भ्राम्य.
८९. c : M. आलम्य for आलम्ब्य.
d : My. V. पार्श्वयोः for पार्श्वतः.
९०. a : S. My. A. M. नव for वन ; V. अङ्कितं for अन्वितम्.

प्रविश्य देवमाचार्यः प्रार्थयेत्तदनन्तरम् ।
तीर्थयात्रा त्वया देव श्वः कर्तव्या सुरेश्वर ॥ ९२ ॥

तत्र प्रतिसरारंभं त्वमनुज्ञातुमर्हसि ।
इति विज्ञाप्य देवेशमाचार्यस्तदनन्तरम् ॥ ९३ ॥

(प्रतिसरबन्धनप्रकारः)

प्रासादाभ्यन्तरे कुर्यात् वेदिकां व्रीहिभिः शुभाम् ।
हस्तमात्रोन्नतायामविस्तारां पद्मसन्निभाम् ॥ ९४ ॥

वासोभिर्वेष्टयित्वा तां चतुरश्रायतां क्रमात् ।
प्ररोहघटिकाभिस्तु शरावैस्तु चतुर्दिशम् ॥ ९५ ॥

कोणेष्वलङ्कृतां कृत्वा चतुर्भिः क्रमयोगतः ।
तस्यां संस्थापयेत्पश्चात् यात्राबिम्बमलङ्कृतम् ॥ ९६ ॥

दीक्षितैर्वैष्णवैस्तत्र घृतारोपणमादितः ।
कारयित्वा विधानेन 'शाकुनं' सूक्तमुच्चरन् ॥ ९७ ॥

दर्पणं दर्शयेत्पश्चात् मङ्गलानि च दर्शयेत् ।
शङ्खदुन्दुभिनिर्घोषैः जयशब्दैश्च नादयेत् ॥ ९८ ॥

ऊर्णामयेन सूत्रेण क्षौमसूत्रयुतेन च ।
अङ्गुष्ठानामिकाभ्यां तु सादयित्वा विचक्षणः ॥ ९९ ॥

ततश्चोभयहस्ताभ्यां दक्षिणे भगवत्करे ।
'जितन्त' इति मन्त्रेण बध्नीयात् साधकः क्रमात् ॥ १०० ॥

एवं सर्वेषु यागेषु कुर्यात् कौतुकबन्धनम् ।
चामरैस्तालवृन्तैश्च वीजयेन्मङ्गलान्वितम् ॥ १०१ ॥

---

९२. a : A. M. S. प्रवेश्य for प्रविश्य.
९५. c : S. My. A. यष्टिका for घटिका०.
९६. b : S. My. A. शोभितः for योगतः.
९८. c : V. घोषैश्च for निर्घोषैः
९९. d : S. राध० for साद०.

एणकायां तु क्लृप्तायां निवेश्य प्रतिमां ततः ।
रात्निशेषं समासीत अनिर्वाणैः प्रदीपकैः ॥ १०२ ॥

गुग्गुल्वगरुधूपैश्च धूपयित्वा विचक्षणः ।

(तीर्थोत्सवक्रमः)

आचार्यः प्रातरुत्थाय स्नात्वा जप्त्वा यथाविधि ॥ १०३ ॥

उत्सवं पूर्ववत्कृत्वा तस्मिन्नहनि पूर्ववत् ।
प्रविश्य देवभवनं संस्नाप्योत्सवकौतुकम् ॥ १०४ ॥

प्रासादस्यान्तरे स्थाप्य ततः पूर्ववदाचरेत् ।
तीर्थयात्नां कुरुष्वेति कार्यं विज्ञापयेच्छनैः ॥ १०५ ॥

तत्न संहृत्य तद्बिम्बम् उत्पाद्य विधिपूर्वकम् ।
तीर्थबिम्बे समावाह्य पूजाकाले यथोदितम् ॥ १०६ ॥

तत्तीर्थबेरमादाय कृतकौतुकबन्धनम् ।
प्रासादस्याग्रतः स्थाप्य वेद्यां तत्नार्धमण्डपे ॥ १०७ ॥

पुण्याहं वाचयित्वा तु वैष्णवैर्वेदपारगैः ।
अर्घ्यपाद्यादिदत्त्वा तु घृतारोपणमाचरेत् ॥ १०८ ॥

प्ररोहपालिकाभिस्तु अलङ्कुर्यात्समन्ततः ।
ततो मङ्गलपूर्णानि वैष्णवीभिस्तु कारयेत् ॥ १०९ ॥

---

१०२. d : My. V. अनिर्वाण for अनिर्वाणैः.
१०५. a : V. अग्रतः S. A. अन्ततः for अन्तरे.
१०८. b : S. A. M. दीक्षितैर्द्विज for वेदपारगैः.
c : S. पात्न for पाद्य.
१०९. a : S. M. P. तम् for तु.
c : My. S. चूर्णानि for पूर्णानि.

शालिभिर्योजयित्वा तु पुष्पैराराध्य केवलैः ।
मूलबिम्बं यथापूर्वं 'मूले'न प्रतिरोपयेत् ॥ ११० ॥

(उत्सवे कर्मार्चायाः उत्सवार्चात्वेन नियोजिते विशेषः)

यत्रोत्सवार्चा कर्मार्चा नियुक्ता वा महोत्सवे ।
तदैवमेव कुर्वीत रात्रावहनि चोत्सवम् ॥ १११ ॥

(स्नानद्रव्यविन्यासक्रमः)

शालिभिर्यवगोधूमैः रजनीचूर्णमिश्रितैः ।
कृत्वा सुवर्णसूत्रं तु स्थापयित्वा तदुत्तरे ॥ ११२ ॥
घृतं च मध्यमे न्यस्य पूर्वे तु दधि विन्यसेत् ।
पयस्तु दक्षिणे न्यस्य पश्चिमे मधु विन्यसेत् ॥ ११३ ॥
पूर्वमेवोत्तरे न्यस्य रजनीचूर्णमुत्तमम् ।
उष्णोदकं तथाग्नेय्यां सुतप्तायुतसंयुतम् ॥ ११४ ॥
नैर्ऋत्यां गन्धतोयं तु पुष्पाम्भो वायुगोचरे ।
एकपत्रं विष्णुपर्णी नन्द्यावर्तं सरोरुहम् ॥ ११५ ॥

---

११०. a : V. om.
b : My. रजनीचूर्णमिश्रितैः.
d : A. S. V. च for न.
१११. a : My. A. यदा for यत्र.
c : S. तत्रैव दैव for तदैवमेव.
११२. a : S. My. A. M. यदा महोत्सवो धूमै.
b : My . पूर्ण for चूर्ण
c : A. S. चूर्ण for सूत्रं.
d : S. तथो for तदु०.
११३. b : M. पूर्वतो for पूर्वे तु.
११५. c : V. पद्मं for पत्रम्, S. My. V. ०पर्णे for ०पर्णी.
d ; S ०वर्ते for ०वर्तम्.

मन्दारतुलसीजातिमल्लिकामिश्रितं जलम् ।

(स्नानद्रव्यप्रतिनिध्यादिनिर्देशः)

एतेषामप्यलाभे तु वैष्णवं पद्ममेव वा ॥ ११६ ॥

मङ्गलोदकमीशाने सर्वं 'मूले'न विन्यसेत् ।

(स्नपनक्रमनिर्देशः)

अर्चयित्वा तु गन्धाद्यैः वासोभिर्वेष्टयेत्क्रमात् ॥ ११७ ॥

घृतेन स्नापयेत्पूर्वं बीजेन 'परमेष्ठि'ना ।
'पुंसा'भिषेचयेद्दध्ना 'विश्वे'न पयसा तथा ॥ ११८ ॥

'निवृ'त्या मधुना चापि स्नापयित्वा समाहितः ।
ततश्च विमृजेच्चूर्णैः कुशकूर्चेन मार्जयेत् ॥ ११९ ॥

'प्रणवे'न ततो दद्यात् 'सर्वे'णोष्णोदकं ततः ।
'अष्टाक्षरे'ण गन्धाम्भः पुष्पाम्भो 'द्वादशात्म'ना ॥१२०॥

ततश्च 'विष्णुगायत्र्या' स्नापयेन्मङ्गलाम्भसा ।

(भगवदाराधनक्रमः)

ततश्च वाससी शुद्धे दद्यात्'प्रणव'मन्त्रिते ॥ १२१ ॥

आराध्य गन्धपुष्पाद्यैः रजनीचूर्णमुत्तमम् ।
सौवर्णेन समायुक्तं दत्त्वा देवस्य मूर्धनि ॥ १२२ ॥

---

११६. b : V. प्रसवाष्टकम् for मिश्रितं जलम्.
c : S. A. M. एतासाम् for एतेषाम्.
d : M. V. वैष्णवी for वैष्णवम्, S. A. धर्मम् for पद्ममम्.
११८. c : V. सिंचयेत् for ०षेचयेत्.
d : S. दीपेन for विश्वेन.
११९. d : S. My. A. M. V. चूपर्णेन for कूर्चेन.
१२०. b : S. M. तथा V. पुनः for ततः.
१२२. a : A. My. S. पुष्पैस्तु for पुष्पाद्यैः.

प्रतिमां प्रतिमृज्याथ भक्तानां मूर्ध्नि निक्षिपेत् ।

(रजनीचूर्णमाहात्म्यम्)

गङ्गास्नानफलं चूर्णं सर्वपापप्रणाशनम् ॥ १२३ ॥

क्रीडया वापि तच्चूर्णं मूर्ध्नि कुर्यात्तु मानवः ।
तस्य देहगतं पापं तदह्नाय विनश्यति ॥ १२४ ॥

तस्मात्तच्चूर्णकं मूर्ध्नि धारयेत्सततं बुधः ।
यजमानस्य तद्राज्ञो मूर्ध्निस्थं तु जयप्रदम् ॥ १२५ ॥

(हविर्निवेदनक्रमः)

परमान्नं ततो दद्यात् तस्मिन् काले समाहितः ।
एतज्जयप्रदं विद्धि राज्ञः सर्वसमृद्धिदम् ॥ १२६ ॥

(तीर्थयात्राक्रमः)

बिम्बं तस्मात् समादाय दर्शयित्वा हरेः प्रभोः ।
रथं वा कुञ्जरं वापि यात्रावाहनमानयेत् ॥ १२७ ॥

नाना वादित्रकुशलान् बहूंश्च परिचारकान् ।
छत्रध्वजपताकांश्च भेरीपटहकाहलान् ॥ १२८ ॥

शिल्पिनः सेवकांश्चापि गणिकादेवदासिकाः ।
एवमेतान् समाहूय मुहूर्ते शोभने गुरुः ॥ १२९ ॥

---

१२४. a : S. अपि for वापि.
d : S. My. A. M. विशुद्ध्यति for विनश्यति.

१२५. a : V. सर्वप्रयत्नेन for तच्चूर्णकं मूर्ध्नि.
c : My. A. सततं for तद्राज्ञो.
d : My. A. तत् for तु.

१२६. d : A. My. S. जयप्रदम् for समृद्धिदम्.

१२७. b : A. My. स्नापयित्वा for दर्शयित्वा.

१२८. c : S. A. M. चित्र for छत्र.

१२९. c : V. समानीय for समाहूय.

अष्टभिः संवृतशिष्यैः चतुर्भिर्वा स साधकः ।
देवं प्रदक्षिणीकृत्य प्रणिपत्य समाहितः ॥ १३० ॥
दक्षिणेन समादाय पाणिना वाग्यतः स्वयम् ।
शिष्यस्य शिरसि स्थाप्य वस्त्राद्यैर्भूषितस्य च ॥ १३१ ॥
बहिर्निष्क्रम्य घोषेण शिष्यैः परिवृतः स्वयम् ।
वहेतां चामरे द्वे तु छत्रमेकं सितं शुभम् ॥ १३२ ॥
चतस्रः पालिकाश्चान्ये वहेर्युर्द्विजसत्तम ।
सन्निधानं समासाद्य कुञ्जरस्य रथस्य वा ॥ १३३ ॥
गरुडं भावयित्वैनमारोहेयुरनाकुलाः ।
ते तत्र वाग्यताः सर्वे नववस्त्रैरलङ्कृताः ॥ १३४ ॥
वाग्यताः सोत्तरीयाश्च सन्तुष्टाः दक्षिणादिभिः ।
महाजनेन संवीताः गच्छेयुर्यत्र निम्नगाः १३५ ॥
प्रदक्षिणं परिभ्रम्य सर्वेष्वावरणेषु च ।
'प्रणवेन' यथान्यायं नृत्तगीतसमन्वितम् ॥ १३६ ॥
निर्गच्छेद्योजनादर्वाक् अत ऊर्ध्वं तु वर्जयेत् ।

(यात्रायाम् अस्पृश्यस्पर्शदोषाभावः)

यात्रायां वर्तमानायामस्पृश्यस्पर्शने सति ॥ १३७ ॥

---

१३०. a : S. अभिसंवृतशिष्यैश्च.
b : साधकैः for साधकः.
१३१. a : V. तमादाय for समादाय.
१३२. a : My. M. निर्गत्य for निष्क्रम्य.
d : S. M. चिरं for छत्रम्.
१३३. d : S. My. च for वा.
१३४. a : S. My. A. M. वाह० for भाव०.
१३६. a : S. सदक्षिणं for प्रदक्षिणं.
d : V. गेय for गीत.
१३७. b : A. कारयेत् for वर्जयेत्.
d : V. स्पर्शनेन तु for स्पर्शने सति.

अशुचिर्न भवेन्मन्त्री सर्वे पूता यतस्तदा ।

(आचार्याशिर्वचनादिः)

आचार्य आशिषं ब्रूयात् राज्ञो राष्ट्रस्य वृद्धये ॥ १३८ ॥

'भवन्तु ताः' द्विजाः सर्वे पश्चाद्ब्रूयुस्तथैव च ।

अस्मिन् काले यदाचार्यः प्रब्रूयाद्देवसन्निद्धौ ॥ १३९ ॥

तत्तथैव भवेद्देव देवोऽपि प्रियमाप्नुयात् ।

(तीर्थे निमज्जनक्रमः)

वाहनादवतीर्याथ स्नात्वा चैव समाहितः ॥ १४० ॥

'ओं खं नमः पराय तोयात्मने ।'

आवाह्यानेन मन्त्रेन तीर्थानि प्रथितानि वै ।

अर्चा...हस्तानामभिकाम्रोदकस्थितः? ॥ १४१ ॥

'परमेष्ठ्या'त्मना मज्जेत् ध्यायन् देवं सदा हृदि ।

सम्प्रोक्ष्य पञ्चभिर्मन्त्रैः कुशपाणिसमाहितः ॥ १४२ ॥

महाजनैः सहस्तायां? ब्राह्मणानाञ्च वाञ्छया ।

(तीर्थस्थानात् प्रत्यागमनक्रमः)

उत्तीर्याचमनं दत्त्वा पूर्ववद्वाहनं नयेत् ॥ १४३ ॥

निवर्तेत ततः तीर्थात् यात्रादिवस एव तु ।

(रात्रौ तीर्थयात्रानिषेधः)

न रात्रौ तीर्थयात्रा स्यादहन्येव विधीयते ॥ १४४ ॥

(आलये बिम्बोद्वासनक्रमः)

देवागारं परिभ्रम्य सपीठं पूर्ववत्सुधीः ।

महाजनेन संवीतः प्रासादं तु प्रवेशयेत् ॥ १४५ ॥

---

१३८. b : My. A. M. तथा for तदा.
  d : इतः आरभ्य. १४३. a : पर्यन्तं वर्तमानः पाठः केवलं V. कोषे दृश्यते.

१४४. c : V. एव for यात्रा.

१४५. b : S. My. A. M. स्वपीठं for सपीठम्.

मूलबिम्बे यथापूर्वं 'सर्वे'णोद्वासयेत्ततः ।

(पुष्पयागप्रकारः)

पुष्पयागं ततः कुर्यात् तस्मिन् रात्रौ समाहितः ॥ १४६ ॥

प्रथमावरणे वापि द्वितीयावरणेऽपि वा ।
तृतीयावरणे वापि मण्डपे लक्षणान्विते ॥ १४७ ॥

अग्रतः पार्श्वयोर्वापि यथाभिमतदिग्गते ।
चक्राब्जमण्डलं लिख्य पूर्ववल्लक्षणान्वितम् ॥ १४८ ॥

तत्केवलैस्तु कुसुमैः तत्तद्वर्णैः प्रपूरयेत् ।
मण्डपस्य बहिः कुर्यात् अत्रैवावरणत्रयम् ॥ १४९ ॥

तेषु पुष्पमयं पीठम् अष्टदिक्षु प्रकल्पयेत् ।
यथाभिमतमानेन पुष्पैरेव द्विजोत्तम ॥ १५० ॥

तोरणानि चतुर्दिक्षु वस्त्रछन्नानि कल्पयेत् ।
वस्त्रछन्नौ प्रतिद्वारं द्वौ द्वौ तु कलशौ न्यसेत् ॥ १५१ ॥

प्ररोहपालिकाः वस्त्रैः वेष्टिताः स्थापयेत् पृथक् ।
स्तंभान् सर्वांस्तु संवेष्ट्य नववस्त्रैर्दशान्वितैः ॥ १५२ ॥

महद्भिः सदशैश्शुक्लैः वस्त्रैः संवेष्टितो नवैः ।
अलङ्कृतो यथाशोभं मकुटादिविभूषणैः ॥ १५३ ॥

सोष्णीषः सोत्तरीयश्च सविचित्रः प्रसन्नधीः ।
उत्सवार्चां समादाय कर्मार्चां वा स्ववाञ्छया ॥ १५४ ॥

---

१४७. a : My. A. च for वा.
c : My. A. M. च for वा.
१४९. d : S. क्रियाम् for त्रयम्.
१५३. a : My. शुद्धैः for शुक्लैः.
c : V. लाभं for शोभम्.

स्नापयित्वा यथान्यायमलङ्कृत्य च यत्नतः ।
स्थापयेत्पत्रपद्मस्य मध्ये मण्डलमध्यतः ॥ १५५ ॥

प्राङ्मुखो वस्त्रसंच्छन्नः 'प्रणवे'न समाहितः ।
वस्त्रपीठे समासीनः उदगास्यः प्रसन्नधीः ॥ १५६ ॥

महीं वस्त्रैस्समाच्छाद्य तस्मिन् पात्राणि विन्यसेत् ।
एवं कृत्वा यथापूर्वं पूजयेत्पूर्ववद्गुरुः ॥ १५७ ॥

मूर्तयो वासुदेवाद्याः देव्यः शान्त्यादयो द्विज ।
प्रथमावरणे पूज्याः मुद्राशङ्खादयो परे ॥ १५८ ॥

तृतीयावरणे पूज्याः लोकपालास्तु पूर्ववत् ।
विष्वक्सेनं तथैशान्यां सर्वेषां बाह्यतो यजेत् ॥ १५९ ॥

एवं न्यासविधानेन पूजयेत्कल्पवर्त्मना ।
न चात्र स्नापयेद्देवं मनसा तत्समाचरेत् ॥ १६० ॥

प्रभूतैः गन्धकुसुमैः पूजयित्वा समाहितः ।
हविर्निवेदयेत्पश्चात् प्रभूतव्यञ्जनान्वितम् ॥ १६१ ॥

(अग्निकार्यक्रमः)

अग्निकार्यं ततः कुर्यात् कुण्डे वा स्थण्डिलेऽपि वा ।
देवस्य दक्षिणे भागे वह्निभागे तु मण्डपे ॥ १६२ ॥

---

१५५. a : S. स्थापयित्वा for स्नापयित्वा.
c : A. My. पद्ममध्यस्थ for पत्रपद्मस्य.
१५७. d : S. My. A. M. देवेशं for पूजयेत्.
१५८. d : V परा for परे.
१६०. a : A. My. S. स्नान for न्यास.
c : S. My. A. M. यस्तत्र for न चात्र ; S. A. एवं for देवम्.
१६१. b : V. नैवेद्यबहुभिस्ततः,
c ; d : V. वस्त्रैराभरणैश्चत्रैः यथाश्रद्धं यथाधनम्.
d : A. जनान्तिकम् for व्यञ्जनान्वितम्.
१६२. d : V. My. मण्डले for मण्डपे.

अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ।
समिद्भिः सर्पिषा चैव वह्निकार्यं यथाक्रमम् ॥ १६३ ॥
अस्मिन् होमे न पुष्पाद्याः होतव्याः सिद्धिमिच्छता ।

(अग्निकार्याङ्गबलिदानम्)

सर्वेषां वाग्यतो दद्यात् अष्टदिक्षु समन्ततः ॥ १६४ ॥
हविषा कुमुदादीनां बलिं बलिविधानतः ।

(आचार्यादिसम्मानः दक्षिणायाः उत्तमादिपरिमाणञ्च)

आचार्यं पूजयेत्पश्चात् वस्त्रैर्धान्यैर्धनैः शुभैः ॥ १६५ ॥
सुवर्णानां शतं तत्र गुरोरिष्टा तु दक्षिणा ।
तदर्धा मध्यमा प्रोक्ता मध्यमार्धाधमा स्मृता ॥ १६६ ॥
अथवा दक्षिणा विप्र वित्तस्यैवानुरूपतः ।
तदर्धा साधकानां तु अन्येषां तु यथाधनम् ॥ १६७ ॥

(उत्सवान्ते देवाय आत्मनिवेदनम्)

एवं संपूज्य विधिवत् गुरुपूर्वांस्तु वैष्णवान् ।
आत्मानं परया भक्त्या देवाय विनिवेदयेत् ॥ १६८ ॥

---

१६३. b : M. शतमष्टोत्तरं तु वा.
d : S. My. A. M. हविषा च for वह्निकार्यम्.
१६४. a : S. My. A. तस्मिन् for अस्मिन्, S. M. तु My. A. च for न.
१६५. a : S. My. A. M. पूजयेत्पूर्वं for कुमुदादीनाम्.
b : S. My. A. M. बलिबिम्बविधानतः.
१६६. a : V. वस्त्रं for तत्र.
b : V. इत्येते दक्षिणा तदा.
१६७. c : V. तदर्धं for तदर्धा.
d : My. यथोचितं for यथाधनम्.

(विष्णोः उत्सवस्य फलकीर्तनम्)

एवं यः कारयेद्विष्णोरुत्सवं सकृदप्यसौ ।
अणिमादिगुणान् प्राप्य वैष्णवं पदमश्नुते ॥ १६९ ॥

(मण्डलादानीय प्रासादे देवस्य स्थापनम्)

एवमाराध्य देवेशं स्तुत्वा स्तोत्रैस्तु देशिकः ।
उद्धृत्य मण्डलाद्देवं प्रासादे स्थापयेत्ततः ॥ १७० ॥

आरोप्य पूर्ववद्देवं नमस्कुर्यात्पुनः पुनः ।

(गरुडोद्वासनक्रमः)

अपरेऽहनि रात्रौ तु गुरुर्वै साधकैः सह ॥ १७१ ॥

संस्नाप्य विधिना पश्चात् उत्सवार्चां यथाविधि ।
महाहविर्निवेद्याथ गरुडं पूज्य पूर्ववत् ॥ १७२ ॥

उद्वास्य मूलगरुडे ध्वजस्थं तस्य विद्यया ।
समाहितमना भूत्वा देवमाराधयेत्ततः ॥ १७३ ॥

(महोत्सवे विनियुक्तद्रव्याणां विनियोगः)

अस्मिन् महोत्सवे यद्यद्विनियुक्तं महामुने ।
स्वयमेव समादद्यात् तत्सर्वं वाञ्छितं गुरुः ॥ १७४ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
महोत्सवविधिर्नाम एकोनविंशोऽध्यायः

---

१६९. a : My. कामयेत् for कारयेत्.
१७२. a : My. V. संस्थाप्य for संस्नाप्य, S. विधिवत् for विधिना.
d : S. A. M. गुरुं सम्पूज्य पूर्ववत्.
१७३. a : My. V. गरुडम् for गरुडे.
S. om. श्रीपाञ्चरात्रे.

# विंशोऽध्यायः

## [स्नपनविधिनिरूपणाध्यायः]

### (स्नपनमण्डपादिकल्पनविवेकः)

गौतमः—

स्नपनस्य विधिं ब्रूहि ममेदानीं मुनीश्वर ।
त्वं गतिः भवभीतानां वैष्णवानां विशेषतः ॥ १ ॥

अतिप्रीतो भवाम्यद्य पञ्चरात्रविदां वर ।
त्वत्तो नान्यं प्रपश्यामि पञ्चरात्रविशारदम् ॥ २ ॥

नारदः—

अथातः संप्रवक्ष्यामि स्नपनस्य विधिं परम् ।
प्रासादस्याग्रतः कुर्यात् मण्डपं तु यथाविधि ॥ ३ ॥

आग्नेय्यां दक्षिणायां वा नैर्ऋत्यां पश्चिमे तु वा ।
वायव्यामुत्तरायां वा ऐशान्यां वा द्विजोत्तम ॥ ४ ॥

प्रथमावरणे वापि द्वितीयावरणेऽपि वा ।
तृतीयावरणे वापि कर्तुरिच्छानुरूपतः ॥ ५ ॥

प्राङ्मुखं चैव सर्वत्र चतुर्द्वारसमन्वितम् ।
सर्वत्र पश्चिमे भागे मण्डपस्य तु वेदिका ॥ ६ ॥

चतुर्दिक्तोरणैर्युक्तं शुभं प्राक् प्रत्यगायतम् ।
एवमस्थावरे कुर्यान्मण्डपं सपरिच्छदम् ॥ ७ ॥

---

२. c : M. अन्यं न पश्यामि for नान्यं प्रपश्यामि.
३. a : S. My. A. M. शृणु द्विजेन्द्र वक्ष्यामि.
४. b : V. ऽपि० for तु.
७. a : A. S. V. चतुर्भिः for चतुर्दिक्.
c : A. M. S. आस्थापने for अस्थावरे.

प्रासादाग्रत एव स्यात् मण्डपं लक्षणान्वितम् ।

(एकबेरविधौ स्नपनक्रमः)

न तत्र वेदिका कार्या देशिकैस्तन्त्रपारगैः ॥ ८ ॥

एकबेरविधाने तु मूलबिम्बेऽभिषेचयेत् ।

(स्नपनाङ्कुरक्रमः)

सप्तमे पञ्चमे वापि पूर्वं स्नपनवासरात् ॥ ९ ॥

तृतीये वा मुनिश्रेष्ठ तस्मिन्नहनि वा द्विज ।

सद्यश्चेत्तण्डुलैः पुष्पैः बीजैर्वा साङ्कुरैस्तु वा ॥ १० ॥

अङ्कुरानर्पयित्वा तु पूर्वोक्तविधिना सुधीः ।

अथवा पालिकास्वेव कुर्यात् षोडशसु क्रमात् ॥ ११ ॥

अष्टावरासु वा कुर्यात् दीक्षितश्चाङ्कुरार्पणम् ।

यथालब्धैः शुभैः बीजैः मुद्गैर्वा केवलैर्गुरुः ॥ १२ ॥

(स्नपनाङ्गभूतप्रतिसरबन्धनप्रकारः)

ततः प्रतिसरारंभं पूर्वेद्युः कारयेत्सुधीः ।

देवस्य पुरतः कुर्यात् शकृदा मण्डलं शुभम् ॥ १३ ॥

---

८. a : V. स्थावरे मूल एव स्यात् ; M. अग्रेतदेव S. अग्रत एवास्य for अग्रत एव स्यात्.

९. a : My. ऽपि for तु.
 b : V. बेरे for बिम्बे.

१०. c : My. ताम्बूलैः for तण्डुलैः.

११. c : S. एवं for एव.
 d : My. ०शा for ०सु.

१२. d : S. मुक्तैः for मुद्गैः

१३. a : S. My. A. M. प्रतिसरारंभपूर्वेद्यु.
 b : S. A. M. अङ्कुरं for पूर्वेद्युः.
 d : S. यं कृत्वा M. कृत्वा तु for शकृदा.

पिष्टचूर्णैरलङ्कृत्य न्यसेत्कोणेषु पालिकाः ।
व्रीहिभिः पीठिकां कुर्यात् तदूर्ध्वे विनिवेशयेत् ॥ १४ ॥

हैमं वा राजतं पात्रं पूरितं शालितण्डुलैः ।
वारिमानैस्तदर्धैर्वा ताम्बूलैश्च सुसंयुतम् ॥ १५ ॥

तदूर्ध्वे विन्यसेत्सूत्रं पट्टजं तु चतुर्भुजम् ।
मन्त्रयि'त्वास्त्र'मन्त्रेण संपूज्य कुसुमैरपि ॥ १६ ॥

तत्पात्रं शिरसि स्थाप्य साधकस्य विचक्षणः ।
वेश्ममङ्गलसंयुक्तं परिभ्राम्य समन्ततः ॥ १७ ॥

चतुष्कं वा द्वयं वापि (पात्रं?) मङ्गलसंयुतम् ।
देवस्याग्रे तु तत्पात्रमाधारस्योपरि न्यसेत् ॥ १८ ॥

कृत्वा पुण्याहघोषं तु देवमर्घ्यादिभिर्यजेत् ।
'द्वादशाक्षर'मन्त्रेण देवदेवस्य कौतुकम् ॥ १९ ॥

बन्धयेद्दक्षिणे हस्ते 'अस्त्र'मन्त्रं स्पृशन् जपेत् ।

(स्नपनबिम्बाभावे प्रतिनिधिः)

अलाभेऽस्य तु बिम्बस्य कार्यमुत्सवकौतुके ॥ २० ॥

---

१४. c : S. परितां V. पालिकां for पीठिकां.
d : S. My. A. चतुरंगुलमुच्छ्रिताम्.

१७. b : V. परिचर्यां परस्य च.
d : V. कारयित्वा प्रदक्षिणम्.

१८. c : S. My. A. M. देवस्य पुरतः स्थाप्य.
d : S. A. M. पूजयित्वा विधानतः.

१९. c ; d : S. My. A. M. जितन्तायाथ बिम्बस्य दक्षिणे बन्धयेत्करे

२०. c : A. वास्य for ऽस्य तु.
d : S. कुर्यात् for कार्यम्.

तस्याप्यसन्निद्धौ कुर्याद्धूलिबिम्बे विचक्षणः ।
कर्मबिम्बे तु वा कार्यं बन्धप्रतिसरीयकम् ॥ २१ ॥

ततोऽधिवासयेद्देवं तीर्थयात्राविधौ यथा ।
एवं सर्वेषु यागेषु कार्यं कौतुकबन्धनम् ॥ २२ ॥

(प्रतिसरबन्धे विघ्ने जायमाने विधिः)

पूर्वेद्युः विघ्निते पश्चात् तस्मिन्नहनि वाचरेत् ।
कुम्भाधिवासकाले तु कुर्यात्कौतुकबन्धनम् ॥ २३ ॥

ताम्बूलैस्तोषयेत् पश्चात् दीक्षितान् वैष्णवान् द्विजान् ।

(स्नपनाङ्गमार्जनादिक्रमः)

प्रभातायामथाचार्यः आरभेत् स्नपनं क्रमात् ॥ २४ ॥

सशलाकैस्ततो दर्भैः सहदेवीविमिश्रितैः ।
मार्जनं सर्वतः कुर्यात् प्राङ्मुखो वाप्युदङ्मुखः ॥ २५ ॥

वस्त्रपूतेन तोयेन गोमयेनानुलेपयेत् ।
पञ्चगव्येन संप्रोक्ष्य गन्धतोयेन चैव हि ॥ २६ ॥

मण्डपेशानकोणे तु स्थापयेज्जलभाजनम् ।

(स्नपने आचार्यसंख्यादिः)

एको द्वौ बहवो वापि देशिकाः स्नपने स्मृताः ॥ २७ ॥

---

२१. b : S. कार्यम् for कुर्यात्.
 c : S. ऽथवा for तु वा.
 d : V. कर्म for बन्ध ; S. बन्धयेत्प्रतिसूत्रकम्.
२२. a : M. तथा for ततो.
 d : My. कुर्यात् for कार्यम्.
२३. c ; d : S. My. A. M. om.
२४. b : My. वैष्णव for वैष्णवान्.
२५. b : S. विभूषितैः for विमिश्रितैः.
२६. b : S. My. A. M. गोमयालेपनं भवेत्.
२७. b : S. My. A. M. संस्थाप्य for स्थापयेत्.

नववस्त्रधराः सर्वे सर्वालङ्कारसंयुताः ।
नववस्त्रोत्तरीयाश्च सोष्णीषाः गुरुसम्मताः ॥ २८ ॥

(स्नपनमण्डपालङ्करणम्)

तोरणानि यथान्यायं वस्त्रच्छन्नानि पूजयेत् ।
संपूज्य द्वारकुम्भांस्तु वस्त्रच्छन्नान् पृथक् पृथक् ॥ २९ ॥

शालिपीठोपरिन्यस्तध्वजानष्टौ यजेत्ततः ।
स्तम्भांस्तु वेष्टयेत्पश्चात् नववस्त्रैस्तु शोभनैः ॥ ३० ॥

(स्नपनपीठकल्पनार्थं सूत्रपातादिक्रमः)

वेदिं प्रक्षाल्य तोयेन वस्त्रैः संवेष्टय यत्नतः ।
सूत्रपातं ततः कुर्यात् कलशस्थापनाय वै ॥ ३१ ॥

चतुरश्रीकृते क्षेत्रे त्रयोदशविभाजिते ।
कोष्ठकानि भवन्त्यत्र शतमेकोनसप्ततिः ॥ ३२ ॥

एकैकस्य तु विस्तारः तालप्रादेशमेव वा ।
हस्तं वारत्निमात्रं वा मण्डपस्यानुरूपतः ॥ ३३ ॥

नवकानि तथैव स्युः अष्टदिक्षु च मध्यमे ।
तथैव विमृजेत्सम्यक् शास्त्रदृष्टया द्विजोत्तम ॥ ३४ ॥

वीथीनां चैव विस्तारं विद्यात् कोष्ठद्वयेन तु ।
पीष्टचूर्णैरलङ्कृत्य चतुर्दिक्षु समन्ततः ॥ ३५ ॥

---

२८. a ; b : My. V. om.
d : A. My. सत्तमाः for ०सम्मताः.
३१. a ; b : V. om.
d : V. ०नार्थतः for ०नाय वै.
३३. b : A. M. त लं for ताल०.
३५. b : S. कुर्यात् for विद्यात्.

कोष्ठेषु पीठिकां कुर्यात् तण्डुलैर्व्रीहिभिस्तु वा ।
पीठिकां प्रतिकोणेषु कुर्यादाढकसम्मितैः ॥ ३६ ॥

आढकार्धैः तदर्धैः वा वृत्तं वा चतुरश्रकम् ।

(स्नपनघटानामधिवासनक्रमः)

अस्मात् पश्चिमतो देशे कलशानधिवासयेत् ॥ ३७ ॥

सूत्रेण वेष्टितान् यत्नात् अङ्गुलाङ्गुलमन्तरम् ।
यवद्धाम्रनिलं वापि ? त्रिसूत्रेणैव वेष्टयेत् ॥ ३८ ॥

लोहजान्मृण्मयान् कुम्भांश्चतुर्विंशाङ्गुलोन्नतान् ।
ततमङ्गुलषट्केन तत्रास्यं त्र्यङ्गुलं स्मृतम् ॥ ३९ ॥

प्रागग्रानुदगग्रांस्तु दर्भान् संस्तीर्य भूतले ।
तारेण तत्र कलशान् न्यस्य पुष्पेण पूज्य च ॥ ४० ॥

अधोमुखांस्तु कलशान् न्यस्य पङ्क्तिक्रमेण तु ।
कुशानुपरि संस्तीर्य प्राङ्मुखः 'परमेष्ठिना' ॥ ४१ ॥

सम्प्रोक्ष्य 'पुंसा' 'विश्वेन' विकिरेदक्षतानि च ।
सर्पिषा जुहुयादग्नौ यावत् केशवसंख्यया ॥ ४२ ॥

'मूल'मन्त्रेण जुहुयात् चरुं पूर्वोक्तसंख्यया ।
'नृ'सूक्तेन समभ्यर्च्य कलशान् स्थापितान् गुरुः ॥ ४३ ॥

निवृत्या चोन्मुखी कृत्य 'सर्वेण' मुनिपुङ्गव ।
स्वकं स्थानेषु संपूज्य गन्धपुष्पाक्षतादिभिः ॥ ४४ ॥

---

३६. c : S. My. A. M. तण्डुलैः पीठिकां कुर्यात्.
d : S. My. A. M. सम्यक् for कुर्यात्.

३८. c ; d : S. My. A. M. om.

४१. b : My. M. प्रथमानधिवासयेत्.

(स्नपनार्थं घटानां न्यासक्रमः)

पृथगुद्धृत्य कलशान् स्वस्थानेषु क्रमान्न्यसेत् ।
प्राङ्मुखोदङ्मुखो वापि तत्तद्द्रव्यं प्रयोजयेत् ॥ ४५ ॥

घृतमुष्णोदकं चैव रत्नवारि फलोदकम् ।
लोहाम्भो मार्जनाम्भश्च गन्धाम्भोऽक्षतवारि च ॥ ४६ ॥

यवोदकमथैशान्तं मध्यादारभ्य मध्यमे ।
पाद्यमर्घ्यं तथाचामं पञ्चगव्यं तथा दधि ॥ ४७ ॥

पयो मधु कषायं च दिग्विदिक्षु क्रमान्न्यसेत् ।
एवं सप्तदश प्रोक्ता प्रधानद्रव्यसंयुताः ॥ ४८ ॥

शेषाश्चान्याः चतुष्षष्टि शुद्धोदकसमन्विताः ।

(कूर्चलक्षणम्)

न्यसेत् कूर्चं शुभं दार्भमुदग्रं षोडशाङ्गुलम् ॥ ४९ ॥

अङ्गुलं ग्रन्थिमानं तु मूलं वै द्वादशाङ्गुलम् ।
शेषमग्रं विजानीयात् कूर्चानां लक्षणं मुने ॥ ५० ॥

(वर्णानुसारं कूर्चस्थदर्भसंख्या)

ब्राह्मणस्य चतुर्दर्भं त्रिदर्भं क्षत्रियस्य तु ।
द्विदर्भं तु विशां कूर्चं स्त्रीशूद्राणां तथा भवेत् ॥ ५१ ॥

सर्वेषामथवा कूर्चं पञ्चदर्भयुतं तु वा ।

(कूर्चस्थितिफलम्)

उत्कूर्चं शान्तिदं विद्यात् अधः कूर्चं तु पौष्टिकम् ॥ ५२ ॥

---

४५. a ; b : S. My. A. M. उद्धृत्यकलशान् तस्मात् स्वस्थानेषु न्यसेत् क्रमात्.

४९. c ; d : S. My. A M. om.

५०. c : S. My. A. M. षोडशाग्रं for शेषमग्रम्.

५१. c : V. कृत्वा for कूर्चं.

५२. b : S. कृतं तु My. A. ०कमेव for युतं तु.

अन्तःकूर्चं तु कलशम् आभिचारकरं विदुः ।

(कलशार्चनक्रमः)

एवं सर्वेषु विन्यस्य कलशेषु द्विजोत्तम ॥ ५३ ॥

पिधाय चक्रिकाभिस्तु वासोभिः सदशैर्नवैः ।
निश्छिद्रं वेष्टय कलशान् सर्वतः प्रागुदङ्मुखः ॥ ५४ ॥

पुण्याहं वाचयित्वा तु ब्राह्मणैः स्वस्तिवाच्य च ।
तत्त'द्दैवत'मन्त्रेण तत्तत्कुंभांस्तु पूजयेत् ॥ ५५ ॥

शेषांश्चान्यांश्चतुष्षष्टि शुद्धोदकसमन्वितान् ।
अर्घ्यादिसप्तभोगैस्तु 'मूल'मन्त्रेण पूजयेत् ॥ ५६ ॥

एवमभ्यर्च्य कलशान्

(भगवतः आराधनक्रमः)

अन्तर्गेहं प्रविश्य च ।

बिम्बे चावाह्य देवेशमासनादिक्रमेण वै ॥ ५७ ॥

पाद्याद्यामलकान्तैस्तु उपचारैस्तु नित्यकैः ।
पूजयित्वा यथान्यायं

(स्नपनक्रम)

पश्चात् संस्नापयेद्धरिम् ॥ ५८ ॥

तिष्ठन्नुदङ्मुखो मन्त्री प्राक्पश्चिममुखं हरिम् ॥
पाद्यादिनवकं स्नाप्य उपस्नानं तु कारयेत् । ५९ ॥

व......पाद्यादिगन्धादीनपि दापयेत् ।
नवकानां तथान्येषां कुर्यादेवं विचक्षणः ॥ ६० ॥

पाद्यमर्घ्यं तथाचामं पञ्चगव्यं तथा दधि ।
पयो मधु कषायं च उष्णाम्भः फलवारि च ॥ ६१ ॥

---

५३. a : S. My. A. M. गन्धोदकं च प्रक्षिप्य.
६१. b : S. My. A. M. घृतं for तथा.

मार्जनाम्भोऽक्षताम्भश्च रत्नाम्भो लोहवारि च ।
गन्धाम्भश्च यवाम्भश्च घृतं चैव तु देशिकः ॥ ६२ ॥

ऋग्भिः 'पुरुष'सूक्तस्य तथे'दं विष्णु' रित्यृचा ।
क्रमेणानेन संस्नाप्य प्रतिद्रव्यं तु पूजय च ॥ ६३ ॥

घृतेन स्नाप्य देवेशं सामान्येनोष्णवारिणा ।
अमन्त्रं स्नापयेत्पश्चात् तस्य शुद्धत्वमाप्नुयात् ॥ ६४ ॥

कलशस्थं यदुष्णांभस्तद्धि सत्वाथवान्वितम्? ।
अधमं स्नपनं ह्येतत् सर्वपापप्रणाशनम् ॥ ६५ ॥

(अधमस्य स्नपनस्य निमित्तम्)

महोत्पातेषु सर्वेषु राष्ट्रे च व्याधिते तथा ।
रक्तस्त्रीष्वथ दृष्टासु देववेश्मनि कुत्रचित् ॥ ६६ ॥

वल्मीके तु समुत्पन्ने माक्षिकावास एव वा ।
देवे खद्योतसंस्पृष्टे स्पृष्टे वा पक्षिभिः खरैः ॥ ६७ ॥

समीपस्थेऽन्त्यजानां वा मृतदेहबहिस्थिते ।
सूतिकायाश्चोदक्यायाः सुरापस्य शवस्य च ॥ ६८ ॥

सुरापायी विशेषेण महापातकिनस्तथा ।
अधिष्ठितेऽङ्गणादावप्येतैः क्वापि यदृच्छया ॥ ६९ ॥

अनेन स्नापयित्वा तु प्रायश्चित्तं कृतं भवेत् ।

(मध्यमस्नपनप्रकारः)

मध्यमं स्नपनं वक्ष्ये शृणुष्वैकमना मुने ॥ ७० ॥

---

६२. c : S. My. A. M. शुद्ध for गन्ध.
d : S. My. A. M. क्रमेणैव तु देशिकः.

६६. b : S. My. A. M. नृपे for तथा.

६८. a : V. जातीनां for ०जानां वा.

६९. a : V. सुरायाः वा for सुरापायी.

एकाशीति पदे यत्तु स्नापनं विहितं मया ।
तस्य वै स्थापनं कृत्वा पूर्वोक्तेनैव वर्त्मना ॥ ७१ ॥

पदान्येकोनपञ्चाशत् प्रतिदिक्षु च कारयेत् ।
पूर्ववत्स्थापयेत्तेषु कलशान् मन्त्रवित्तमः ॥ ७२ ॥

तत्र मध्यमकुम्भेषु तेषु वै स्थापयेत्ततः ।
गुलोदकं चेक्षुरसं नालिकेररसं तथा ॥ ७३ ॥

शान्तिवारि चतुर्दिक्षु पूर्वादिक्रमयोगतः ।
पूर्ववद्वेष्टय वासोभिः पूजयित्वा विधानतः ॥ ७४ ॥

यवोदकान्तं पाद्यादि स्नापयित्वा तु पूर्ववत् ।
पश्चाद्गुलोदकाद्यैस्तु स्नापयेत्क्रमयोगतः ॥ ७५ ॥

'त्वं विष्णो' इति मन्त्रेण मध्यादारभ्य मन्त्रवित् ।
मध्यमं स्नपनं ह्येतत् सर्वशान्तिपरं हितम् ॥ ७६ ॥

सर्वकामप्रदं ह्येतत् सर्वविघ्नविनाशनम् ।

(मध्यमस्नपनप्रयोजनकथनम्)

एवं यः शत्रुसेनायामासन्नायां द्विजोत्तम ॥ ७७ ॥

स्नापयेद्देवदेवेशं सः जयं प्राप्नुयाद्ध्रुवम् ।
मन्त्रिणा कांक्षितं यद्यत् तदनेनैव सिद्ध्यति ॥ ७८ ॥

सर्वपापहरं ह्येतत् सर्ववाञ्छितदायकम् ॥

(उत्तमस्नपनस्य विधिनिरूपणम्)

उत्तमं स्नपनं वक्ष्ये यथावत्तन्निबोध वै ॥ ७९ ॥

पूर्ववत् कोणदेशे तु चत्वारिंशन्नवोत्तरम् ।
स्थापयित्वा तु कलशान् पीठिकास्वेव पूर्ववत् ॥ ८० ॥

---

७२. b : S. My. A. M. दिक्स्थं for ०दिक्षु.

तेष्वपि ब्रह्मकुम्भेषु स्थापयेन्मङ्गलोदकम् ।
आग्नेयादीशपर्यन्तं ततस्संवेष्टय पूर्ववत् ॥ ८१ ॥

पूजयित्वा विधानेन गन्धपुष्पादिभिः क्रमात् ।
पूर्ववच्छान्तितोयान्तं पाद्याद्यं स्नाप्य मन्त्रवित् ॥ ८२ ॥

'विष्णोर्नुक'मिति प्राज्ञः स्नापयेन्मङ्गलाम्भसा ।
'ये'नाभिषिञ्चेद्देवेशं प्रधानकलशेन तु ॥ ८३ ॥

तच्छुद्धवारिकलशैः तयैव संस्नापयेदृचा ।
अनेन क्रमयोगेन द्रव्याणां तु महामुने ॥ ८४ ॥

पाद्यमाचमनं चार्घ्यं गन्धं स्रग्धूपदीपकम् ।
दद्याद्यथाक्रमं सर्वं केवलं चार्घ्यमेव वा ॥ ८५ ॥

त्रिसप्तत्युत्तरं प्रोक्तं कलशानां चतुश्शतम् ।
उत्तमं स्नपनं ह्येतत् महापातकनाशनम् ॥ ८६ ॥

एवं संस्नाप्य देवेशं कैवल्यं प्राप्नुयान्नरः ।
अणिमादिगुणान् प्राप्य सर्वभोगसमन्वितः ॥ ८७ ॥

(उत्तमस्नपनस्य निमित्तम्)

अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ।
एवं संस्नापयेद्यस्तु स्वजन्मर्क्षे शुभेऽहनि ॥ ८८ ॥

---

८१. b : S. My. A. सेचयेत् for स्थापयेत्.
८२. d : S. My. A. पाद्यान्तं for पाद्याद्यम्.
८३. c : S. My. A. M. यथा for येन.
८४. b : M. V. तोयैस्सं for तयैव.
c : V. अन्तरान्तर for अनेन क्रम०.
८५. c : S. My. A अथ for यथा.
८६. a : A. My. अपरं for उत्तरं, V. सप्ततिस्युत्तरं प्रोक्तं.
८८. d : V. दिने for ०हनि.

द्वादश्यां श्रवणे वापि नवम्यां वा महामुने ।
अपूजितेऽब्दमात्रे तु देवबिम्बे विशेषतः ॥ ८९ ॥

तस्य पुण्यफलावाप्तिं कः शक्नोत्यभिवर्णितुम् ।
राज्ञि राष्ट्रात् परिभ्रष्टे दुर्निवार्यभयागते ॥ ९० ॥

भीते शत्रुभिराक्रान्ते चिरलुप्ते तु पूजने ।
रक्तस्त्रीमक्षिकाद्यैस्तु देवबिम्बे तु दूषिते ॥ ९१ ॥

तथा सस्यादिभिश्चैव जीर्णे बिम्बेऽङ्गभङ्गतः ।
उदक्यासूतिकाभ्यां वा संस्पृष्टे दुष्टजन्तुभिः ॥ ९२ ॥

अस्पृश्यैर्वा तथान्यैस्तु संस्पृष्टे द्विजपुङ्गव ।
अनेन विधिना देवं स्नापयेत्तस्य शान्तये ॥ ९३ ॥

प्रायश्चित्तं हि सर्वेषामिदं स्नपनमुत्तमम् ।

(पाद्याङ्गद्रव्याणि)

विष्णुपर्णी च दूर्वा च पद्मं श्यामाकमेव च ॥ ९४ ॥

एतानि पाद्यस्याङ्गानि सर्वत्र द्विजपुङ्गव ।

(अर्घ्यद्रव्याणि)

गन्धं पुष्पं फलं तद्वत् यवं सिद्धार्थमेव तु ॥ ९५ ॥

तिलं कुशाक्षतं चैव द्रव्याण्यर्घ्यस्य सर्वतः ॥

(आचमनीयद्रव्याणि)

लवङ्गजातितक्कोलं सर्वत्राचमनीयके ॥ ९६ ॥

---

८९. d : S. My. A. M. देवे ऋषि for देवबिम्बे.
९१. a : V. गृहीते शत्रुभीराज्ञि.
९२. a : S. तस्याधिपश्चैव for सस्यादिभिश्चैव.
d : V. जन्मभिः for ०जन्तुभिः.
९३. b : S. देवे स्पृष्टे द्विजोत्तम.
९५. b : S. सत्तम for ०पुङ्गव.

(पञ्चगव्यद्रव्याणि)

पञ्चगव्यं तु गोमूत्रं क्षीरं दधि घृतं तथा।
शकृद्रसं च पञ्चैतान्याहुः सर्वत्र सुव्रत ॥ ९७ ॥

(कषायोदकद्रव्याणि)

शम्यौदुम्बरबिल्वानां पलाशवटयोस्तथा।
खदिराश्वत्थयोश्चापि विकङ्कततरोस्तथा ॥ ९८ ॥

त्वक्सारं तु कषायं स्यात् सर्वपापापनोदनम्।

(फलाम्भोद्रव्याणि)

कदलीमातुलुङ्गं च बिल्वमामलकं तथा ॥ ९९ ॥

पनसं नालिकेरं च चूतं वै बीजपूरकम्।
फलाम्भसोऽङ्गान्येतानि फलानि कथितानि वै ॥ १०० ॥

(मार्जनाम्भोद्रव्याणि)

सहदेवी शिरीषं च रजनी सूर्यवर्तिनी।
सदाभद्रा कुशाग्राणि मार्जनाङ्गानि षड्विदुः ॥ १०१ ॥

(रत्नोदकद्रव्याणि)

माणिक्यं पद्मरागं च नीलं वज्रं च पुष्यकम्।
प्रवालं मुक्तकं चैव तथा मरतकं क्षिपेत् ॥ १०२ ॥

---

९७. c : V. तु for च ; S. My. A. M. सर्वत्र for पञ्चैता०.
d : S. My. A. पञ्चैतत् गव्यमुत्तमम्.

९९. a : A. फलमधूक० for त्वक्सारम्.

१००. c ; d : A. M. फलांभसोऽष्टावङ्गान्येतानि कथितानि वै.

१०१. c : My. V. सटाभद्र for सदाभद्रा ; My. सुचेतानि for कुशाग्राणि.

१०२. a ; b : S. My. A. M. मणिमुक्ताफलं वज्रं प्रवालं पुष्पकं तथा.
c ; d : S. My. A. M. om.

वैडूर्यं नवरत्नानि तानि रत्नघटोदके ।

(लोहोदकद्रव्याणि)

रुक्मं रूप्यं च ताम्रं चाप्यायसं त्रपुमेव च ॥ १०३ ॥

लोहाम्भोऽङ्गानि पञ्चैतान्युक्तानि च विचक्षणैः ।

(गन्धोदकद्रव्याणि)

चन्दनं कुसुमं मांसी ह्रीबेरं च मुरं तथा ॥ १०४ ॥

उशीरं कुष्ठमगरुगन्धाम्भोऽङ्गानि विन्यसेत् ।

अन्ये तु कलशाः सर्वे एकाङ्गेन समन्विताः ॥ १०५ ॥

(स्नपनद्रव्याधिदेवनिर्देशः)

आज्यस्य दैवतं विष्णुः उष्णोदस्य दिवाकरः ।

ब्रह्मा रत्नाम्भसो देवः कुबेरस्तु फलाम्भसः ॥ १०६ ॥

वसवो लोहतोयस्य विश्वेदेवास्तु मार्जने ।

गन्धतोयस्य गन्धर्वाः निर्ऋतिश्चाक्षताम्भसः ॥ १०७ ॥

आर्या यवोदकस्योक्ता पाद्यस्य पितरः स्मृताः ।

अर्घ्यस्य श्री स्मृता देवी वाग्देव्याचमनीयके ॥ १०८ ॥

पञ्चगव्यस्य दक्षस्तु दध्नः शुक्रस्तु दैवतम् ।

देवता पयसः सोमो महेन्द्रो मधुनस्तथा ॥ १०९ ॥

---

१०३. a ; b : S. My. A. M. रत्नोदकानि एतानि कथितानि समासतः.

१०५. a : S. काष्ठं V. कोष्ठं for कुष्ठम्.

१०६. a : V. देवता for दैवतम्.

१०८. b : S. My. A. तथा for स्मृताः.

१०९. b : V. शुक्रस्तु दधिदैवतम्.
d : My. A. वासवो for महेन्द्रो.

कषायस्य यमो देवो वराहस्तु गुलाम्भसः ।
नृसिंह इक्षुसारस्य देवता द्विजपुङ्गव ॥ ११० ॥

नारिकेलाम्भसो देवः श्रीधरः श्रीनिकेतनः ।
भवस्तु शान्तितोयस्य देवता सर्वदा भवेत् ॥ १११ ॥

चत्वारो वासुदेवाद्याः देवताः मङ्गलाम्भसः ॥
देवताः शुद्धवारीणां देव्यः शान्त्यादयः स्मृताः ॥ ११२ ॥

अश्विनी कलशानान्तु शेषस्सूत्रस्य दैवतम् ॥
कूर्चानां तु परं ब्रह्म वर्तिकानां तु मातरः ॥ ११३ ॥

वाससो विष्णुरेव स्यात् सर्वेषां विष्णुरेव वा ।

(स्नपनाङ्गमार्जनादिमन्त्राः)

मार्जनं प्रोक्षणं चैव शकृदा चानुलेपनम् ॥ ११४ ॥

सूत्रपातमलङ्कारं पिष्टचूर्णैः समन्ततः ।
'द्वादशाक्षर'मन्त्रेण कारयेत्पञ्चमन्त्रवित् ॥ ११५ ॥

'पञ्चोपनिषदा' मन्त्री कलशान् अधिवासयेत् ।
'विष्णुगायत्रिया' तत्र कोष्ठेषु कलशान्न्यसेत् ॥ ११६ ॥

पूजयेच्च 'स्वमन्त्रै'स्तु स्वैः स्वैर्नामभिरेव च ।
कूर्चांस्तु प्रक्षिपेत्तेषु 'द्वादशाक्षर'विद्यया ॥ ११७ ॥

---

११०. c : My. A. त्विक्षुरसस्य for इक्षुसारस्य.
१११. c : V. हयास्य for भवस्तु.
d : V. सर्वतो for सर्वदा.
११३. c : My. कुंभ० A. कच० for कूर्च०.
d : S. A. M. चक्रि० for वर्ति०.
११४. d : My. A. वा for चा०.
११५. b : My. समन्वितम् for समन्ततः

चक्रिकाः स्थापयेत्पश्चात् 'चक्र'मन्त्रेण साधकः
वासोभिः छादयेत्तद्वत् 'द्वादशाक्षर'विद्यया ॥ ११८ ॥

स्वमन्त्रैः पूरयित्वा तु प्रतिद्रव्यं विचक्षणः ।
'प्रणवे'न तु सूत्राणि क्षिप्त्वा तैरभिवेष्ट्य च ॥ ११९ ॥

वस्त्रापनयनं कुर्यात् 'मूल'मन्त्रेण मन्त्रवित् ।
उद्धृत्य 'विष्णुगायत्र्या' दद्याद्धस्ते गुरोस्तदा ॥ १२० ॥

यस्मिन् यस्मिन् न मन्त्रोऽत्र विहितः कर्मणि द्विज ।
'द्वादशाक्षर'मन्त्रेण तत्तत्कुर्याद्विचक्षणः ॥ १२१ ॥

अथवा सर्वकर्माणि 'द्वादशाक्षर'विद्यया ।
एवं संस्नाप्य विधिवत् रजनीचूर्णपूरितैः ॥ १२२ ॥

पञ्चविंशतिभिर्वापि नवभिः पञ्चभिस्तु वा ।
एकेन वा यथाशक्ति कलशैः पूरितैस्तथा ॥ १२३ ॥

'द्वादशाक्षर'मन्त्रेण दद्याद्देवस्य मूर्धनि ।
प्रतिमां परिमृज्याथ भक्तानां मूर्ध्नि दापयेत् ॥ १२४ ॥

विष्वक्सेनस्य दत्वा तु तन्मन्त्रेण द्विजोत्तम ।
ततः संस्नापयेद्देवं शुद्धाम्बुपरिपूरितैः ॥ १२५ ॥

अलङ्कृत्य यथान्यायं नैवेद्यं तु चतुर्विधम् ।
निवेदयित्वा देवाय

---

११९. c : My. ०नैव for ०न तु.
d : S. ०वाद्य for वेष्ट्य.
१२०. d : S. गुरुः सदा for गुरोस्तदा.
१२५. a : V. वै. for तु.
b : V. मन्त्रेण द्विजपुङ्गव.
१२६. c : V. देवेशं for देवाय.

(आचार्यादिदक्षिणादानक्रमः)

आचार्यं पूजयेत्ततः ॥ १२६ ॥

पञ्चविंशति निष्काणि दक्षिणात्रोत्तमा मता ।
एतदर्धं समा प्रोक्ता समार्धा त्वधमा स्मृता ॥ १२७ ॥

साधकानां तु सर्वेषां यथावित्तं तु दक्षिणा ।
अत्रोपयोगद्रव्याणि समादद्यात्स्वयं गुरुः ॥ १२८ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां स्नपनविधिर्नाम
विंशोऽध्यायः

---

१२७. a : V. निष्कान्ता for निष्काणि.

# एकविंशोऽध्यायः

## [पुष्पाद्यर्पणविधिनिरूपणाध्यायः]

(पुष्पाद्यर्पणविधिकथनार्थं गौतमकृतप्रार्थना)

**गौतमः—**

पुष्पाणि यानि देयानि मूलानि च फलानि च ।
देवदेवाय हरये समाचक्ष्वाद्य तानि मे ॥ १ ॥

(भगवदर्पणार्हपुष्पाणां नामनिर्देशः)

**नारदः—**

विष्णवे यानि देयानि पुष्पाणि च फलानि च ।
मूलानि सम्प्रवक्ष्यामि तानि संक्षेपतो द्विज ॥ २ ॥
कमलं मालती चैव तुलसी यूथिका तथा ।
कुमुदं सिन्दुवारं च कुन्दमुत्पलमेव च ॥ ३ ॥
कुब्जकं च वणिज्या च प्रियङ्गुकुसुमं तथा ।
वनमाला च कुटजं चम्पकं मदनं तथा ॥ ४ ॥
पिण्डितकद्वयं चैव तथा कुरवकद्वयम् ।
केतकी वनमाला च भृङ्गराजसहन्तिका ॥ ५ ॥

---

२. c : S. मूलानीत्थं for मूलानि सं०.
३. a : A. S. My. मल्लिका for कमलं.
c : A. S. My. सिन्धु० for सिन्दु०.
d : S. वा for च.
४. a : S. My. पणिज्या for वणिज्या.
c : S. My. A. M. नव० for वन०, S. V. M. om कुटजं.
d : V. वीरं मदनकं तथा.
५. a : S. M. रटितक for पिण्डितक.

......कुसुमञ्चैव तथाशोकद्वयं भवेत् ।
केण्डञ्च करवीरञ्च नन्द्यावर्तद्वयं तथा ॥ ६ ॥
कर्णिकारं च वकुलं पुन्नागं च सुवर्चलम् ।
......पुष्पं शिरीषं च द्रोणपुष्पं तथैव च ॥ ७ ॥
मल्लिका नवमाला च तथा चैव कुरण्डकम् ।
फलिनी च सदाभद्रा कुन्दली नीलिका तथा ॥ ८ ॥
सिंहिका केसरी चैव वनजातिस्तथैव च ।
स्थलपद्मं विष्णुपर्णी सहदेवी बृहन्नलम् ॥ ९ ॥
शतपत्रं च श्रीवेरं दूर्वा काशकुशौ तथा ।
कदलीं कुमुदं चैव माधवी श्वेतरोहितम् ॥ १० ॥
बिल्वपत्रं सितार्कं च पलासखदिरं तथा ।
......खपुष्पं च तथा वैडूर्यवर्तनी ॥ ११ ॥
एवं नानाविधैः पुष्पैः शुभैरन्यैश्च पूजयेत् ।

(भगवदर्पणार्हफलानां नामनिर्देशः)

कदली पनसं चाम्रं द्राक्षा खर्जूरमेव च ॥ १२ ॥
नालिकेरकरीरं च कपित्थं फलमेव च ।
जम्बूफलं तथा पुण्यं चिद्विकं बालुकं तथा ॥ १३ ॥

---

८. b : S. कुरम्बकम् for कुरण्डकम्.
d : V. कुन्दली नीतिका तथा.
१०. a : S. My. A. M. शतवेरं for शतपत्रं.
b : V. चूत for दूर्वा.
c : S. A. V. M. क्रमुकं for कुमुदं, V. गन्धी for चैव
d : V. रेहितं for रोहितम्
१३. c : A. S. V. पुष्पं for पुण्यं.
d : S. A. M. चिविदं for चिद्विकम्.

परावतं च बदरं मातुलुङ्गं च दाडिमम् ।
बिल्वमामलकं चैव कारवल्लीद्वयं तथा ॥ १४ ॥

वृन्तारकं च पनसं सक्षुद्रपनसं तथा ।
करीरं करवर्द्दं च कर्णाटिकफलं तथा ॥ १५ ॥

बल्लीत्रयं च पिण्डा च क्षुद्रपिण्डा तथैव च ।
गङ्गाद्वयं तथार्द्रं च महासूरणमेव च ॥ १६ ॥

फलान्येतानि मूलानि कालाग्निपचितानि च ।
रसान्तरैश्च युक्तानि कट्वम्ललवणादिभिः ॥ १७ ॥

एवमादीनि चान्यानि मूलानि च फलानि च ।
देवदेवनिवेद्यानि भक्तैर्भागवतैस्सदा ॥ १८ ॥

आत्मनो यानि विप्रेन्द्र प्रियाणि मधुराणि च ।
अवर्जितानि मूलानि फलानि च शुभानि वै ॥ १९ ॥

---

१४. c : My. कपित्था० for बिल्वमा०.

१५. a : S. My. A. वृन्दारकं for वृन्तारकं.
b : S. My. A. अक्षुद्र० for सक्षुद्र०
c : S. M. कुररं My. A. कररं for करीरं, My. A. ककपट्टं for करवर्द्दं.
d : My. S. V. कार्कोटक० for कर्णाटिक.

१७. b : V. कालाग्निपतितानि च.

१८. a : S. M. वान्यानि for चान्यानि.
c : S. My. A. M. निवेद्यैव for निवेद्यानि.
d : M. सह for सदा.

१९. a ; b : S. om.
d : S. My. A. M. प्रियाणि सुशुभानि वै.

तानि सर्वाणि देवाय विष्णवे प्रभविष्णवे ।
दातव्यानि पवित्राणि पात्राण्यपि शुभानि वै ॥ २० ॥

(पुष्पसङ्ग्रहपात्रविवेकः)

पात्रे पुष्पाणि गृह्णीयात् वै दले पत्रजेऽपि वा ।
लोहजे दारुजे वापि जलजे वा शुभे शुचौ ॥ २१ ॥

न मृण्मये तु गृह्णीयात् वस्त्रजे फलजेऽपि वा ।
एवं पुष्पाणि पात्राणि सङ्ग्रहे विहितानि वै ॥ २२ ॥

(भगवन्नैवेद्यानयनेऽनुमताः वर्णादयः)

पुनः पुनः परीक्ष्यैवं दद्याद्देवाय भक्तितः ।
विप्रैर्वा वैष्णवैः भूपैः वैश्यैर्वापि तथाविधैः ॥ २३ ॥

शूद्रैर्वा दीक्षितैर्भक्तैः तथा दासान्तनामभिः ।
आनीतान्यपि गृह्णीयात् अनुलोमैस्तथाविधैः ॥ २४ ॥

आनीतं प्रतिलोमैर्यत् सर्वं वैखानसेतरैः ।
न गृह्णीयात् प्रयत्नेन देवदेवाय साधकः ॥ २५ ॥

वैखानसैर्यदानीतं पुष्पं वा फलमेव वा ।
पत्रमूलं तु बीजानि तथापूपानि कानिचित् ॥ २६ ॥

. . . . .

---

२०. a : S. M. चार्हाणि My. चाढ्यानि for सर्वाणि.
d : S. My. A. M. अथ for अपि.

२१. b : V. तले for दले, V. वेत्रजे for पत्रजे.

२२. a : S. My. A. M. on for तु.
b : S. My. A. M. वस्त्रे फलजेऽथवा.

२६. d : V. तथापूपादिरेव च.

देयानि हरये विप्रैः भक्त्या दत्तानि सम्मतैः ।
यानि कालाग्निपक्वानि मूलानि च फलानि च ॥ २७ ॥

(हविरादिनिवेदनार्हपात्रद्रव्यविवेकः)

हवींष्यनेकभेदानि पानकानि तथैव च ।
सुसुगन्धं च पानीयं मुखवासादिकं च यत् ॥ २८ ॥

सुवर्णे लोहजे पात्रे दारुजे शैलजेऽपि वा ।
पर्णजे मृण्मये वापि शाखेऽन्ये जलजेऽपिवा ॥ २९ ॥

दद्याद्देवाय विप्रेन्द्र तथा फलमयेऽपि वा ।
नान्यपात्रगतं दद्याद्विष्णवे सर्वजिष्णवे ॥ 30 ॥

न कांस्यपात्रे दातव्यं दद्याद्वापदि मन्त्रवित् ।
यद्यदायसपात्रस्थं तत्तद्देयं तु विष्णवे ॥ 31 ॥

पक्वं यदायसे भाण्डे फलं वा मूलमेव वा ।
अन्यस्मिन् भाजने क्षिप्त्वा विहिते तन्निवेदयेत् ॥ ३२ ॥

(भगवते सुगन्धादिद्रव्यनिवेदनप्रकारः)

आघ्रातव्यानि दृश्यानि फलानि सुशुभानि वै ।
यानि तान्येव देयानि हस्तेनैकेन विष्णवे ॥ ३३ ॥

---

२७. a : S. My. देवाय for देयानि.
d : S. My. M. तान्यपक्वानि सङ्ग्रहेत्.

३०. c : My. A. S. हेम for नान्य०.

३१. a : S. My. A. M. न कांस्यपात्रगं दद्यात्.
b : A. My. पक्वान्नं चापि मन्त्रवित्.
d : S. My. A M तत्तद्देवाय for तत्तद्देयं तु.

३२. c : My. दद्यात् for क्षिप्त्वा.
d : V. पुनः तत्तत् for विहिते तत्.

३३. c : V. यानि for तानि.

वामेन पाणिना स्पृश्य प्रकोष्ठं दक्षिणस्य तु ।
तेन दक्षिणहस्तेन दद्याद्भोज्यादिकं सदा ॥ ३४ ॥

उद्धृत्य देयं पानीयं मधुपर्कं च सादरम् ।
पत्रं पुष्पं गृहीत्वा तु दक्षिणेन तु पाणिना ॥ ३५ ॥

अधोमुखाङ्गुलेनैव दद्याद्देवाय भक्तितः ।
यादृग्विधेन हस्तेन यद्दातुमुचितं भवेत् ॥ ३६ ॥

तादृग्विधेन तं दद्यात् यथाप्रश्रितपाणिना ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां पुष्पादिविधानं
नाम एकविंशोऽध्यायः

---

३४. a : S. My. A. M. सव्येन for वामेन.

## द्वाविंशोऽध्यायः

### [वस्तुप्रतिनिधिविधानाध्यायः]

(कर्मसु विहितवस्त्वलाभे प्रतिनिधिकथनप्रार्थना)

गौतमः—

नित्ये नैमित्तिके काम्ये प्रायश्चित्ते मुनीश्वर ।
असन्निधौ यद्वस्तूनां कार्यं तन्मे मुने वद ॥ १ ॥

(स्नपनादिकर्मसु विहितवस्त्वलाभे प्रतिनिधिनिर्देशः)

नारदः—

स्नपनादौ तु सर्वत्र प्रोच्यते शृणु तद्द्विज ।
अर्घ्ये सिद्धार्थकं प्रोक्तम् अलाभेष्वन्यवस्तुषु ॥ २ ॥

पाद्यद्रव्येष्वलब्धेषु दूर्वा शस्ता मुनीश्वर ।
अलब्धेष्वपि तक्कोलं तथाचमनवस्तुषु ॥ ३ ॥

दध्यभावे पयः प्रोक्तं पयोऽभावे दधि स्मृतम् ।
गुडोदकं मध्वभावे विहितं मुनिपुङ्गव ॥ ४ ॥

अलब्धेषु कषायेषु त्वगश्वत्थस्य सम्मता ।
अलाभे चोष्णतोयस्य शीतवारि विशिष्यते ॥ ५ ॥

---

१. d : V. वदस्व माम् for मुने वद.
२. b : V. द्विजसत्तम for शृणु तद्द्विज.
३. a : M. प्रति for पाद्य.
   b : S. My. A. M. कुर्यान्मुस्तां for दूर्वा शस्ता.
   c : S. My. तत्कालं for तक्कोलं.
   d : S. My. तथा चन्दनवस्तुषु ; M. तथा च नव वस्तुषु.
४. b : V. स्वयं for स्मृतम्.
   c : V. मध्वभावे गुडोदं च.
५. c : S. My. A. M. वोष्णा० for चोष्ण.

मुक्ताफलं तु रत्नानामलाभे विहितं सदा ।
फलानामप्यलाभे तु विहितं कदलीफलम् ॥ ६ ॥

अलाभे सर्वलोहानां सुवर्णं तु प्रशस्यते ।
मार्जने सहदेवी च शेषालाभे प्रशस्यते ॥ ७ ॥

गन्धद्रव्येष्वलब्धेषु चन्दनं तु प्रशस्यते ।
व्रीहयस्त्वक्षताभावे यवाभावे तथैव च ॥ ८ ॥

घृताभावे तु तैलेन कुर्यादिक्षुरसेन वा ।
तथा गुडोदकाभावे इक्षुतोयेन कारयेत् ॥ ९ ॥

अलाभे चेक्षुतोयस्य कुर्याद्धि गुडवारिणा ।
नारिकेलरसाभावे कुर्यात्तत्पयसा द्विज ॥ १० ॥

अलाभे शान्तिवस्तूनां तुलस्यैव विधीयते ।
तथा मङ्गलवस्तूनामलाभेऽब्जेन कारयेत् ॥ ११ ॥

पुष्पप्रतिनिधिः पत्रं पत्रप्रतिनिधिः फलम् ।
फलप्रतिनिधिः पुष्पं मूलालाभे त्वगुच्यते ॥ १२ ॥

---

६. b : V. क्रमात् for सदा.
७. c : S. My. A. M. सहदेवी त्वलब्धेषु.
   d : S. My. A. M. मार्जनोदकवस्तुषु.
८. c : V. अलाभे for अभावे.
९. b : My. च for वा.
   c : V. शुद्ध for गुड.
   d : V. त्विक्षु for इक्षु.
१०. a : My. अलाभेष्विक्षुतोयेषु, S. A. M. तोयेषु for तोयस्य.
   c : My. V. नालिकेर for नारिकेल.
   d : S. M. तु for तत्.
११. b : My. गुडस्यैव for तुलस्यैव.
   d : V. अभावे for अलाभे.
१२. a : S. M. मंत्रं for पत्रं.
   b : S. M. तत्र for पत्र.

धूपालाभे तु दीपेन दीपाभावे तु धूपयेत् ।
पत्राणामप्यलाभे तु पालाशं पत्रमुत्तमम् ॥ १३ ॥

उशीरं चन्दनाभावे कुष्ठं त्वगरुणा भवेत् ।
नाभ्यभावे तु खट्वाभं तदभावे तु चन्द्रकम् ॥ १४ ॥

पात्राभावे शरावेण पात्रैर्वा यज्ञसम्मतैः ।
पालिकानामभावे तु शरावैरेव कारयेत् ॥ १५ ॥

बीजानामप्यलाभे तु मुद्गाः वा व्रीहयो यवाः ।
कूर्चाभावे तु वस्त्रेण वस्त्राभावे तु तन्तुना ॥ १६ ॥

अङ्कुराणामलाभे तु प्रशस्तं पल्लवं स्मृतम् ।
अभावे सर्वरजसां शालिजं तण्डुलं स्मृतम् ॥ १७ ॥

तोरणानामभावे तु वस्त्रैरेव तु कारयेत् ।
अथाष्टमङ्गलालाभे तत्तन्मुद्रास्तु दर्शयेत् ॥ १८ ॥

बिम्बाभावे सुवर्णं तु तदभावे तु वालुका ।
अलब्धेष्वासनेष्वत्र योगपीठं विधीयते ॥ १९ ॥

कुशास्तु शयनाभावे त्वलाभे हविषः फलम् ।
प्रपा स्यान्मण्डपाभावे प्रपाभावे तु मण्डपम् ॥ २० ॥

---

१३. a : V. अभावे for अलाभे.
१४. c : S. My. M. कट्वाभं A. खट्वाभं for खट्वाभम्.
१५. b : My. सम्मितैः for सम्मतैः.
१६. a : M. अभावे for अलाभे.
    b : My. A. V. ०थवा for यवाः.
    c : M. कुंभ for कूर्च.
    d : S. My. A. M. प्रशस्तपल्लवेनैव.
१७. a : S. My. A. M. तदभावे विधीयते.
१८. d : My. A. मुद्रां for मुद्राः.
१९. b : V. अलाभे for अभावे.

सालानामप्यलाभे तु सालमेकं शुभं पुनः ।
घण्टाभावे तु पटहः तदभावे तु तालतः ॥ २१ ॥
वीणाभावे तु वाद्येन तथा गेयेन भावयेत ।
गेयाभावे तु वाद्येन गेयाभावे तथैव च ॥ २२ ॥
वंशाभावे तु गेयेन ध्वजाभावे तु कर्पटम् ।
कुण्डाभावे तु विहितं स्थण्डिलं वालुकान्वितम् ॥ २३ ॥
वेद्यभावे तु विहितं स्थण्डिलं केवलं शुभम् ।
स्रुचोऽभावे स्रुवेणैव स्रुवाभावे दलेन वै ॥ २४ ॥
कुशाभावे तु काशैस्तु काशाभावे तृणैश्शुभैः ।
अमत्रं स्थाल्यभावे तु विहितं चरुकर्मणि ॥ २५ ॥
वितानाभावतो वासो देशाभावे तु कुत्रचित् ।
अलाभे सर्वतोयानां जलं प्रतिनिधिः स्मृतम् ॥ २६ ॥
संख्याभावे यथालाभं सर्वालाभे तु मानसम् ।
जलाभावे तु मनसा कल्पयेन्नित्यकर्मणि ॥ २७ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
प्रतिनिधिविधानं नाम द्वाविंशोऽध्यायः

---

२१. a : S A. M. अभावे for अलाभे.
b : V. शालमेवं प्रशस्यते.
c : S. A. V. M. कांस्येन for पटहः.
२२. b : S. My. A. M. गेयाभावे तथैव च.
२३ b : S. My. A. M. कर्पटैः for कर्पटम्.
२४. b : V. मण्डलं for स्थण्डिलम्.
d : S. अलाभे for अभावे ; M. वा for वै.
२५. a : S. My. अलाभे for अभावे.
c : S. My. A. M. अवटं चुल्यभावे तु.
२६. c : V. भोगानां for तोयानाम्.
२७. a : V. सर्वाभावे for संख्याभावे; S. My. A. M. यथेच्छातः for यथालाभम्.

# त्रयोविंशोऽध्यायः

## [पवित्रोत्सवविधिनिरूपणाध्यायः]

(भगवदाराधनक्रमे प्रायश्चित्तापनोदोपायकथनप्रार्थना)

**गौतमः—**

नित्ये नैमित्तिके काम्ये मन्त्री सम्पूजयन् हरिम् ।
यत्कृत्वा विधिना सम्यक् मुने कर्म समाहितः ॥ १ ॥
प्रायश्चित्ती तु न भवेत् तन्मे वद मुनीश्वर ।

(पवित्रोत्सवस्य प्रायश्चित्तापनोदकत्वापादनम्)

**नारदः—**

पवित्रपूजया मन्त्री सम्पूर्णं फलमाप्नुयात् ॥ २ ॥
संवत्सरस्य कृत्स्नस्य नित्यनैमित्तिकादिषु ।
विनश्यति महापापं मनोवाक्कायसंभवम् ॥ ३ ॥
प्रायश्चित्ती तु न भवेदिति सम्यक् निबोध वै ।

(पवित्रोत्सवविधिकथनप्रार्थना)

**गौतमः—**

विधानं तस्य मे ब्रूहि पृच्छतो मुनिसत्तम ॥ ४ ॥
यत्कृत्वा साधकः सम्यक् परिपूर्णफलो भवेत् ।

(पवित्रारोहणकालः)

**नारदः—**

द्वादश्यां श्रवणे वापि सूर्ये कर्कटके स्थिते ॥ ५ ॥

---

१. b : S. My. A. M. ०येत् for ०यन्.
c : S. दत्त्वा for कृत्वा.
३. c : V. तथा for महा.
४. a : V. प्रायश्चितं च for प्रायश्चित्ती तु.
b : A. M. S. सत्यम् for सम्यक्.

सिंहस्थे वाथ कन्यास्थे पवित्रारोहणं स्मृतम् ।

(पवित्रारोहणस्थानम्)

प्रथमावरणे वापि द्वितीयावरणेऽपि वा ॥ ६ ॥

तृतीयावरणे वापि प्रासादाग्रे तु मण्डपे ।
अग्रालाभे तथान्यत्र यथावाञ्छितदिग्गते ॥ ७ ॥

(आलयाग्रे मण्डपे वेदिकाकल्पनप्रकारः)

वेदिकां मध्यतः कुर्यात् चतुरश्रां समां शुभाम् ।
चतुर्हस्तायतां विप्र तावद्विस्तारसंयुताम् ॥ ८ ॥

दर्पणोदरसंकाशामुन्नतां चतुरङ्गुलाम् ।

(अग्निकुण्डकल्पनप्रकारः)

अस्मिन् वै मण्डपे कुर्याद्वेदिकायास्तथोत्तरे ॥ ९ ॥

अग्नेरायतनं शुभ्रमेकहस्तायतं शुभम् ।

(प्रासादाग्रे मण्डपाभावे पवित्रारोपणार्थं मण्डपकल्पनादिप्रकारः)

तदलाभे तथा कुर्यादन्यस्मिन् मण्डपे तु वा ॥ १० ॥

वितानमूर्ध्वतो बध्वा नूतनं तु शुभं महत् ।
स्तम्भान् संवेष्टयेत्पश्चात् नवैर्वस्त्रैर्विचित्रकैः ॥ ११ ॥

तिरस्करिण्या संवेष्टय मण्डपं सर्वतो बहिः ।

(पवित्रकल्पनप्रकारः अधमपवित्रस्य लक्षणञ्च)

पवित्राणि ततः कुर्यात् कृत्वा चैवाङ्कुरार्पणम् ॥ १२ ॥

---

६. b : V. आराधनं A. आरोपणं for आरोहणम्.
d : S. M. तथा for ऽपि वा.
७. d : S. My. M. A. यथावस्थे तु for यथावाञ्छित.
८. a : A. My. कृत्वा for कुर्यात्.
९. b : S. A. M. अङ्गुलैः for अङ्गुलाम्.
d : A. वेदिकायां for वेदिकायाः.
१२. a : My. A. M. वेष्टयं तत् for संवेष्टय.

कन्यया निर्मितं सूत्रं त्रिगुणञ्चैव कारयेत् ।
पुनस्तत्त्रिगुणं कुर्यात् केशरोमादिवर्जितम् ॥ १३ ॥
प्रक्षालितेन कुर्वीत पवित्रं तेन मन्त्रवित् ।
मूलबिम्बस्य नाभ्यन्तं सप्तविंशतितन्तुकम् ॥ १४ ॥
पवित्रमधमं प्रोक्तमाकण्ठान्मनुजप्रियम् ।

(मध्यमपवित्रलक्षणम्)

कण्ठमूलात्तथोर्वन्तमन्तरिक्षाचरप्रियम् ॥ १५ ॥
द्विगुणैस्तन्तुभिर्युक्तमधमात्तु पवित्रकात् ।
पवित्रं मध्यमं प्रोक्तं देवदेवस्य सुव्रत ॥ १६ ॥

(उत्तमस्य पवित्रस्य लक्षणम्)

अंसायामात्समारभ्य जान्वन्तं चोत्तमं स्मृतम् ।
मध्यमात्त्रिगुणैः सूत्रैस्त्रिदशानां सुखप्रदम् ॥ १७ ॥

(वनमालापवित्रकलक्षणम्)

आकण्ठात्पादपर्यन्तं वनमालापवित्रकम् ।
अष्टोत्तरेण सूत्राणां सहस्रेण समन्वितम् ॥ १८ ॥

(अधमादिपवित्रगन्थिसंख्या)

द्वादश ग्रन्थयः प्रोक्तास्त्वधमे तु पवित्रके ।
चतुर्विंशति संख्याता मध्यमे ग्रन्थयः स्मृताः ॥ १९ ॥

---

१३. c : My. त्रिगुणितं for तत्त्रिगुणं.
१५. b : V. कर्णा॰तमनुजप्रियम्.
 c : V. कर्ण॰ for कण्ठ॰.
१६. b : V. विधिः क्रमात् for पवित्रकात्.
१७. a : V. असंयुस्मात् for अंसायामात्.
 c : V. ॰द्वि for ॰त्रि, S. M. सूत्रं for सूत्रैः.
१८. c : S. सूत्रेण for सूत्राणाम्.
१९. d : V. तथा for स्मृताः.

षट्त्रिंशद्ग्रन्थयः श्रेष्ठे पवित्रे समुदाहृताः ।
वनमालापवित्रे तु कुर्यादिष्टोत्तरं शतम् ॥ २० ॥

ग्रन्थीनामत्र विप्रेन्द्र सूत्रेणैकेन तेन वै ।

(अधिवासादिपवित्रलक्षणम्)

अधमेन समं कार्यमधिवासपवित्रकम् ॥ २१ ॥

कुम्भकस्यैवमेव स्यात् पवित्रं करकस्य च ।
अग्नेश्चैवाधमं प्रोक्तं पवित्रं तु तथा द्विज ॥ २२ ॥

मेखलानां प्रमाणैस्तु पवित्राणां त्रिकं तथा ।

(मण्डलपवित्रलक्षणम्)

पद्मनाभ्यरनेमीनां प्रमाणैर्मण्डलस्य तु ॥ २३ ॥

पवित्रकानि चत्वारि कनिष्ठादीनि पूर्ववत् ।
एवमेव तु चक्राब्जे भद्रके त्वधुनोच्यते ॥ २४ ॥

कर्णिकायाः प्रमाणेन पवित्रमधमं भवेत् ।
केसरावधिरेखायाः प्रमाणेन तु मध्यमम् ॥ २५ ॥

दलान्तरेखामानेन पवित्रं श्रेष्ठमुच्यते ।
चतुर्थं पीठमानेन वनमालापवित्रकम् ॥ २६ ॥

---

२०. a : S. M. P. प्रोक्ता for श्रेष्ठे.
b : S. M. P. श्रेष्ठपुण्ये पवित्रके.
२१. b : A. S. एतेन for एकेन.
२२. b : S. My. A. P. तु for च.
२३. a : S. My. A. प्रमाणे for प्रमाणैः.
b : P. पवित्राणि for पवित्राणाम्.
c : S. A. M. V. P. अन्त० for अर०.
२४. c : V. कृत्वा for एव.
d : A. My. ०प्य० for त्व०.

(बिम्बादीनां पवित्रलक्षणम्)

पवित्राण्यथ बिम्बानामधमेन समानि वै ।
अन्येषां परिवाराणां पवित्राणि यथारुचि ॥ २७ ॥

द्विजेन्द्राणां नरेन्द्राणां नाभेरूर्ध्वमधःस्तनात् ।
यथाभिमतसूत्रैस्तु यथाभिमतपर्वभिः ॥ २८ ॥

पवित्रकानि कुर्वीत शोभनानि विचक्षणः ।
पवित्राण्येवमेव स्युराचार्याणाञ्च मन्त्रिणाम् ॥ २९ ॥

(सभित्तिकबिम्बपवित्रलक्षणम्)

वर्णशोभान्विते वापि सभित्तौ शयनान्विते ।
मूलबिम्बे तथा कुर्यात् उत्सवार्चाप्रमाणतः ॥ ३० ॥

पवित्राण्यधमादीनि बिम्बयोग्यानि मन्त्रवित् ।
तस्याप्यसन्निधौ कुर्यात् कर्मबिम्बानुरूपतः ॥ ३१ ॥

न मूलबिम्बयोग्यानि पवित्राण्यत्र कारयेत् ।

(पवित्ररञ्जनादिप्रकारः अधिवासोपक्रमश्च)

कुङ्कुमाद्यैरथैतानि रञ्जयित्वा तु पर्वसु ॥ ३२ ॥

शातकुम्भमयैः पुष्पैः राजतैः रत्नसंयुतैः ।
अलङ्कारैरलङ्कृत्य तथा तैर्बहुभिः शुभैः ॥ ३३ ॥

स्थापयित्वा शुभे पात्रे पुष्पधूपादिवासिते ।
नवैर्वस्त्रैस्तु संवेष्टय प्रारभेद्यजनं ततः ॥ ३४ ॥

---

२७. a : V. अन्य for अथ.
२८. a : V. नृप for नर.
२९. d : V. तु for च.
३२. a : V. निर्मूल० M. तन्मूल० for न मूल०.
c : S. My. A. M. कुसुंभ for कुङ्कुम.
d : My. V. पूर्ववत् for पर्वसु.
३३. d : S. My. A. M. P. ०पि for तैः
३४. b : S : My. A. M. ०धूपाधिवासिते for धूपादिवासिते.

सम्भारग्रहणं कृत्वा दशम्यामेव मन्त्रवित् ।
एकादश्यामुपोष्याथ निशायामधिवासयेत् ॥ ३५ ॥

(मण्डपालङ्करणम् तोरणार्चनञ्च)

पालिकाभिः सवस्त्राभिरलङ्कृत्य तु मण्डपम् ।
तोरणानि समभ्यर्च्य वस्त्रच्छन्नानि देशिकः ॥ ३६ ॥

(मण्डपद्वारकुम्भसम्बन्धिनामष्टदेवानां निर्देशः)

द्वारेषु कलशानष्टौ न्यसेन्मन्त्रविचक्षणः ।
पूर्वद्वारे तु कलशौ द्वौ तयोः पूर्णपुष्करौ ॥ ३७ ॥
दक्षिणद्वारघटयोरानन्दं नन्दमेव च ।
वीरसेनसुषेणौ च पश्चिमद्वारकुम्भयोः ॥ ३८ ॥
सम्भवप्रभवौ द्वौ तु उत्तरद्वारकुम्भयोः ।

(मण्डपद्वारकुम्भेषु रत्नप्रक्षेपादिविवेकः)

पद्मरागप्रवालौ तु पूर्वदिग्द्वारकुम्भयोः ३९ ॥
दक्षिणद्वारघटयोः वैडूर्यं पुष्यकं तथा ।
नीलं मरकतं चैव पश्चिमद्वारकुम्भयोः ॥ ४० ॥
मुक्ताफलं च स्फटिकमुत्तरद्वारकुम्भयोः ।
एवं कृत्वा तु रत्नानि देवानावाह्य पूजयेत् ॥ ४१ ॥
प्रत्येकं वाससाच्छाद्य नवेन सदशेन तु ।
चतुर्दिक्षु पताकाश्च तत्तद्वर्णाः प्रकल्पयेत् ॥ ४२ ॥

(पवित्राधिवासार्थवेदीकल्पनं कुम्भे देवपूजनं च)

मण्डपे पूर्वभागे तु वेदीं कुर्वीत शालिभिः ।
द्विहस्तायामविस्तारामेकहस्तोच्छ्रयां शुभाम् ॥ ४३ ॥

---

३७. d : V. तौ for द्वौ, M. पुष्पकौ S. पुष्कलौ for पुष्करौ.
३८. a : My. घटकौ for घटयोः.
c : V. तु for च.

पवित्रकाधिवासार्थं वस्त्रैश्छन्नां समन्ततः ।
वस्त्रपीठे तु संस्थाप्य पात्राण्यर्घ्यादिकानि तु ॥ ४४ ॥
आचार्योऽहतवासास्तु बद्धोष्णीषस्स्वलङ्कृतः ।
कुम्भे सम्पूजयेद्देवं दीक्षायां तु यथोदितम् ॥ ४५ ॥

(करकास्त्रपूजनम्)

घटस्य वामपार्श्वे तु करकेऽस्त्रं तु पूजयेत् ।

(पुस्तकार्चनक्रमः)

शालिभिः पीठिकां कृत्वा पूर्ववल्लक्षणान्विताम् ॥ ४६ ॥
पुस्तकं वाससाच्छाद्य तत्र सत्त्वं यजेत्ततः ।
'मूल'मन्त्रेण गन्धाद्यैराचार्यो प्राङ्मुखो द्विज ॥ ४७ ॥

(पवित्रारोहणक्रमे पुष्पमण्डले भगवतः पूजनप्रकारः)

वेद्यां तु मण्डलं कृत्वा पुष्पैरेव सितादिभिः ।
मूलबिम्बात् समावाह्य तस्मिन् सम्पूजयेद्धरिम् ॥ ४८ ॥
मूलबिम्बे यदा कुर्यात् पवित्रारोहणं तदा ।
तस्मिन् सम्पूजयेद्भक्त्या भोगैः कालानुकूलतः ॥ ४९ ॥
कुर्याद्यच्चोत्सवार्चायां कर्मार्चायां तु वा द्विज ।
तस्यामावाह्य विधिना मूलबिम्बात्तु मन्त्रवित् ॥ ५० ॥

---

४५. b : S. लब्ध० for बद्ध०.
४६. a : V. भागे for पार्श्वे.
b : S. P. करकस्थं My. A. करकास्थं for करकेऽस्त्रम्.
४७. a : My. मस्तकं for पुस्तकं.
b : V. तत्र न्यस्तं for तत्र सत्त्वं.
d : V. अभ्यर्च्य for आचार्यो.
४९. a : S. My. A. यथा for यदा.
b : S. A. तथा for तदा.
५०. a : A. M S V. यद्वोत्सवा० for यच्चोत्सवा०.
b : My. यत् for वा.
d : V. बिम्बं for बिम्बात्, S. पूर्ववत् for मन्त्रवित्.

पुष्पमण्डलमध्ये तां प्राङ्मुखं स्थाप्य पूजयेत् ।

(मण्डलदेवतान्यासक्रमः)

उदङ्मुखस्तु मतिमान् मण्डले ज्याक्रमेण तु ॥ ५१ ॥

दिशमैन्द्रीं समारभ्य न्यस्याः मण्डलदेवताः ।

(अधिवासनाङ्गहोमनिर्देशः)

ततो होमं प्रकुर्वीत महोत्सवविधौ यथा ॥ ५२ ॥

ततोऽधिवासयेन्मन्त्री पवित्राणि यथाविधि ।

(पवित्रग्रन्थिपूजनविवेकः)

अधमे ग्रन्थयः पूज्याः 'द्वादशार्णाक्षरैः' क्रमात् ॥ ५३ ॥

चतुर्विंशतिभिस्तत्त्वैः पूजनीयाश्च मध्यगाः ।
'द्वादशार्णाक्षरै'श्चैव धरान्तैः तत्त्वसञ्चयैः ॥ ५४ ॥

उत्तमे ग्रन्थयः पूज्याः षट्त्रिंशद्भिर्यथाक्रमम् ।
ग्रन्थयो वनमालायां सर्वैरेतैः पुनः पुनः ॥ ५५ ॥

(अधिवासे नृत्तादिविधानम्)

एवं कृत्वाधिवासं तु नृत्तगेयादिसंयुतम् ।

(अधिवासादनन्तरदिनकृत्यम् मण्डलाद्बिम्बादिविसर्जनम्)

प्रभातायां ततः स्नात्वा जप्त्वा चैव यथाविधि ॥ ५६ ॥

---

५१. d : V. ०युत्क्रमेण for ज्याक्रमेण.
५२. b : My. A. न्यस्य for न्यस्याः.
    d : A. तथा for यथा.
५३. d : A. M. V. पृथक् for क्रमात्.
५४. d : S. M. सुकान्तैः A. स्वरान्तैः for धरान्तैः M. पञ्चमैः for संञ्चयैः.
५५. a : S. My. A. M. उत्तरे for उत्तमे.
    c : V. बहुमालायाः for वनमालायां.
५६. a : आरभ्य   ५७. b : पर्यन्तं V. om.

आदाय मण्डलाद्बिम्बं स्थाप्य पश्चिमतस्ततः ।
मण्डलं केवलं चेत्तु तस्मात् कुम्भे विसर्जयेत् ॥ ५७ ॥

(पवित्रारोहणात् पूर्वं भगवतः आराधनप्रकारः)

तस्यां वेद्यां तु कुर्वीत रजोभिर्मण्डलं शुभम् ।
चक्राब्जं द्वादशारं वा भद्रकं वा विचक्षणः ॥ ५८ ॥

पूर्ववत्पूज्य कुम्भेशं तथास्त्रकवचान्वितम् ।
आसन्नमण्डलं ध्यात्वा पूजयित्वाथ देवताः ॥ ५९ ॥

अर्चाः सम्भाव्य विधिवदलङ्कृत्य यथाधनम् ।
मण्डलस्य तु तां मध्ये पद्मे संस्थाप्य पूजयेत् ॥ ६० ॥

अथवा पश्चिमे देशे मण्डलस्य समीपतः ।
वरासने नवैर्वस्त्रैरास्तीर्णैः सदशैश्शुभैः ॥ ६१ ॥

संस्थाप्याराधयेदर्चां यथाविहितमाचरेत् ।

(अग्नितर्पणनिर्देशः)

अग्नौ सन्तर्पयेत्पश्चात् पूर्ववद्विधिनैव तु ॥ ६२ ॥

(देवादीनां पवित्रारोपनक्रमः)

पवित्रैर्भूषयेत्पश्चात् अर्चायां संस्थितं प्रभुम् ।
'अतो देवा'इति जपन् कनिष्ठाद्यं यथाक्रमम् ॥ ६३ ॥

भूषयेन्मण्डलं पश्चात् माण्डलीयैः पवित्रकैः ।
एकेन पूजयेत्कुम्भं करकं तु तथैव च ॥ ६४ ॥

---

५९. c : S. My. A. M. आसनं for आसन्न.
d : S. My. A. पूजयित्वा स्व देवताम्.
६०. a : S. A. M. P. अर्चाङ्गं स्नाप्य for अर्चाः सम्भाव्य.
b : A. P. तु साधकः for यथाधनम्.
c : S. My. A. V. तत् for ताम्.
६१. c : V. वीरासने for वरासने.
६२. b : V. यथाभिमतम् for यथाविहितम्.
६४. b : S. V. M. मण्डलीयैः for माण्डलीयैः.

ततो विनिक्षिपेन्मन्त्री पवित्रमधमं तथा ।
कुण्डस्य मेखलास्तिस्रस्त्रिभिरन्यैस्तु भूषयेत् ॥ ६५ ॥

परिवारपवित्रैस्तु परिवारान् यजेत्ततः ।
अथालङ्कारबिम्बानि तथैकैकेन भूषयेत् ॥ ६६ ॥

ततस्तु विप्रमुख्यादीन् स्त्रकैश्चैव विभूषयेत् ।
एवं पवित्राण्यारोप्य मन्त्रमेनमुदीरयेत् ॥ ६७ ॥

(क्षमायाचनप्रकारः)

'इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ।
श्रद्धाभक्तिक्रियामन्त्रद्रव्यहीनं जनार्दन ॥ ६८ ॥

यत्पूजितं मया देव परिपूर्णं तदस्तु ते ।
वनमाला यथा देव यथा श्रीवत्सकौस्तुभौ ॥ ६९ ॥

यथा किरीटं देवेश तथैतानि वह प्रभो ।
हीनमद्य क्षमस्वेति' प्रार्थयेच्च पुनः पुनः ॥ ७० ॥

(आचार्यादिसम्माननम्)

ततस्तु पूजयेद्भक्त्या यजमानस्तु देशिकम् ।
गन्धानुलेपनैः पुष्पैर्वस्त्रैश्च वरभूषणैः ॥ ७१ ॥

---

६५. a : P. V. तथाग्नौ निक्षिपेन्मन्त्री.
 d : V. भूषितैः for भूषयेत्.
६६. c : V. अङ्ग for अथ०, S. M. बीजानि for बिम्बानि.
 d : S. My. A P. पूजयेत् for भूषयेत्.
६७. a : V. बेर for विप्र.
 b : S. M. विवेष्टयेत् for विभूषयेत्.
 d : A. M. V. उदाहरेत् for उदीरयेत्.
६८. d : S. My. V. द्रव्याहीनं for द्रव्यहीनम्.
६९. b : V. मे for ते.
 c : V. मन० for वन.
७१. c : S. M. दिव्यैः for पुष्पै.

निष्काणां तु शतं वापि शतार्धं शक्तितोऽपि वा ।
दक्षिणां गुरवे दत्त्वा प्रसाद्य च पुनः पुनः ॥ ७२ ॥

यतींश्च वैष्णवान् भक्तान् विद्यागुणवयः क्रमात् ।
सम्पूजयेद्यथावित्तं यथाश्रद्धं यथारुचि ॥ ७३ ॥

आचाण्डालाद्यमन्नाद्यं दद्यात्तत्रैव चाहनि ।

(पवित्रावरोहणक्रमः तद्विनियोगक्रमश्च)

तस्मिन्नहनि वान्यस्मिन् पञ्चमे सप्तमेऽपि वा ॥ ७४ ॥

पूर्ववत्पूजयित्वा तु कुम्भाद्यं मन्त्रवित्तमः ।
ततोऽवरोहणं कुर्यात्पवित्राणां यथाक्रमम् ॥ ७५ ॥

बिम्बादारभ्य मन्त्रेण 'द्वादशार्णेन' देशिकः ।
आचार्यस्तानि सर्वाणि समादद्याद्यदीच्छति ॥ ७६ ॥

अथवा वैष्णवेभ्यस्तु दद्याद्देवस्य सन्निधौ ।

(पवित्रारोपणप्रयुक्तद्रव्यविनियोगः)

अत्रोपयोगद्रव्याणि समादद्याद्गुरुः स्वयम् ॥ ७७ ॥

(मूलबिम्बे भगवतः उद्वासनम्)

उद्वासयेत्तु सर्वस्मात् मूलबिम्बे सुरेश्वरम् ।
प्रासादस्थापितस्यैवं पवित्रारोहणं स्मृतम् ॥ ७८ ॥

(गृहार्चायां पवित्रारोपणे वैशिष्ट्यम्)

गृहे पवित्रयागे तु विशेषमधुनोच्यते ।
विभवानुगुणं तत्र मण्डपाद्यं विधीयते ॥ ७९ ॥

---

७२. b : S. M. निष्कतो for शक्तितो.
७३. b : M. गुणवतः for ०गुणवयः.
७४. a : S. My. A. M. आश्वचण्डालमन्नाद्यं
c : M. च for वा.
७५. a : S. My. A. M. पूजयित्वा तु कुंभाद्यं.
b : S. A. M. अमन्त्रं My. समंत्रं for कुंभाद्यं.
७८. a : M. सर्वांस्तान् for सर्वस्मात्.

बिम्बेनाधिष्ठितं मन्त्री मण्डलं न यजेद्गृहे ।
दक्षिणां गुरवे दद्यात् सर्वस्वं वार्धमेव वा ॥ ८० ॥

आवाहनं तु हृदयात् कुम्भादिष्वपि नित्यवत् ।

(पवित्रारोहणफलकीर्तनम्)

अनेन विधिना विष्णोः पवित्रारोहणं तु यः ॥ ८१ ॥

कुर्यात् शुद्धेन मनसा तस्य पुण्यफलं शृणु ।
पुण्यार्थी चेल्लभेत्पुण्यं धनार्थी चेल्लभेद्धनम् ॥ ८२ ॥

कामान् सम्प्राप्नुयात्कामी निष्कामो मोक्षमाप्नुयात् ।
भक्त्यर्थी चाप्नुयात् भक्तिं प्रजार्थी वै लभेत् प्रजाम् ॥ ८३ ॥

कीर्त्यर्थी कीर्तिमतुलां विद्यां विद्यार्थी चाप्नुयात् ।
यावदायुः सुखं जीवेदरोगो निरुपद्रवः ॥ ८४ ॥

प्रतिसंवत्सरं यस्तु विधिना परिकल्पयेत् ।
पवित्रकं जगद्धातुः तस्य पुण्यफलस्य वै ॥ ८५ ॥

न संख्या विद्यते ब्रह्मन् इति सम्यक् तवोदितम् ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां पवित्रारोहण-
विधिर्नाम त्रयोविंशोऽध्यायः

---

८०. b : S. My. M. मण्डपं for मण्डलं, P. च for न.
८१. d : A आरोपणं for आरोहणम्.
८३. a : My. कामार्थी चाप्नुयात् कामान्.
c : V. प्रा० for चा०.
d : S. My. प्राप्नुयात् for वै लभेत्, S. प्रजाः for प्रजाम्.
८४. b : S. M. विद्यार्थी चाप्नुयाच्च ताम्, V. विद्यार्थी काममाप्नुयात्.

# चतुर्विंशोऽध्यायः

## [आराधनानुरूपफलभेदनिरूपणाध्यायः]

(आराधनानुसारं फलभेदविषयप्रतिपादनार्थं नारदं
प्रति गौतमकृताभ्यर्थना)

गौतमः—

विष्णोर्देवादिदेवस्य श्रद्धाभक्तिसमन्वितः ।
यत्कृत्वा यत्समाप्नोति फलमद्य वदस्व मे ॥ १ ॥

(तुलस्याः माहात्म्यं तया भगवदाराधनफलञ्च)

नारदः—

वर्णानां तु यथा विप्रः तीर्थानां जाह्नवी यथा ।
सुराणां च यथा विष्णुः पत्राणां तुलसी तथा ॥ २ ॥

तुलस्यानुदिनं देवं योऽर्चयेद्गरुडध्वजम् ।
जन्मदुःखजरारोगैः मुक्तो मुक्तिमवाप्नुयात् ॥ ३ ॥

(एकादश्यर्चनविधिः फलञ्च)

एकादश्यां सिते पक्षे उपोष्य विधिपूर्वकम् ।
द्वादश्यां योऽर्चयेद्विष्णुं तस्य पुण्यफलं शृणु ॥ ४ ॥

सर्वपापैर्विनिर्मुक्तो सर्वरोगैस्सुदारुणैः ।
इह लोके परान् भोगान् विपुलाभिमतान् सुखम् ॥ ५ ॥

---

प्रारम्भे A. कोषे-'श्रीरस्तु, अविघ्नमस्तु,' इत्यधिकः.
१. a : S. My. अधिदेवस्य for आदिदेवस्य.
c : S. M. यज्ञित्वा for यत्कृत्वा.
२. c : S. My. A. M. तु for च.
५. d : S. My. A. M. ०नपि for ०भिम०.

भुक्त्वा कीर्तिं परां प्राप्य सर्वलोकातिशायिनीम् ।
विष्णुलोकं समाप्नोति वैष्णवश्च भविष्यति ॥ ६ ॥

यः कुर्यान्मासि मास्येवं तस्य पुण्यफलं शृणु ।
चिन्तयेन्मनसा यद्यत्तत्तत्सम्प्राप्नुयान्नरः ॥ ७ ॥

अणिमादिगुणान् भुक्त्वा पश्चात्कैवल्यमाप्नुयात् ।

(कृष्णजयन्तीव्रतविधिः फलञ्च)

जयन्त्यामुपवासं तु कृत्वा योऽर्चयेद्धरिम् ॥ ८ ॥

तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्युतः ।
कौमारे यौवने बाल्ये वार्धक्ये यदुपार्जितम् ॥ ९ ॥

तत्पापं शमयेत्कृष्णः तिथावस्यां हि पूजितः ।
स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं तथा ॥ १० ॥

तत्सहस्रगुणं प्रोक्तं जयन्त्यां यत्कृतं भवेत् ।
आचार्यदक्षिणादत्ता दत्तायुतगुणा भवेत् ॥ ११ ॥

धनधान्यप्रदा पुण्या सर्वपापहरा शुभा ।
समुपोष्या हरेर्यत्नात् जयन्ती नाम याष्टमी ॥ १२ ॥

जयन्त्यामुपवासस्तु महापातकनाशनः ।
सा कार्या सुमहापुण्या सर्वैः पापहरा शुभा ॥ १३ ॥

---

६. b : M. ०लोके for ०लोका०.
८. a : S. गुणं for गुणान्.
b : S. My. A. भाग्भवेत् for आप्नुयात्.
d : S. My. A. M. अर्चयते for अर्चयेद्ध०.
१०. c : S. My. A. M. ज्ञानं for स्नानं, S. ततो for जपो.
१२. c : S. My. A. M. युक्ता for यत्नात्.
१३. c : A. सा महा० for सुमहा०.
d : S. My. A. M. सर्व० for सर्वैः.

जयन्त्यां लभते पुत्रमुपोष्य सुसमाहितः ।
वन्ध्या यदि महाभागं वित्तविद्यासमन्वितम् ॥ १४ ॥

वैष्णवं धार्मिकं शूरं वीरं वंशकरं शुभम् ।
सुभगं सुन्दरं शान्तं पञ्चरात्रविशारदम् ॥ १५ ॥

पुरन्ध्री निस्तनी या तु जयन्त्यां समुपोष्य तु ।
सुस्तनी सा भवेद्विप्र प्रिया भर्तुः सदा भवेत् ॥ १६ ॥

सौभाग्यं दुर्भगा याति कांक्षितं च सदा लभेत् ।
कांक्षितं प्राप्नुयात् कन्या वरं यौवनगर्वितम् ॥ १७ ॥

सुभगं वित्तविद्याढ्यं सर्वभूतहिते रतम् ।
विष्णुपूजापरं शान्तं विद्वांसं वैष्णवं शुचिम् ॥ १८ ॥

क्षेत्रार्थी क्षेत्रमाप्नोति ग्रामार्थी ग्राममाप्नुयात् ।
धनार्थी धनमाप्नोति विद्यार्थी तामवाप्नुयात् ॥ १९ ॥

धर्मार्थी प्राप्नुयाद्धर्मं कन्यार्थी कन्यकां लभेत् ।
सर्वान् कामानवाप्नोति तिथावस्यामुपोषितः ॥ २० ॥

एवमेव पुनर्वस्वोरार्द्रायां श्रवणे तथा ।
अवतीर्णो हरिर्यस्मिन् नक्षत्रेऽन्येऽपि सुव्रत ॥ २१ ॥

---

१४. c : S. My. A. M. महाभाग for महाभागम्.
१५. c : S My. A. M. दान्तं for शान्तं.
१६. b : S. My. M. उपोष्यति for उपोष्य तु.
१७. b : My. फलं for सदा, V. भवेत् for लभेत्.
c : V. पारं for कन्या.
d : V. परं for वरं.
१८. a : S. My. वित्त० for विद्या०.
२०. a : S. My. A. M. कन्यार्थी प्राप्नुयात्कन्याम्.
b : S. My. A. M. धर्मार्थी धर्ममाप्नुयात्.
२१. d : My. A. नद्यान्तत्रैव चाहनि.

उपोषितो यजंस्तत्र देवदेवमनामयम् ।
पूर्ववत्फलमाप्नोति नात्र कार्या विचारणा ॥ २२ ॥

(भागवतार्चनफलम्)

यस्तु भागवतं भक्त्या पूजयेदासनादिभिः ।
तस्य पुण्यफलावाप्तिं कः शक्नोत्यभिवर्णितुम् ॥ २३ ॥

(ऊर्ध्वपुण्ड्रधारणफलम्)

ऊर्ध्वपुण्ड्रम् ऋजुं शुक्लं यो धत्ते नित्यमात्मवान् ।
तस्य प्रसादं कुरुते विष्णुलोकनमस्कृतः ॥ २४ ॥

वशं यान्ति जनास्तस्य योषितो मदनोद्धताः ।

(विष्णोः आलयमार्जनादिफलम्)

यः कुर्यान्मार्जनं विष्णोरालये पुरुषोऽङ्गना ॥ २५ ॥

सिञ्चेद्वा गन्धतोयेन कुर्याद्वा लेपनं सकृत् ।
अणिमादिगुणान् भुक्त्वा निर्वाणं प्राप्नुयात् ततः ॥ २६ ॥

(विष्णवे स्नानभोगादिदानफलम्)

स्नानभोगान् प्रयच्छेद्यो वारुणं लोकमाप्नुयात् ।
अनुलेपं प्रयच्छेद्यो गन्धश्रेष्ठं सितेतरम् ॥ २७ ॥

वायुलोकं समासाद्य कामानिष्टानवाप्नुयात् ।
यो दद्यात्पत्रपुष्पाद्यं सोमलोकमवाप्नुयात् ॥ २८ ॥

---

२२. a : S. My. A. M. यजेत् for यजन्.
२४. a : M. पुण्ड्रांकित for पुण्ड्रमृजुं.
b : S. My. A. M. आप्नुयात् for आत्मवान्.
c : My. A. विप्रदं for प्रसादं.
२६. d : V. नरः for ततः.
२७. c : S. My. A. M. om.

यो दद्याद्विष्णवे घण्टां सुस्वनां तु त्रिलोहजाम् ।
विधिना संस्कृतां कान्तां पक्षीशादिविभूषिताम् ॥ २९ ॥

वृहस्पतिसमो भूत्वा जीवेद्वर्षशतं नरः ।
दद्याद्यो विष्णवे वासो वर्णाढ्यं विविधं नवम् ॥ ३० ॥

वासवस्य पुरं गत्वा वासवेन समो भवेत् ।

(एकादिकालार्चनफलकथनम्)

ये पूजयन्ति सततं हरिं भक्त्या समन्विताः ॥ ॥३१॥

एककालं द्विकालं वा त्रिकालं वा स्वशक्तितः ।
ब्रह्मेशविष्णुलोकेषु रमन्ते साधकाश्चिरम् ॥ ३२ ॥

चतुष्कं पञ्चकं षट्कं कालानां योऽर्चयेद्धरिम् ।
स कैवल्यमवाप्नोति भुक्त्वा भोगान् यथारुचि ॥ ३३ ॥

(बलिदानफलम्)

यः कुर्याद्बलिदानं तु देवतानां त्रिसन्धिषु ।
कलत्रपुत्रपौत्राद्यैराढ्यो भवति साधकः ॥ ३४ ॥

(अग्नितर्पणफलम्)

एककालं त्रिकालं वा षट्कालं वाग्नितर्पणम् ।
यः कुर्याद्विष्णवे यागे नित्यं साधकसत्तमः ॥ ३५ ॥

---

२९. a : S. भाण्डं for घण्टां.
b : S. My. A. त्रिस्थानान्तां for सुस्वनां तु.
३२. c : S. M. ब्रह्मर्षि for ब्रह्मेश.
३३. d : S. My. पूर्व for भुक्त्वा.
३४. b : V. दिक्पालानां for देवतानां.
c : A. S. V. दारा॰ for पौत्र, My. om. राढ्यो.
३५. a : S. M. स कैवल्यमवाप्नोति.
b : S. M. भुक्त्वा भोगान् तथारुचि.

सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।

(हविर्निवेदनान्तपूजाफलम्)

योऽर्चयेद्धविरन्तं तु वित्ताभावात् सदा हरिम् ॥ ३६ ॥

सोऽपि तत्फलमाप्नोति यदाढ्यैः प्राप्यते फलम् ।
यद्यदिष्टतमं लोके यद्यदिष्टं तथात्मनः ॥ ३७ ॥

तद्दद्याद्धरये यस्तु तत्सर्वं सम्प्रयच्छति ।

(विष्णवे गोदानफलम्)

दद्याद्गां विष्णवे यस्तु सवत्सां वै पयस्विनीम् ॥ ३८ ॥

स गोलोकमवाप्नोति सर्वभोगसमन्वितम् ।

(हरये गजादिदानफलम्)

गजमश्वं रथं वापि यो दद्याद्धरये शुभम् ॥ ३९ ॥

तत्तदाढ्यो भवेदत्र प्रेत्यकामानवाप्नुयात् ।

(विष्णवे दास्यादिदानफलम्)

दासीदासांस्तु यो दद्यात् विष्णवे प्रभविष्णवे ॥ ४० ॥

भवेत् सेनापतिः राज्ञो विजयी च भविष्यति ।
अनिवारितगामी स्यात् लोकेषु महदादिषु ॥ ४१ ॥

---

३६. c : S. My. A. M. योऽर्चयेद्धरिं भक्त्या.
३७. b : S. M. यथाढ्यैः for यदाढ्यैः.
३८. b : V. तस्येष्टान् for तत्सर्वं.
c : A. M. S. दद्याद्वै. for दद्याद्गां.
३९. b : A. My. S. लोक for भोग.
c : S. रथमश्वं गजं वापि.
४०. a : V. तव for अत्र.
b : S. My. A. M. कामम् for कामान्.
४१. a : S. My. A M. राजा for राज्ञो.
b. V. स for च.

(भूषणादिदानफलम्)

दद्याद्यो भूषणादीनि केशवायादिवेधसे ।
रूपयौवनसम्पन्नः सर्वान् कामानवाप्नुयात् ॥ ४२ ॥

(सस्यादिदानफलम्)

यो दद्याद्धरये भक्त्या सस्यानि च महान्ति च ।
तुषादिकोशकाद्यैस्तु वियुक्तानि विशेषतः ॥ ४३ ॥

उद्यानानि सुरम्याणि फलपुष्पान्वितानि वै ।
सोमलोकमवाप्नोति रूपयौवनगर्वितः ॥ ४४ ॥

(कार्तिकोत्सवाचरणप्रकारः)

कार्तिके मासि कार्तिक्ये द्वादश्यां वाथ पर्वणि ।
देवदेवं महाभोगैः पूजयित्वा निशामुखे ॥ ४५ ॥

देवालयमलङ्कुर्याद्यो भक्त्या दीपराशिभिः ।
तथा नानाविधाकारैः शुद्धकार्पासवर्तिभिः ॥ ४६ ॥

प्रभूतघृततैलाढ्यैः लोहमृत्पात्रगैः शुभैः ।
एकाङ्गुलान्न च न्यूनैर्नाधिकैरष्टतालतः ॥ ४७ ॥

---

४२. a : S. My. A. M. वै for यो.
b : My. इति for आदि०.
c : S. My. A. M. संयुक्तः for सम्पन्नः
४४. a : S : My. M. च सौम्यानि for सुरम्याणि.
४५. a : S. My. A. M. कार्तिक्यां for कार्तिक्ये.
b : A. M. S. वा तु for वाथ.
d : V. ०शातने for ०शामुखे.
४६. d : S. शुद्धे for शुद्ध०.
४७. a : A. M. S. आद्यैः for आढ्यैः
d : S. दुष्ट for अष्ट.

तथाविधैः प्रदीपैस्तु सयष्टिभिरनेकधा ।
स लोकं वैष्णवं प्राप्य सुखमयुतसंप्लवम् ॥ ४८ ॥

पश्चात् कैवल्यमाप्नोति देवदेवप्रसादतः ।

(मार्गशीर्षैकादशीपूजाविधिः फलञ्च)

मार्गशीर्षे तु मासे च सिते पक्षे विशेषतः ॥ ४९ ॥

असिते वोभयोर्वापि वित्तस्यैवानुरूपतः ।
एकादश्यां महाभाग स्नपनाद्यं महाहविः ॥ ५० ॥

निवेद्य देवदेवाय भक्ष्यभोज्यान्यनेकशः ।
तस्यामुपोष्य विधिवत् स्तोत्रैः नानाविधैः शुभैः ॥ ५१ ॥

आर्षैः वा मानुषैः वापि संस्कृतैरात्मना कृतैः ।
स्वसामर्थ्यानुरूपैस्तु प्राकृतैर्वा विकत्थनैः ॥ ५२ ॥

सगेयैर्मधुरैर्हृद्यैरथवा मङ्गलस्वनैः ।
तोषयित्वा जगन्नाथं द्वादश्यां चैवमेव हि ॥ ५३ ॥

पारणं यः प्रकुर्वीत दीक्षितैर्वैष्णवैः सह ।
स भवेद्भक्तिमान् विष्णौ तथैकान्तित्वमाप्नुयात् ॥ ५४ ॥

कैवल्यं चाप्नुयात् पश्चात् नात्र कार्या विचारणा ।
अणिमादिगुणान् वापि कांक्षितानैहिकांस्तु वा ॥ ५५ ॥

---

४८. c : S. My. A. M. सालोकं for स लोकं.
d : S. My. A. M. आभूत for अयुत.
४९. c : My. च for तु, तु for च.
५०. a : V. चोभ० for वोभ०.
b : My. विशेषतः for ०नुरूपतः.
५३. b : S. A. स्वरैः for स्वनैः.
५४. b : My. सदा for सह.
c : V. विष्णोः for विष्णौ.
d : My. तदा for तथा.

(पौषमासैकादशीव्रताचरणदेवपूजनफलम्)

सहस्ये मासि देवेशमेकादश्यामुपोषितः ।
द्वादश्यां यस्तु देवेशं प्रधूपैर्धूपयेच्छुभैः ॥ ५६ ॥
स विष्णुलोकमासाद्य भूतानामधिपो भवेत् ।

(तिलपद्मदानकालादिः)

माघमासे तु पञ्चम्यां सिते पक्षेऽसितेऽपि वा ॥ ५७ ॥
प्रासादस्याग्रतो वापि पश्चिमे चोत्तरेऽपि वा ।
आग्नेये नैर्ऋते वापि रौद्रे वा मण्डपं शुभम् ॥ ५८ ॥
कृत्वा सुशोभनं रम्यं कल्पयित्वा यथारुचि ।

(मण्डपे उत्सवार्चपूजनम्)

समावाह्योत्सवार्चायां मूलबिम्बात्तु संयतः ॥ ५९ ॥
तस्मिन्वै मण्डपे स्थाप्य न्यासं कृत्वा यथाविधि ।
अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पं प्रधूपकम् ॥ ६० ॥
दीपं च दत्त्वा देवाय महन्नानाविधं तथा ।

(मण्डलकल्पनादिक्रमः)

तदग्रे मण्डलं कृत्वा गोमयेन विचक्षणः ॥ ६१ ॥
छादयेदहतैर्वस्त्रैर्मण्डलं तद्दशान्वितैः ।
वस्त्रोपरि न्यसेत्पश्चात् चर्ममात्रं पृथु द्विज ॥ ६२ ॥

---

५८. a ; b : S. My. A. M. om.
५९. a : V. तु for सु०.
b : S My. M. मुष्टयित्वा for कल्पयित्वा.
६०. b : S. My. A. M. रुचि for विधि.
d : S. च for प्र०.
६१. b : My. V. ०विधान् for विधम्, V. M. (u) ततः for तथा.
c : S. My. A. M. मण्डपं for मण्डलम्.
६२. d : V. ०मार्गं for मात्रं.

व्याघ्रजं वा यथालाभं रौरवं वा शुभं नवम् ।
तत्र पद्मं प्रकुर्वीत प्रभूतैस्तु तिलैः शुभैः ॥ ६३ ॥

पत्रैर्द्वादशभिर्युक्तं कर्णिकाकेसरान्वितम् ।
निष्कावरं न्यसेत् पश्चात् तन्मध्ये कनकं शुभम् ॥ ६४ ॥

यथाधनं वा द्रव्यं तु न्यस्य पद्मं स्वनामतः ।

(इन्द्राद्यर्चनक्रमः)

बीजपूर्णानि पात्राणि मृत्तिकोत्थानि षोडश ॥ ६५ ॥

स्थाप्य प्रदक्षिणं बाह्ये क्रमाद्वै बिम्बपद्मयोः ।
तेषु सम्पूजयेदेतान् देवान् पूर्वादितः क्रमात् ॥ ६६ ॥

इन्द्रं पुरुषमग्निं च सनं चापि स्मरन् क्रमात् ।
ततः सत्यं च विप्रेन्द्र यातुधानाधिपं ततः ॥ ६७ ॥

नारायणं च वरुणम् अच्युतं च सदागतिम् ।
अनिरुद्धं च धनदं हरं च शशिशेखरम् ॥ ६८ ॥

कृष्णमेतेन विप्रेन्द्र क्रमेणाराध्य नामभिः ।
तैलप्रस्थं घृतप्रस्थं दध्याढकमतः परम् ॥ ६९ ॥

---

६३. d : S. My. A. पूतैः रुतिलकैः शुभैः.
६५. b : S. My. M. ०न्यस्त्वा for न्यस्य, A. सनातनम् for स्वनामतः.
६६. b : M.(u) कामाद्वै for क्रमाद्वै, S. My. A. M. बीज for बिम्ब०
६७. c : V. ततस्तु सत्यं for ततः सत्यं च.
d : S. My. A. तथा for ततः.
६८. b : S. मालातं My. M(u) माल्यातं M. आलापं for अच्युतं.
S. My. A. M. ०निलाधिपम् for सदागतिम्.
d : V. हरिञ्च अमग्निशेखरम्.
६९. b : S. My. A. M. क्रमात् for क्रमेण.

न्यस्त्वा पार्श्वे यजेद्विष्णुं ब्रह्माणं च शिवं क्रमात् ।
स्वनामभिस्तु सम्पूज्य नमोऽन्तैस्तु यथा ततः ॥ ७० ॥

(तिलपद्मदानविवेकः)

एवं कृत्वा ततो मन्त्री समाहूयात्मवेदिनम् ।
सम्पूज्य दीक्षितं शुद्धं वैष्णवं तु जितेन्द्रियम् ॥ ७१ ॥
नित्यहोमार्चनपरं पञ्चकालपरायणम् ।
अलाभेऽस्यानयेच्छुद्धम् आहिताग्निं तु वैष्णम् ॥ ७२ ॥
तस्मै दद्यात्सपत्रं तु पद्मं तिलमयं शुभम् ।
ध्यायन्विष्णुं जगन्नाथं हृदये जिष्णुमव्ययम् ॥ ७३ ॥

(अग्निकार्यविवेकः)

ततस्तु मधुपर्कार्घ्यं निवेद्य च शुभं हविः ।
तस्मिन् दक्षिणपार्श्वे तु मण्डपे पूर्वतोऽपि वा ॥ ७४ ॥
अथवा वह्निदिग्भागे कुण्डे वा स्थण्डिलेऽपि वा ।
होमं कृत्वा यथान्यायं ततः स्तुत्वा हरिं प्रभुम् ॥ ७५ ॥

(गुरुपूजादिक्रमः)

स्वगुरुं पूजयेत्पश्चात् गोहिरण्यादिभिः शुभैः ।
ब्राह्मणान् भोजयेत् पश्चात् वैष्णवांस्तु विशेषतः ॥ ७६ ॥
अर्चां तस्मात् समाहृत्य स्वस्थाने विन्यसेत् क्रमात् ।
एवं यः कारयेन्मर्त्यो भक्त्या परमया युतः ॥ ७७ ॥

---

७०. a : S. M. पश्चात् for पार्श्वे.
७१. a : V. तथा for ततो.
c : S. My. A. M. चैव for शुद्धं.
७३. a : S. My. A. M. पात्रं for पत्रम्.
b : V. नील॰ for तिल॰.
c : V. ध्यायेत् for ध्यायन्.
७४. a : A. My. S. ॰द्यैः for ॰र्घ्यं.

सर्वान् कामानवाप्नोति प्रेत्य चेह च वाञ्छितान् ।

(फाल्गुनपञ्चम्युत्सवविधिः)

तपस्ये मासि पञ्चम्यां शुक्लपक्षे विशेषतः ॥ ७८ ॥

स्नपनाद्यं तु होमान्तं सम्पूज्य च निशानने ।
वाहनैर्विविधैर्देवं यजेदश्वैर्गजैः रथैः ॥ ७९ ॥

शिबिकाद्यैस्तथा चान्यैर्यो यजेद्विधिपूर्वकम् ।
सर्वान् कामानवाप्नोति यद्गत्वा न निवर्तते ।। ८० ॥

(चैत्रमासपूजाविधिः फलञ्च)

मधुमासे तु रोहिण्यां मध्याह्ने वा निशामुखे ।
स्नपनं विधिवत्कृत्वा निवेद्य च महाहविः ॥ ८१ ॥

होमं कृत्वा विधानेन पूजयित्वा गुरुं तथा ।
प्रदक्षिणनमस्कारैः पूजयेत्पुरुषोत्तमम् ॥ ८२ ॥

यथाशक्त्या तु विप्रेन्द्र तस्य पुण्यफलं शृणु ।
इह राज्यं तु सम्प्राप्य निष्कण्टकमनुत्तमम् ॥ ८३ ॥

सर्वभोगैस्तु सहितं सर्वैर्वै सुन्दरीगणैः ॥
मन्त्रिभिः स्ववशैर्युक्तो राजभिश्चापरैर्वृतः ॥ ८४ ॥

भुक्त्वा भोगान् तु विविधान् अभीष्टानिह सर्वदा ।
प्रेत्याप्सरोभिः सहितः स्वर्गलोके महीयते ॥ ८५ ॥

---

७८. a : S. My. A. M. कामांस्तु संप्राप्य for कामानवाप्नोति.
b : S. My. A. M. मनुजैर्दुलभान् भुवि.
c : आरभ्य श्लोकसंख्या ८०. b : यावत् पाठः S. My. A. M. कोशेषु om.

८१. c : S. My. A. पदं तत्समवाप्नोति.

८२. c : V. प्रदक्षिणैः for प्रदक्षिण.

८५. a : V. सुविपुलान् for तु विविधान्.
b : S. My. A.M. यथा for अभी०.

तत्रापि भोगान् सम्प्राप्य विष्णुलोकं स गच्छति ।

(वैसाखमासोत्सवप्रकारः फलञ्च)

माधवे मासि सम्पूर्णे चन्द्रबिम्बे निशामुखे ॥ ८६ ॥
विशाखर्क्षे विशेषेण सितपक्षेऽसितेऽपि वा ।
स्नपनं विधिवत्कृत्वा निवेद्य च महाहविः ॥ ८७ ॥
सर्वबिम्बान्यलङ्कृत्य यथारुचि यथाशुभम् ।
सम्पूज्य पुष्पधूपाद्यैः विविधैश्च विलेपनैः ॥ ८८ ॥
वस्त्रैर्नानाविधैश्चैव भूषणैश्च पृथग्विधैः ।
विविधैश्चैव नैवेद्यैः उपहारैस्तथाविधैः ॥ ८९ ॥
ततो नृत्तैश्च गेयैश्च विविधैर्वाद्यसंयुतैः ।
गुरुं सम्पूज्य विधिवत् हेमवस्त्रासनादिभिः ॥ ९० ॥
सार्वभौमत्वमाप्नोति लोकेऽस्मिन् प्रेत्य वै ततः ।
विष्णुलोकमवाप्नोति सर्वभोगसमन्वितम् ॥ ९१ ॥

(ज्येष्ठाषाढमासपूजाप्रकारः फलञ्च)

यो ज्येष्ठाषाढयोः शुक्ले पक्षे वै मासयोः शुभे ।
द्वादश्यां पञ्चदश्यां वा क्रमात्कृत्वा तु मण्डलम् ॥ ९२ ॥
चक्राब्जं भद्रकं वापि सम्पूज्य तु यथाविधि ।
सम्पूज्य प्रतिमायां च पीठिकायां तु मण्डपे ॥ ९३ ॥

---

८६. d : S. M: निशाकरे for निशामुखे.
८७. a : S. My. A. M. पूजयित्वा for विशाखर्क्षे.
८९. b : A. पृथक्पृथक् for पृथग्विधैः.
d : S. My. A. M. ताम्बूलाद्यैस्तथाविधैः.
९०. b : V. स्तुतिभिः for विविधैः, S. A. M. om. विविधैः.
d : S. My. A. हेमपुष्पधनादिभिः.
९१. d : S. My. A. M. दिव्यभोगसमन्वितः.
९३. b : S. My. A. M. सम्पाद्य for सम्पूज्य.
c : S. My. A. ०याश्च for ०यां च.

होमं कृत्वा विधानेन महादानं ददेत्ततः ।
श्रद्धया परया युक्तो ब्राह्मणान् भोजयेत्ततः ॥ ९४ ॥

आचार्यं पूजयित्वा तु वस्त्रधान्यधनादिभिः ।
अवाप्नोत्यतुलान्कामान् इह चामुत्र च स्थितः ॥ ९५ ॥

अणिमादिगुणैश्चैव कैवल्यं च समाप्नुयात् ।

(श्रावणादिमासेषु पवित्रारोहणप्रकारः फलञ्च)

श्रावणादिषु मासेषु त्रिषु शुक्लेऽसितेऽपि वा ॥ ९६ ॥

पक्षे तु प्रथमायां वा तृतीयायां तु वा द्विज ।
पञ्चम्यां वा त्रयोदश्यामेकादश्यामथापि वा ॥ ९७ ॥

द्वादश्यां पञ्चदश्यां वा श्रवणर्क्षे तथा शुभे ।
अहन्येव तु यः कुर्यात् पवित्रारोहणं हरेः ॥ ९८ ॥

सः पूजाफलमाप्नोति संवत्सरकृतं सुधीः ।
तथा प्राप्नोति कामांश्च गुणानप्यणिमादिकान् ॥ ९९ ॥

ततः प्राप्नोति कैवल्यमिति सत्यं तवोदितम् ।

(फलसमर्पणविधिः फलञ्च)

फलान्यनलपक्वानि मूलानि विविधानि च ॥ १०० ॥

कालपक्वानि वा विप्र यत्नपक्वानि वा शुभैः ।
लवणाम्लकषायैश्च मधुरैः कटुभिस्तथा ॥ १०१ ॥

---

९४. d : S. My. A. M. तथा for ततः.
९५. b : My. A. यान for धान्य, S. My. A. M. ०न्यासनादिभिः for ०न्यधनादिभिः.
९७. b : S. My. A. M. द्विजोत्तम for तु वा द्विज.
१००. a : S. My. A. M. अथ for ततः.
b : V. इव for तव.
c : A. My. S. ०नि नव० for ०न्यनल.

तिक्तैश्च जीरकाद्यैश्च सर्षपैश्च मरीचिभिः ।
संस्कृतानि विचित्राणि फलानि विविधानि च ॥ १०२ ॥
सहौदनानि यो दद्यात् विष्णवे प्रभविष्णवे ।
स विभूतिमवाप्नोति लोकेऽस्मिन् द्विजपुङ्गव ॥ १०३ ॥

(ताम्बूलसमर्पणप्रकारः फलञ्च)

नागवल्लीदलैर्युक्तं शुभैः पूगफलैर्युतम् ।
कर्पूरस्नेहसंयुक्तं गन्धैश्च विविधैर्युतम् ॥ १०४ ॥
ऋक्षेशाढ्यं सुगन्धेन श्वेतचूर्णेन संयुतम् ।
मातुलुङ्गफलोपेतं नालिकेरफलान्वितम् ॥ १०५ ॥
एलालवङ्गतक्कोलजातीभिश्चान्वितं शुभम् ।
मुखवासं शुभं विद्धन् ताम्बूलमिति च द्विज ॥ १०६ ॥
अनेन पूजयेन्नित्यं यो विशेषदिनेष्वपि ।
दारादिभिः सुखं प्राप्य पुत्रांश्चैव धनान्वितान् ॥ १०७ ॥
भोगान् भुक्त्वा तथान्यांस्तु वैष्णवो भवति द्विजः ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
फलभेदविधिर्नाम चतुर्विंशोऽध्यायः

---

१०२. a : V. ०भिश्च for ०द्यैश्च.
b : A. M. S. रसादिभिः for मरीचिभिः.
d : V. पवित्राणि विशेषतः.
१०३. b : S. My. A. M. सर्वजिष्णवे for प्रभविष्णवे.
१०६. c : V. विद्यात् M. विद्वान् for विद्धन्.
१०७. c : V. सजयाभिः for दारादिभिः.
d : V. सुखा० for धना०

# पञ्चविंशोऽध्यायः

## [प्रायश्चित्तनिरूपणाध्यायः]

(प्रायश्चित्तविधिकथनोपक्रमः, स्नानरहिताद्यैः सम्पादितेऽर्चने प्रायश्चित्तम्)

गौतमः—

प्रायश्चित्तविधानं तु प्रब्रूहि मुनिपुङ्गव ।
पूजनासु च सर्वासु क्रियासु मम कुत्रचित् ॥ १ ॥

नारदः—

साम्प्रतं मुनिशार्दूल प्रायश्चित्तं शृणुष्व तत् ।
जपेन्‘मूल’सहस्रं तु न स्नात्वा पूजयेद्यदि ॥ २ ॥

तदर्धं जीर्णवासास्तु पवित्ररहिताङ्गुलिः ।
साधको मतिहीनश्चाप्यनाचान्तो यजेद्यदि ॥ ३ ॥

‘मूल’मन्त्रायुतं जप्त्वा पूजयेच्च यथाविधि ।

(अस्पृश्यस्पर्शे प्रायश्चित्तम्)

अमत्या स्पृश्य चीरास्थिकेशलोष्टादिकं सुधीः ॥ ४ ॥

---

प्रारम्भे A. कोषे-‘श्रीरस्तु, अविघ्नमस्तु’ इत्यधिकः पाठः.

१. b : A. ब्रूहि मे for प्रब्रूहि.
   d : S. A. M. मुनिपुङ्गव for मम कुत्रचित्.

३. d : S. M. अनाचान्तः for ०प्यनाचान्तः, S. My. M. भवेत् for यजेत्.

४. c : My. चिरा for चीर०.

मत्या वा स्पृश्य देवेशमर्चयेच्च तथा जपेत् ।

(उदक्याद्युपकण्ठगैः स्पृष्टे बिम्बे प्रायश्चित्तम्)

उदक्यासूतिकोपेयाः चाण्डालाद्युपकण्ठगाः ॥ ५ ॥

स्पृशेच्चेद्भगवद्बिम्बम् अज्ञानाज्ज्ञानतोऽपि वा ।

संस्नाप्य पञ्चगव्येन वारिणा च विशुद्ध्यति ॥ ६ ॥

(उदक्याद्यस्पृष्टेन जनेन अमत्या स्पृष्टे बिम्बे प्रायश्चित्तम्)

एतैः स्पृष्टः स्पृशेत् बिम्बं यद्यमत्या तु साधकः ।

स्नपनेनाधमेनैव तस्य शान्तिर्भवेन्मुने ॥ ७ ॥

(अशौचे कौतुकस्पर्शे प्रायश्चित्तम्)

अशौचे वर्तमाने तु प्रसूत्या मरणेन वा ।

स्पृशेच्चेत् कौतुकं मोहात् अधमं स्नपनं भवेत् ॥ ८ ॥

(महापातकिकौतुकस्पर्शे प्रायश्चित्तम्)

महापातकिसंस्पृष्टे मध्यमस्नपनाच्छुचिः ।

(विण्मूत्रादियुक्तेन बिम्बे स्पृष्टे प्रायश्चित्तम्)

विण्मूत्रापेययुक्ते चाप्येवमेव विधीयते ॥ ९ ॥

(रुधिरादियुक्तैः स्पृष्टे बिम्बे प्रायश्चित्तम्)

रुधिरस्वेदनिष्ठीवयुक्तो बिम्बं स्पृशेद्यदि ।

शुद्धोदकेन संस्नाप्य शुचिः स्यात् कुशवारिणा ॥ १० ॥

---

५. c : S. My. उदकया for उदक्या.
   d : A. घातुकाः for कण्ठगाः.

६. b : S. A. M. मन्त्रानज्ञान० for अज्ञानाज्ज्ञान०.

८. a : S. My. M. ०पि A. च for तु.
   b : S. A. M. गुरुणापि for मरणेन.

९. a. V. ०भिः स्पृष्टे for संस्पृष्टे.
   c : V. ०ना० My. वा for चा०.

१०. a : S. A. V. M. आधित for रुधिर.
   c : S. My. A. M. स्निग्धो० for शुद्धो०.

(स्त्रीप्रसङ्गानन्तरं स्नानं विनैव बिम्बस्पर्शे प्रायश्चित्तम्)

दिवा गत्वा स्त्रियं मोहादस्नातः संस्पृशेद्यदि ।
पञ्चगव्येन संस्नाप्य शुचिः स्यात् कुशवारिणा ॥ ११ ॥

(अन्यस्त्रीप्रसङ्गानन्तरं बिम्बस्पर्शप्रायश्चित्तम्)

गत्वान्यां तु स्त्रियं कांचिदधमस्नपनाच्छुचिः ।
अधमेनैव विधिना स्नपनेनैव तु कौतुकम् ॥ १२ ॥

(कृम्यादिदूषितपत्राद्यर्चने प्रायश्चित्तम्)

कृमिकीटपतङ्गास्थिकेशाङ्गारनखान्वितैः ।
तुषप्राण्यङ्गभस्मादिदोषैर्दुष्टैर्यजेद्यदि ॥ १३ ॥
पत्रपुष्पफलाद्यैस्तु तोयैर्वापि तथाविधैः ।
अर्घ्यपाद्यादिभिर्वापि गन्धैर्वा भूषणादिभिः ॥ १४ ॥
उपचारैस्तु विविधैर्वर्जितैर्वापि वस्तुभिः ।
जपेदष्टोत्तरशतं 'मूल'मन्त्रायुतं तदा ॥ ॥ १५ ॥
एवं पर्युषितैः पुष्पैः पत्रैर्वाप्यङ्कुरैर्भवेत् ।

(अस्पृश्यस्पृष्टपत्राद्यर्चने प्रायश्चित्तम्)

अस्पृश्यप्राणिसंस्पृष्टैः स्पृष्टैरस्पृश्यवस्तुभिः ॥ १६ ॥

---

१२. d : S. M. च शुद्ध्यति for तु कौतुकम्.
१३. b : A. केशाङ्गनखरान्वितैः.
  d : S. V. M. स्पृशेत् for यजेत्.
१४. a : S. M. फलैर्वा for फलाद्यैः.
  b : S. My. A. दोषैः for तोयैः.
  c : My. पात्रादि for पाद्यादि.
१५. d : S. My. A. M. तथा for तदा.
१६. a : A. आयुषितैः for पर्युषितैः.
  b : S. My. A. M. वस्त्रैरप्यङ्कुरैः for पत्रैर्वाप्यङ्कुरैः.
  c : M. स्पृष्टे for स्पृष्टैः.

अस्पृश्यैश्च तथा मर्त्यैः सूतिकाद्योपकण्ठगैः ।
शवराद्यैस्तथा चान्यैः पत्रपुष्पफलाङ्कुरैः ॥ १७ ॥

सरजोभिः परिम्लानैःजपेदष्टोत्तरायुतम् ।
'ह्न्म'न्त्रं पूजयेद्विष्णोः तस्य दोषस्य शान्तये ॥ १८ ॥

(अस्पृश्यस्पृष्टवस्त्रादिभिरर्चने प्रायश्चित्तम्)

एतैः स्पृष्टैस्तु वस्त्राद्यैरमत्या पूजिते विभौ ।
शान्तिहोमं तु कुर्वीत तथैवाविहितैरपि ॥ १९ ॥

(चण्डालादिस्पृष्टपानादिनिवेदने प्रायश्चित्तम्)

चण्डालसूतिकोदक्याशवरापेयपायिभिः ।
स्पृष्टे तु पानभक्ष्यादौ तथैव विनिवेदिते ॥ २० ॥

अज्ञानाद्देवदेवाय साधकैर्ज्ञानितोऽपि वा ।
क्षालयित्वा ततः सर्वं स्नात्वा पीत्वा कुशोदकम् ॥ २१ ॥

अधमं स्नपनं कुर्यात् शान्तिरेतेन जायते ।

(चण्डालादिस्पृष्टान्नादिनिवेदने प्रायश्चित्तम्)

एभिः स्पृष्टैस्तु वा चान्यैः श्वसृगालादिभिस्तथा ॥ २२ ॥

अन्यैरशुचिभिस्सर्वैस्स्पृष्टेऽन्नादौ निवेदिते ।
स्नानान्तं पूर्ववत्कृत्वा शान्तिहोमं समाचरेत् ॥ २३ ॥

---

१७. a : A. अप्रीण्यैश्च for अस्पृश्यैश्च.
b : V. M. ०कण्ठकै for ०कण्ठगैः.
c : V. शवरादिभिरन्यैश्च.
१९. c : S. M. प्र० for तु.
२०. b : A. My. ०पादिभिः for ०पायिभिः.
c : My. ०न्न for तु.
d : M. तदैव for तथैव.

ततो निवेदयेत् शुद्धमन्नं संस्कृत्य पूर्ववत् ।

(व्यभिचाराशक्तादिदृष्टस्पृष्टभोज्यनिवेदने प्रायश्चितम्)

परस्त्रीगमनाशक्तैः भक्ष्याभक्ष्याविवेकिभिः ॥ २४ ॥

ब्राह्मणाद्यैश्च संस्पृष्टं तथाऽऽचारविवर्जितैः ।
श्वचण्डालादिभिर्दृष्टं स्पृष्टं पूयासृगादिभिः ॥ २५ ॥

अज्ञात्वा यदि वा मोहादेवमेव समाचरेत् ।

(शवादिदूषितगृहान्ननिवेदने प्रायश्चित्तम्)

दुष्टे शवादिभिर्गेहे पक्वमन्नं तु यत्तदा ॥ २६ ॥

तच्च दत्त्वापि हरये शान्तिहोमं समाचरेत् ।

(निषिद्धनैवेद्यनिवेदने प्रायश्चित्तम्)

वर्जितं तु हविर्मोहात् यदि दद्यात्तु विष्णवे ॥ २७ ॥

मत्या घृतेन जुहुयादष्टोत्तरशताहुतिम् ।
एवं पर्युषितं चान्नं दद्याद्यदि समाचरेत् ॥ २८ ॥

(निषिद्धहविरादित्यागप्रकारः)

त्यक्तव्यं तु हविः पुष्पं फलपत्राङ्कुरादिकम् ।
त्यजेदग्नौ जले वापि गोष्ठे वा निखनेद्भुवि ॥ २९ ॥

(दूषितपुष्पादिनिवेदने प्रायश्चित्तम्)

मक्षिकाभ्रमराद्यैस्तु दुष्टं पुष्पफलादिकम् ।
दातव्यमेव देवाय सम्प्रोक्ष्या'स्त्रे'ण वारिणा ॥ 30 ॥

---

२५. c : A. स्पृष्टं for दृष्टं.
२६. a : S. My. अज्ञानाद्वा विदित्वा वा.
२८. a : A. मर्त्या V. हुत्वा for मत्या.
२९. b : V. अदिकं तथा for अङ्कुरादिकम्.
d : S. A. V. M. गोषु for गोष्ठे.
30. a : S. A. My. M. मशक for भ्रमर.
b : V. स्पृष्टम् for दुष्टं.

(निवेदनार्हानर्हहविर्विवेकः प्रायश्चित्तञ्च)

महाहविर्विधावत्र विशेषं शृणु साम्प्रतम् ।
कुत्रचित् संस्कृतं देयमदीक्षितनिरीक्षितम् ॥ ३१ ॥

अमन्त्रसंस्कृतं चान्नमविभक्तमलक्षणम् ।
महाजनेक्षितं वापि बाह्ये चाभ्यन्तरेऽपि वा ॥ ३२ ॥

कर्तुरिच्छानुरूपेण चक्रवर्त्युपचारतः ।
अस्मान्न विष्वक्सेनाय दातव्यं विनिवेदितम् ॥ ३३ ॥

होमं कुर्याद्यथासंख्यं बलिदानं समाचरेत् ।
एवं तु न कृतेष्वत्र शान्तिहोमं समाचरेत् ॥ ३४ ॥

(मक्षिकादिभिः दूषितहविर्विषये विशेषः)

मक्षिकाभ्रमराद्यैस्तु न दूष्यं तु महाहविः ।
तथा पिपीलिकाद्यैर्वा सम्प्रोक्ष्यैतन्निवेदयेत् ॥ ३५ ॥

अत्रार्घ्यं पाद्यमाचामं करकेष्वेव कल्पयेत् ।

(मण्डूकादिदूषितहविर्निवेदने प्रायश्चित्तम्)

मण्डूकमूषिकासर्पबिडालाद्यैश्च जन्तुभिः ॥ ३६ ॥

कृमिकीटपतङ्गाद्यैः पक्षिभिर्वायसादिभिः ।
दृष्टं स्पृष्टं हविर्यत्तत् देवाय न निवेदयेत् ॥ ३७ ॥

---

३२. d : S. A. My. M. वा for च.
३३. b : A. ०वत्युप० for ०वर्त्युप०.
c : A. तस्मात् for अस्मात्.
३४. b : S. My. A. M. नकारयेत् for समाचरेत्.
c : A. S. अभ्यागतेषु for तु न कृतेष्वत्र.
३५. b : S. My. A. M. तद्दूष्यं for न दूष्यं.
d : S. A. M. एवं My. एव for एतत्.
३७. c : S. V. दुष्टं for दृष्टं.

दत्ते 'मूल'शतं जप्त्वा हविरन्यन्निवेदयेत् ।

(भोगमन्त्रादिविपर्यासे प्रायश्चित्तम्)

भोगानां तु विपर्यासे मन्त्राणां वा महामते ॥ ३८ ॥

ध्यानानां चैव मुद्राणां दैवतानां तथैव च ।
पीठानाञ्चैव बिम्बानां तथा चैवाधिकारिणाम् ॥ ३९ ॥

अन्येषामेवमादीनां दिगादीनां तथैव च ।
जुहुयात् 'पञ्चमन्त्रै'स्तु प्रत्येकं तु शतं शतम् ॥ ४० ॥

(लक्षणरहितसमिधादिप्रायश्चित्तम्)

समिधां परिधीनां तु दर्भाणां हविषां तथा ।
आज्यस्थाल्यादिपात्राणाम् अग्नेः स्रुक्स्रुवयोस्तथा ॥ ४१ ॥

कूर्चानामपि कुण्डस्य स्थण्डिलस्य तथैव च ।
पूर्णाहुतेस्तु हविषस्तथान्येषां तु वा द्विज ॥ ४२ ॥

अलक्षणादिके प्राप्ते त्वन्येषां वह्निकर्मणि ।
शान्तये जुहुयान्मन्त्री पञ्चमन्त्रैस्तु पूर्ववत् ॥ ४३ ॥

---

३८. a : S. M. हुत्वा for जप्त्वा.
b : S. My. अन्यान् for अन्यत्.
d : S. My. A. M. तु for वा, A. ०हते for ०मते.
३९. a : S. A. M. घृतानां for ध्यानानां.
४०. b : S. My. M. अङ्गादीनां for दिगादीनां, S. My. M. तु for च.
४१. b : S. My. M. तु वा for तथा.
d : S. My. अग्नेश्च स्रुक् स्रुवस्य च.
४२. c : V. ०हुत्या० for ०हुते०.
४३. b : My. हि for तु.

(होमद्रव्यप्रतिनिधिः तदभावे प्रायश्चित्तम्)

अभावे काष्ठसमिधाम् आज्येन हविषा तु वा ।
आज्याभावे समिद्भिर्वा बीजैर्वा होममाचरेत् ॥ ४४ ॥

हविषां च तथालाभे ह्यन्येषां वा द्विजोत्तम ।
आज्येन होमः कर्तव्यः तिलमाज्यं न लोपयेत् ॥ ४५ ॥

घृतबीजद्रव्याभावात् विनष्टे होमकर्मणि ।
शान्तिहोमं तु कुर्वीत प्रतिष्ठायां यथोदितम् ॥ ४६ ॥

(अग्निदोषेषु प्रायश्चित्तानि)

शान्तेऽग्नौ संस्कृते कुण्डे चुल्यां वा सुप्रतिष्ठिते ।
शान्तिहोमस्तु कर्तव्यः पुनः संस्कृत्य पूर्ववत् ॥ ४७ ॥

तस्मिन् केशादिभिर्दोषैः दुष्टे वह्नौ प्रमादतः ।
अस्पृश्यैश्च तथा स्पृष्टे जुहुयात् सर्पिषा शतम् ॥ ४८ ॥

'मूल'मन्त्रेण मतिमान् उदक्याद्यैस्तथायुतम् ।
असमिद्धे हुतेऽग्नौ तु पुनर्होमं समाचरेत् ॥ ४९ ॥

(अग्निकार्ये कुण्डविपर्यासे प्रायश्चित्तम्)

प्रासादाभ्यन्तरे कुर्यात् नित्यनैमित्तिकार्चनम् ।
तत्पूजाङ्गाग्निकार्यं तु नित्यकुण्डे समाचरेत् ॥ ५० ॥

एवमेवोत्सवे कुर्यात् प्रायश्चित्तेऽपि देशिकः ।
यद्यन्नैमित्तिकं कुर्यात् प्रासादस्य बहिः क्वचित् ॥ ५१ ॥

---

४५. a : V. हविषश्च for हविषां च.
b : S. A. अन्येषां V. त्वन्येषां for ह्यन्येषां.
d : S. A. My. M. तिलं वाज्यं for तिलमाज्यम्.

४७. a : A. अने: for अग्नौ.

४८. c : V. वा for च.

५०. a : b ; c ; A. om.
d : V. समाहितः for समाचरेत्.

५१. c : S. V. यद्यनैमि०. for यद्यन्नैमि०

तदङ्गं हुतभुग्यागं कुण्डेऽन्यस्मिन् समाचरेत् ।
विपर्यासात् कृते मोहात् शान्तिहोमं समाचरेत् ॥ ५२ ॥

(नित्यहोमे परिधेः अनावश्यकत्वम्)

नित्ये परिधयो नेष्टा यथालाभात्तु चोत्तरम् ।

(परिस्तरणहीनादिहोमे प्रायश्चित्तम्)

अपरिस्तीर्य जुहुयान्'मूल'मन्त्रायुतं जपेत् ॥ ५३ ॥
अवमत्यानलं होमात् तथैव जपमाचरेत् ।

(होमे क्रमातिक्रमे प्रायश्चित्तम्)

अयथोक्तक्रमं हुत्वाप्येवमेव जपेत्सुधीः ॥ ५४ ॥

(नित्यार्चने परिवारार्चनलोपे प्रायश्चित्तम्)

अनर्चयित्वाऽहोरात्रं परिवारांश्च शक्तितः ।
संस्नाप्य तत्तत्प्रतिमां यथास्नानं यथोदितम् ॥ ५५ ॥
तत्तन्मन्त्रान् जपेत्पश्चात् अष्टोत्तरशतं क्रमात् ।

(बलिद्रव्याणां पतनादौ प्रायश्चित्तम्)

बलिद्रव्ये तु पतिते स्पृष्टेऽस्पृश्यैस्तु वाहृते ॥ ५६ ॥
नष्टे केशादिभिर्दुष्टे तत्त्यक्त्वान्येन निक्षिपेत् ।
'मूल'मन्त्राष्टकं जप्त्वा ध्यायेद्देवं समाहितः ॥ ५७ ॥

---

५२. c : A. M. कृता for कृते.
५३. b : My. A. वोत्तरम् for चोत्तरम्.
d : S. A. My. M. यदि मूलाष्टकं for मूलमन्त्रायुतं.
५४. a : A. My. अमत्यानलयोभगि, V. अमत्यानलवो भाव.
c : A. अथो for क्रमं.
५५. b : S. My. M. स्व A. स for च.
d : S. My. M. स्थानं for स्नानं.
५६. a : A. एवम् for पश्चात्.
d : V. वर्जयेत् for वाहृते.
५७. d : S. My. A. एवं for देवं.

(बलिभ्रमणकाले बलिभङ्गादिदोषे प्रायश्चित्तम्)

तण्डुले वान्नलिङ्गे वा पुष्पे वा पाद्यपूजिते ।
पश्चाद्भिन्ने तु पतिते तथा काकादिदूषिते ॥ ५८ ॥

अस्पृश्यैर्वाथ संस्पृष्टे बलियाने तु वै क्वचित् ।
देवमात्मनि संयोज्य मूलबिम्बे तु वा ततः ॥ ५९ ॥

अन्येन पूर्ववत्कृत्वा लिङ्गं तत्रैव मन्त्रवित् ।
तस्मिन्नावाह्य हृदयाद्देवमात्मनि संहृतम् ॥ ६० ॥

सम्पूज्य पूर्ववद्देवं शेषं गेहे समाचरेत् ।
ततः संस्नाप्य देवेशम् अधमेन क्रमेण तु ॥ ६१ ॥

अष्टोत्तरशतं हुत्वा 'मूल'मन्त्रेण सर्पिषा ।
'मूल'मन्त्रं जपेत्पश्चात् अष्टोत्तरसहस्रकम् ॥ ६२ ॥

(अस्पृश्यस्पृष्टे बलिबिम्बे प्रायश्चित्तम्)

अस्पृश्यैर्यदि संस्पृष्टं बलिबिम्बं भवेत् क्वचित् ।
लिङ्गेनैतत् समानीय शुचिनान्येन वा भवेत् ॥ ६३ ॥

जप्त्वा'मूल'सहस्रं तु शेषकर्म समापयेत् ।

(बलियात्राबिम्बपतनादौ प्रायश्चित्तम्)

बिम्बे च बलियाने तु तत्र तत्र विधिं शृणु ॥ ६४ ॥

---

५८. a : My. वाथ for वान्न.
 b : S. A. M. पुष्पैर्वा बाह्य for पुष्पे वा पाद्य०.
५९. d : S. My. A. M. पुनः for ततः.
६०. d : A. M. आहृदि संहृतम् for आत्मनि संहृतम्.
६१. a : S. My. A. M. सर्व for पूर्व.
 b : S. My. A. M. गेहं समानयेत् for गेहे समाचरेत्.
६३. b : S. My. M. द्विज क्वचित् A. द्विजोत्तम for भवेत् क्वचित्.
 c : S. My A. M. समाहूय for समानीय.
६४. a : M. च for तु.

बलियाने तु पतिते बिम्बे मन्त्री प्रमादतः ।
उद्धृत्य बिम्बं संस्थाप्य शेषं कर्म समाप्य च ॥ ६५ ॥
अधमं स्नपनं कुर्यात् तस्य शान्तिर्भविष्यति ।

(भूमिपतनादौ प्रायश्चितम्)

भूमौ तु पतिते स्नाप्य जलैस्तत्रैव पूर्ववत् ॥ ६६ ॥
शेषं कर्म समाप्यैवं संस्नाप्याधममार्गतः ।
सर्पिषाष्टोत्तरशतं जुहुयान्'मूल'विद्यया ॥ ६७ ॥
अङ्गहीने तु वै तस्मिन् लिङ्गं कृत्वौदनेन वै ।
शेषकर्मणि निर्वृत्ते लिङ्गं कृत्वा तु पूर्ववत् ॥ ६८ ॥
प्रतिष्ठाप्य ततः कुर्यात् बलियानं तु पूर्ववत् ।
प्रायश्चित्तं तथाऽत्रापि कुर्यान्मन्त्री विचक्षणः ॥ ६९ ॥
अस्पृश्य स्पर्शनाद्दोषान्न च बिम्बं वहन् यदि ।
तदा स्नाप्यैव देवेशं मूलबिम्बे विसर्जयेत् ॥ ७० ॥

---

६५. b : A. प्रधानतः for प्रमादतः.
c : V. तत्र for बिम्बं.
d : V. समाचरेत् for समाप्य च.

६६. a : S. My. A. M. कृत्वा for कुर्यात्.
c : My. भ्रमत्तु for भूमौ, M. स्थाप्य for स्नाप्य.
d : My. जपेत् for जलैः.

६८. a : My. न for तु.
b : V. उदितेन तु for ओदनेन वै.
d : V. शेषं for लिङ्गं.

७०. c : S. स्नाप्येत for स्नाप्यैव.
d : S. My. M. समर्चयेत A. समर्पयेत् for विसर्जयेत्.

(अर्चने मन्त्रादिलोपे प्रायश्चित्तम्)

मन्त्रहीने क्रियाहीने मुद्राहीने तथैव च ।
ध्यानहीने तु भोगानां हीनेऽन्येषां तु वा द्विज ॥ ७१ ॥
जपे'न्मूल'सहस्रं तु मन्त्री ध्यानसमन्वितः ।

(अनर्हाय निवेदितफलपुष्पादिदाने प्रायश्चित्तम्)

यस्मै न दत्तं दातव्यं फलपुष्पौदनादिकम् ॥ ७२ ॥
तदा हरिर्न प्रीणाति तस्माद्योग्याय तद्ददेत् ।
अन्यथा विनियुक्ते तु 'मूल'मन्त्रायुतं जपेत् ॥ ७३ ॥

(अदीक्षितद्विजादिभिः हविश्शेषादिभुक्ते प्रायश्चित्तम्)

अदीक्षितद्विजैर्भुक्ते हविः शेषं तथा जपेत् ।
हुतशेषेऽपि तैर्भुक्ते तथैव जपमाचरेत् ॥ ७४ ॥
वर्णितं तु हविः पुष्पं फलमूलादिकं यदि ।
भुक्तं केनापि कुर्वीत जपं वै पूर्ववत् सुधीः ॥ ७५ ॥

(भक्तादन्यैः भगवत्प्रसादे भुक्ते प्रायश्चित्तम्)

ब्राह्मणैः क्षत्रियैः वैश्यैः वैष्णवैः भक्तिसंयुतैः ।
भोज्यं निवेदितं यत्तदन्यैर्भुक्ते निवेदिते ॥ ७६ ॥
जपेदष्टोत्तरशतं 'मूल'मन्त्रं सुभावितम् ।

(भगवते भक्तैः निवेदितस्य नैवेद्यस्य महिमा)

दत्तं भागवतश्रेष्ठैः विष्णवे प्रभविष्णवे ॥ ७७ ॥

---

७१. c : V. च for तु.
d : My. तथा for हीने.
७३. a : S. तस्मात् for तदा.
७५. a : A. S. वर्जितं for वर्णितं.
b : A. M. V. पत्रादिकं for मूलादिकं.
७६. d : My. भक्तैः for भुक्ते.
७७. b : V. स्वभावतः My. A. M. सुभावतः for सुभावितम्.

तत्पवित्रं पवित्राणां पावनानां च पावनम् ।
दातव्यं तु द्विजातीनां भक्तानां पावनाय च ॥ ७८ ॥

स्वयं चापि तदश्नीयात् सर्वपापविशुद्धये ।
तस्य संस्पर्शनात् पानात् भोजनात् धारणात् सदा ॥ ७९ ॥

शुचिर्भवति विप्रेन्द्र सर्वकर्मसु सम्मतः ।

(विष्वक्सेननिर्माल्यस्वरूपम् तस्य स्पर्शादौ प्रायश्चित्तञ्च)

यद्विष्वक्सेनपूजायां विनियुक्तं तु मन्त्रिभिः ॥ ८० ॥

तन्निर्माल्यमिति ज्ञेयं न स्पृशेत्तन्न लङ्घयेत् ।
उपस्पृशेत् स्पृशेत्तच्चेद्भुक्त्वा चन्द्रायणं चरेत् ॥ ८१ ॥

(पूजने होमाद्यभावे प्रायश्चित्तम्)

अग्निकार्येण सङ्कल्प्य पूजनं कर्तुमादितः ।
अज्ञानाद्यदि वा ज्ञानात् न कुर्याद्वह्नितर्पणम् ॥ ८२ ॥

सर्पिषा 'पञ्चमन्त्रै'स्तु दद्यात्पञ्चशताहुतीः ।
द्विकाले द्विगुणं कुर्यात् त्रिकाले त्रिगुणं चरेत् ॥ ८३ ॥

चतुर्गुणं चतुष्काले पञ्चकाले तथैव च ।
एवं प्रत्यग्निकार्यं तु कुर्यान्मासावधि द्विज ॥ ८४ ॥

ततः संस्नापयेद्देवम् अधमेन क्रमेण तु ।

(पूजने बलिदानादिलोपे प्रायश्चित्तम्)

बलिदानविहीने तु 'मूल'मन्त्रेण होमयेत् ॥ ८५ ॥

---

७९. a : S. V. द्वय० for स्वयं.
c : S. My. A. M. दानात् for पानात्

८०. c : S. M. पूजानां for पूजायाम्.

८२. b : S. My. M. पूजनक्रममादितः.

८५. d : A. काल for मूल.

अष्टोत्तरशतं मन्त्री तस्य दोषस्य शान्तये ।
द्विकाले द्विगुणं होमं त्रिकाले त्रिगुणं तथा ॥ ८६ ॥
पञ्चषट्सप्तकालादावेवमेव महामुने ।
षण्मासादूर्ध्वतः कुर्यात् मध्यमं स्नपनं हरेः ॥ ८७ ॥
बलियानविहीनेऽपि कुर्यादेव द्विजोत्तम ।

(पूजालोपेषु प्रायश्चित्तानि)

एककालात् समारभ्य सङ्कल्प्य मनसादितः ॥ ८८ ॥
यावद्द्वादशकालान्तं पूज्यमाने दिने दिने ।
पूजने त्वेककालीने विलुप्ते विश्वरूपिणः ॥ ८९ ॥
स्नापयेद्देवदेवेशं यात्राद्युक्तक्रमेण तु ।
'मूल'मन्त्रेण जुहुयात् अष्टोत्तरशताहुतीः ॥ ९० ॥
द्विकाले द्विगुणं कुर्यात् त्रिकाले त्रिगुणं तथा ।
प्रत्याराधनपूर्वं तु पक्षान्तं कारयेत्सुधीः ॥ ९१ ॥
मध्यमं स्नपनं कुर्यात् पश्चान्मासावधि द्विज ।
मासादूर्ध्वं द्विजश्रेष्ठ स्नपनं चोत्तमं भवेत् ॥ ९२ ॥
'पञ्चमन्त्रै'स्तु जुहुयात् प्रत्येकं तु शताहुतीः ।
यावत्षण्मासमेवं तु तावत्तद्द्विगुणं त्विदम् ॥ ९३ ॥
एवमब्दावसानं तु कुर्यान्मन्त्रविचक्षणः ।
पश्चात्प्रत्यब्दमेवं तु कुर्याद्वै द्वादशावधि ॥ ९४ ॥

---

८७. d : S. My. A. M. भवेत् for हरेः.
८९. c : S. A. M. कालेन for कालीने.
९०. b : S. M. युक्त for ०द्युक्त.
९१. d : S. My. A. M. पत्यहं for पक्षान्तं.
९२. b : S. स्नानावधि for मासावधि.
९३. d : V. तावत्तु द्विगुणान्वितम्.
९४. b : S. My. A. मन्त्री for मन्त्र०.

प्रतिष्ठामेव कुर्वीत पश्चान्मन्त्रविचक्षणः ।
प्रासादस्थापितस्यैवं पूजालोपे विधीयते ॥ ९५ ॥

(गृहार्चायां पूजालोपे प्रायश्चित्तम्)

गृहपूजाविधौ लुप्ते जपेन्'मूल'सहस्रकम् ।
प्रतिसंपूजनं विप्र यावदब्दं समाहितः ॥ ९६ ॥
ततः प्रतिष्ठां कुर्वीत पूर्ववद्विधिना सुधीः ।
एवं प्रतिष्ठिते मर्त्यैः कुर्यान्मन्त्रविचक्षणः ॥ ९७ ॥

(त्रिदशाद्यस्थापिते बिम्बे पूजालोपे दोषाभावः)

न पूजालोपतो दोषास्त्रिदशाद्यैः प्रतिष्ठिते ।

(स्वयंव्यक्तबिम्बादौ पूजालोपे प्रायश्चित्तानपेक्षत्वम्)

बिम्बे वा वैष्णवे चिह्ने स्वव्यक्ते वा विशेषतः ॥ ९८ ॥
तथैवाशुचिसंस्पर्शात् अङ्गभङ्गादिभिस्तथा ।
अस्मिन् वै मन्त्रिणः सर्वे पूजयेयुश्च सर्वदा ॥ ९९ ॥
कालातिक्रमतः प्राप्तो दोषोऽस्मिन्नैवमादिषु ।
विशेषादत्र सर्वं तु प्राक्तनाचारतो भवेत् ॥ १०० ॥
एवमेवात्र कुर्वीत नान्यथा मतिमान् गुरुः ।

(स्नपने सम्भावितदोषेषु प्रायश्चित्तकथनम्)

प्रायश्चित्तं तु सर्वत्र वक्ष्यामि स्नपनं हरेः ॥ १०१ ॥

---

९५. b : S. My. A. मन्त्री for मन्त्र॰.
c : My. A. M. प्रासादे for प्रासाद॰.
९७. a : A. तत्र for ततः.
b : S. A. विविधा for विधिना.
c : S. मन्त्रैः My. A. मर्त्ये V. बिम्बे for मर्त्यैः.
d : S. My. A. M. बिम्बे कुर्यान्महामते.
९८. a : V. दोषः for दोषा.
१००. a : A. नामातिक्रमम्प्राप्ते.
d : S. My. A. M. प्रोक्ताना॰ for प्राक्तना॰.

आलये स्थापितं बिम्बं तत्रैव स्नापयेत्सदा ।
तद्गृहीत्वा न गच्छेत बहिरावरणाद्द्विज ॥ १०२ ॥

स्नपनार्थं विशेषेण राज्ञो राष्ट्रस्य वृद्धये ।
स्नपने तु कृतेऽन्यत्र निष्फलं स्यान्न संशयः ॥ १०३ ॥

तत्रैव शान्तिहोमस्तु कर्तव्यस्तस्य शान्तये ।
अकृत्वा साधकः पूर्वं स्नाप्य कौतुकबन्धनम् ॥ १०४ ॥

'मूल'मन्त्रायुतं पश्चादष्टोत्तरशतं जपेत् ।
अकृत्वाङ्कुरयागं तु जपेदेवं द्विजोत्तम ॥ १०५ ॥

बद्धप्रतिसरे बिम्बे पश्चान्न स्नापितेऽपि च ।
अङ्कुरानर्पयित्वा तु शान्तिहोमं समाचरेत् ॥ १०६ ॥

सङ्कल्पिते तु स्नपने त्वकृते द्विगुणं चरेत् ।
आसादितेषु कलशेष्वेवमेव समाचरेत् ॥ १०७ ॥

न पर्युषितहानिः स्यात् कलशे त्वधिवासिते ।
स्थापिते कलशे भिन्ने तथा संस्थापयेत्पुनः ॥ १०८ ॥

तद्दैवत्यं जपेत्पश्चात् मन्त्रमष्टोत्तरं शतम् ।
उद्धृते कलशे रिक्ते सम्पूर्यैव जपेत् पुनः ॥ १०९ ॥

---

१०२. d : V. बहिः for द्विज.
१०३. b : My. राष्ट्रे राज्यस्य for राज्ञो राष्ट्रस्य.
c : V. च for तु.
१०५. b : S. पञ्चान्नं स्थापितेऽपि च, My. पश्चान्न स्थापितेऽपि वा.
१०६. c : V. च for तु.
d : My. शक्ति for शान्ति.
१०७. c : S. आराधितेषु My. आसाधितेषु for आसादितेषु.
१०८. b : My. A. ०ष्व० for त्व०.
१०९. a : A. चरेत् for जपेत्.

उद्धृते कलशे पश्चात् भिन्ने वा पतितेऽपि वा ।
संस्पृष्टे तु तथास्पृश्यैः एवमेव जपेत्ततः ॥ ११० ॥

श्वादिभिः कुक्कुटाद्यैर्वा संस्पृष्टे शबरादिभिः ।
विलङ्घिते तथाघ्राते अस्पृश्यैरितरैस्तथा ॥ १११ ॥

केशादिदूषिते चैव साधिते कलशे ततः ।
पुनः संस्थाप्य कलशम् अन्यं कलशसंख्यया ॥ ११२ ॥

तद्दैवत्यं जपेन्मन्त्रं शतमष्टोत्तराधिकम् ।
एतैः संस्नाप्य देवेशं ज्ञानतोऽज्ञानतोऽपि वा ॥ ११३ ॥

यात्राद्युक्तेन विधिना स्नापयित्वा जपेत्तथा ।
जुहुयात् 'पञ्चमन्त्रै'स्तु मन्त्री पञ्चशताहुतीः ॥ ११४ ॥

अक्रमेण समुद्धृत्य कलशान् स्नापयेद्यदि ।
'मूल'मन्त्रं जपेदत्र गुरुरष्टोत्तरं शतम् ॥ ११५ ॥

संस्थापिते तु कलशे व्यत्ययेन यदृच्छया ।
द्रव्ये वा विविधे वापि पूजने वा तथाविधे ॥ ११६ ॥

कृत्वा पुनः क्रमेणैव जपेन्मन्त्रं तु पूर्ववत् ।
अपूजिते प्रतिद्रव्यमर्घ्यस्रक्चन्दनादिभिः ॥ ११७ ॥

---

११०. a : V. उच्छृते for उद्धृते.
c : S. My. M. च for तु.

१११. a : V. काककीटाद्यैः for कुक्कुटाद्यैः.
c : S. V. M. विलम्बिते for विलङ्घिते.

११२. b : S. A. M. सादिते for साधिते.

११३. a : V. मन्त्री for मन्त्रं.
c : V. संस्थाप्य for संस्नाप्य.

११५. a : S. My. A. M. अक्रमे वा for अक्रमेण.
b : S. My. स्थापयेत् for स्नापयेत्.
c : A. तत्र for अत्र.

११६. d : A. ०न for वा.

११७. b : A. च for तु.

देवे तथैव कुर्वीत जपं पूर्वोक्तसंख्यया ।
दधिसर्पिःपयोभिस्तु महिषाजोष्ट्रसंभवैः ॥ ११८ ॥

संस्नाप्य देवं कुर्वीत होमं 'मूले'न मन्त्रवित् ।
अष्टोत्तरशतं तत्र समिद्भिः सप्तभिः क्रमात् ॥ ११९ ॥

अन्यैर्वा वस्तुभिस्त्याज्यैरेवमेव समाचरेत् ।
गेयवादित्रनृत्ताद्यैः स्तोत्रमङ्गलनिःस्वनैः ॥ १२० ॥

वीणावेणुनिनादैश्च तथा पुण्याहवाचनैः ।
मन्त्रैः पृथग्विधैर्हीने स्नपने पूर्ववज्जपेत् ॥ १२१ ॥

स्नपने वर्तमाने वा बिम्बेऽस्मिन् यत्रकुत्रचित् ।
प्रमादाच्चलिते वेद्यां पतिते वा ततो भुवि ॥ १२२ ॥

प्रागुक्तं स्नपनं कृत्वा तथा होमं च सर्पिषा ।
अष्टोत्तरशतं तत्र चरुणापि 'हृदा'चरेत् ॥ १२३ ॥

प्रभापीठास्त्रवस्त्रादौ भेदभङ्गादिदूषिते ।
मूलबिम्बे समारोप्य तदा बिम्बगतं हरिम् ॥ १२४ ॥

सन्धानं शिल्पिभिः कृत्वा संस्कृत्य च तदैव तु ।
शेषकर्मणि निर्वृत्ते स्नापयेदधमं क्रमात् ॥ १२५ ॥

---

११९. a : V. संस्थाप्य for संस्नाप्य.
d : S. My. A. M. सप्तसंख्यया for सप्तभिः क्रमात्.

१२०. a : A. त्वाज्यैः for त्याज्यैः.

१२१. a : S. A. M. om.
b : My. निःस्वनैः for वाचनैः.

१२२. d : A. V. तथा for ततो.

१२३. a : V. प्रातिष्ठिकं तु स्नपनं.
c : S. My. A. M. मन्त्रं for तत्र.
d : A. ०ख्या० for ०पि, S. A. V. तदा for हृदा.

१२४. d : S. A. M. ततो for तदा.

१२५. b : My. संस्तुत्य for संस्कृत्य, A. तु for च, My. V. A. तथैव for तदैव.

होमं कृत्वा तु चरुणा 'मूल'मन्त्रेण मन्त्रवित् ।
शतमष्टाधिकं मन्त्री तेन शान्तिर्भविष्यति ॥ १२६ ॥

अङ्गहीने तथा बिम्बे सुसंस्कृत्य तु पूर्ववत् ।
संस्थाप्य विधिना पश्चात् प्रायश्चित्तं तथा भवेत् ॥ १२७॥

अन्यस्मिन् स्थापिते कुर्यात् अशक्तो बिम्बकर्मणि ।
यानि शोभार्थबिम्बानि स्थापितान्यत्र वै पुरा ॥ १२८ ॥

तेष्वेकस्मिंस्तु वा कुर्यात् अङ्गबिम्बेऽतिदूषिते ।
एवं सर्वत्र कर्तव्यमुत्सवादिषु मन्त्रिभिः ॥ १२९ ॥

(स्नपनद्रव्यहीनाधिक्ये प्रायश्चित्तम्)

उक्तप्रमाणादधिके हीने स्नपनवस्तुनि ।
शरावे कलशे कूर्चे वस्त्रे कोष्ठे सदस्यपि ॥ १३० ॥

पालिकादौ तथा पीठे तोरणे वाष्टमङ्गले ।
'मूल'मन्त्रं जपेत्तत्र शतमष्टोत्तरं धिया ॥ १३१ ॥

(कामनानुरूपं प्रायश्चित्तस्नपनकालः)

मोक्षार्थी स्नपनं कुर्याद्रात्रौ वाहनि सर्वदा ।
रिपुक्षयार्थ्यहन्येव कुर्यात्स्नपनमात्मवान् ॥ १३२ ॥

---

१२७. b : My. V. संस्कृत्यान्यं for सुसंस्कृत्य.
c : S. My. A. M. संस्नाप्य for संस्थाप्य.
d : V. यथा for तथा.
१२८. b : S. My. A. M. अशक्तौ for अशक्तः.
d : M. पुनः for पुरा.
१३०. b : S. A. M. भिन्ने for हीने.
d : S. गोष्ठे for कोष्ठे.
१३१. a : V. बिम्बे for पीठे.
c : S. My. A. M. अत्र for तत्र.
१३२. b : S. My. A. M. ०वहनि वा सदा for वाहनि सर्वदा.
d. My. उत्तमम् for आत्मवान्.

दिनान्ते सर्वभोगार्थी धर्मार्थी दिनमध्यमे ।
स्वर्गकामस्तु पूर्वाह्णे प्रायश्चित्तं तु सर्वदा ॥ १३३ ॥

(राहुग्रस्तादौ चन्द्रादौ पूजादिकालातिक्रमणे प्रायश्चित्तम्)

राहुग्रस्ते निशानाथे सूर्ये वापि तथैव हि ।
तथा सङ्क्रमिते सूर्ये त्रिंशन्नाडयन्तरे द्विजः ॥ १३४ ॥
अतिक्रान्तेषु कालेषु पूर्ववज्जपमाचरेत् ।

(अङ्कुरविषयकाः दोषाः तत्र प्रायश्चित्तम्)

अङ्कुरेष्वपि रक्तेषु श्यामलेष्वसितेषु वा ॥ १३५ ॥
स्यात् क्रमादेषु कलहो द्रव्यहानिर्मनोव्यथा ।
अप्ररूढेषु सर्वेषु तथा तिर्यग्गतेषु च ॥ १३६ ॥
स्पृष्टेषु चान्यैरस्पृश्यैर्विधिहीनेषु वा तथा ।
भिन्नेष्वङ्कुरपात्रेषु नष्टेषु पतितेष्वपि ॥ १३७ ॥
दष्टेषु मूषिकाद्यैर्वा 'मूल'मन्त्रायुतं जपेत् ।
एकं यागं समुद्दिश्य कृते तत्राङ्कुरार्पणे ॥ १३८ ॥

---

१३३. c : My. सर्व for स्वर्ग०.
d : V. प्रायश्चित्ताय for प्रायश्चित्तं तु.
१३४. d : S. M. ०पि च My. ०पि वा for ०द्विजः.
१३५. a : S. My. A. M. सर्वेषु for कालेषु.
d : My. A. ०वर्णेषु तेषु for ०लेष्वसितेषु, S. M. च for वा.
१३६. a ; b : My. A. V. om.
c : S. M. मरणं My. A. करणं for सर्वेषु.
d : V. सर्व for तिर्यग्.
१३७. b : V. वीथि for विधि.
१३८. a : A. दृष्टेषु for दष्टेषु.
d : A. अकृत्वे वाङ्कुरार्पणं for कृते तत्राङ्कुरार्पणे.

यागेऽस्मिन्नसमाप्ते तु प्राप्ते नैमितिकान्तरे ।
तदर्थमपि कर्तव्यमङ्कुरार्पणमञ्जसा ॥ १३९ ॥

(स्नपनार्थं बद्धप्रतिसरे बिम्बे प्रतिसरबन्धन-
विवेकः तत्र व्युत्क्रमे प्रायश्चित्तम्)

बद्धप्रतिसरे बिम्बे स्नपनार्थे तु मन्त्रिणा ।
प्राप्तेऽन्यस्नपने तत्र न च प्रतिसरान्तरम् ॥ १४० ॥

बन्धनीयं प्रयत्नेन पश्चाद्बद्ध्वा तदाचरेत् ।
बद्धप्रतिसरे बिम्बे स्नपनार्थं तु मन्त्रिणा ॥ १४१ ॥

प्रायश्चित्तान्यतः प्राप्ते स्नपने मुनिसत्तम ।
बध्नीयात्कौतुकं मन्त्री न दोषस्तत्र विद्यते ॥ १४२ ॥

प्रायश्चित्तनिमित्तेऽस्मिन् समाप्ते स्नपने पुनः ।
स्नपनं प्रारभेत् पश्चात् पूर्वारब्धं सुभावितः ॥ १४३ ॥

अतिक्रम्य क्रमं त्वेनं 'मूल'मन्त्रायुतं जपेत् ।

(मण्डूकादिभिः स्पृष्टे कलशे प्रायश्चित्तम्)

मण्डूकमूषिकासर्पचुचुन्दर्यादिजन्तुभिः ॥ १४४ ॥

स्पृष्टे विलङ्घिते चैव स्थापिते कलशे तथा ।
तत्त्यक्त्वान्यत्तु संस्थाप्य जपेन्'मूल'शतं गुरुः ॥ १४५ ॥

---

१३९. a : V. ०पन्ने for ०प्ते तु.
c : S. M. तदर्ध० for तदर्थ०.
१४२. a : S. ०त्तार्धतः My. ०त्तदिने A. ०त्तोदिते for ०त्तान्यतः.
१४३. d : S. समापितः My. सभाषितः A. सभाषितम् for सुभावितः.
१४४. a : S. My. A. ०ञ्चैनं for त्वेनं.
d : V. स्वच्छन्द० for चुचुन्द०.
१४५. a : V. ०म्बिते for ०ङ्घिते.
b : V. तदा for तथा.

(प्रायश्चित्तसामान्ये प्रायश्चित्तम्)

प्रायश्चित्तेषु सम्प्राप्तेष्वन्येष्वप्येवमादिषु ।
'मूल'मन्त्रायुतं तत्र जपेत्तद्दोषशान्तये ॥ १४६ ॥

(निषिद्धोत्सवबिम्बादौ उत्सवे कृते प्रायश्चित्तम्)

अथोत्सवेषु वक्ष्यामि प्रायश्चित्तं महामुने ।
स्वगृहे स्थापिते बिम्बे न च कुर्यान्महोत्सवम् ॥ १४७ ॥

प्रमाणहीने पक्षीशे दण्डे स्तम्भे पटे पदे ।
पीठे वा फलके चित्रे वर्णे बालध्वजेऽपि वा ॥ १४८ ॥

तद्दोषशान्तये कुर्याच्छान्तिहोमं यथाविधि ।

(दूषिते ध्वजे प्रायश्चित्तम्)

भिन्ने च सुषिरे नष्टे भग्ने मूषिकदूषिते ॥ १४९ ॥

सुराविण्मूत्ररेतोऽसृङ्निष्ठीवाद्यैश्च दूषिते ।
ध्वजेऽन्यं पूर्ववत्कृत्वा स्थापयित्वा तु मन्त्रवित् ॥ १५० ॥

अधमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
रक्षामारुह्य कुर्वीत ध्वजवस्त्रस्य यत्नतः ॥ १५१ ॥

आरोहणान्न दोषोऽत्र विद्यते मुनिसत्तम ।

(जीर्णे ध्वजदण्डे प्रायश्चित्तम्)

वैणुकस्तम्भदण्डादीन् जीर्णांस्त्यक्त्वा ततो नवान् ॥ १५२ ॥

---

१४६. c : My. त्वत्र S. V. त्वेवं for तत्र.
१४८. b : A. S. V. वटे for पदे.
c : S. My. V. फेनके for फलके, V. चक्रे for चित्रे.
१४९. d : V. दण्डे for भग्ने.
१५०. b : S. My. A. M. विष्ठाद्यैश्च विदूषिते.
१५१. c : My. रक्षम् for रक्षाम्.

संस्कृत्य पूर्ववत्तत्र बद्ध्वा तु ध्वजमञ्जसा ।
शान्तिहोमं ततः कृत्वा शेषकर्म समाचरेत् ॥ १५३ ॥

(ध्वजस्थितगरुडस्य वर्णहानौ कृत्यम्)

वर्णहीने पतङ्गेशे वर्षपातातपादिभिः ।
न दोषस्तत्र पत्रीशे ध्वजसंस्थे मुनीश्वर ॥ १५४ ॥
पुनरन्यं समुत्पाद्य बध्नीयात् संस्कृतं तथा ।
अन्यथा यदि दोषस्स्यात् राज्ञो राष्ट्रस्य मन्त्रिणः ॥ १५५ ॥

(पक्षीशाधिष्ठितकुम्भनाशादौ प्रायश्चित्तम्)

पक्षीशाधिष्ठिते कुम्भे नष्टे वा पतिते भुवि ।
जेष्ठे पुष्ये तथा तत्र संस्कृत्यान्यं तु पूर्ववत् ॥ १५६ ॥
तच्छक्तिं तत्र सङ्क्रम्य शेषकर्म समाचरेत् ।
जपेत्तद्दोषशान्त्यर्थं 'मूल'मन्त्रायुतं सुधीः ॥ १५७ ॥
अनुक्तानां तु सर्वेषां जपेत्तत्रैवमेव हि ।

(उत्सवे यानादिभङ्गे प्रायश्चित्तम्)

बिम्बेनाधिष्ठिते याने भग्ने वा वाहने क्वचित् ॥ १५८ ॥
यानान्तरं समारोप्य शान्तिहोमं विधाय च ।
वैष्णवेभ्यो यथाशक्ति दद्याद्दत्त्वा गुरोस्तथा ॥ १५९ ॥

(यानादौ बिम्बपतने प्रायश्चित्तम्)

याने तु पतिते बिम्बे वाहने वा प्रमादतः ।
भूमौ वाऽप्यङ्गहीने वा स्नपने तु यथा तथा ॥ १६० ॥

---

१५४. b : S. My. M. वात for पात.
१५५. a : S. समुत्थाप्य for समुत्पाद्य.
१५६. c : V. जेष्ठयै पुष्टयै तथा तत्त्वै.
१५८. b : S. My. A. मन्त्रैस्त० for तत्रैव०.
१६०. b : S. My. M. च A. तु for वा.
c : My. उने V. ऊर्ध्वौ for भूमौ.
d : S. My. A. M. पुरा for तथा.

कृत्वा सर्वं विशेषेण ततश्शेषं समाचरेत् ।

(शून्ये ग्रामादौ उत्सवाचरणे प्रायश्चित्तम्)

शून्ये ग्रामे तु नगरे पत्तनादिषु वा द्विज ॥ १६१ ॥

न कुर्याद्युत्सवं तेषु कृते तत्रापि निष्फलम् ।
कृते महोत्सवे तत्र पुनरुत्सवमारभेत् ॥ १६२ ॥

(उत्सवसमये ग्रामदाहादौ प्रायश्चित्तम्)

ग्रामे दग्धेऽग्निना तत्र महावातादिदूषिते ।
शान्तिहोमं तदा कृत्वा पश्चाद्युत्सवमाचरेत् ॥ १६३ ॥

(उत्सवे देशिकस्य व्याध्यादिसंभवे प्रायश्चित्तम्)

देशिके व्याधिते तत्र मृते वा साधके तु वा ।
कर्मान्तरनियुक्ते तु तथाशौचादिदूषिते ॥ १६४ ॥

शेषमन्येन कर्तव्यं जप्त्वा 'मूला'युतं क्रमात् ।

(चोरादिभयविघ्निते उत्सवे प्रायश्चित्तम्)

चोराग्निवायुवृष्टिभ्यो भयात्तत्रान्यतोऽपि वा ॥ १६५ ॥

विघ्ने महोत्सवे प्राप्ते बलिमेव समाचरेत् ।
तस्मिन्नहनि नष्टे तु तथान्येऽहनि देशिकः १६६ ॥

अतीतं तु तथा कृत्वा बलिहोमसमन्वितम् ।
सम्प्राप्तमुत्सवं कुर्यात् शान्तिहोमं जपेत्ततः ॥ १६७ ॥

ततो यात्रां प्रकुर्वीत विहितेऽह्नि विचक्षणः ।

(तीर्थयात्राविहीने उत्सवे प्रायश्चित्तम्)

विसृष्टतीर्थयात्रेऽस्मिन् पुनरुत्सवमारभेत् ॥ १६८ ॥

---

१६१. c : My. अन्ये for शून्ये.
१६३. c : M. तथा for तदा, S. A. M. हुत्वा for कृत्वा.
१६५. a : S. जप्तव्यं for कर्तव्यम्.
१६६. a : S. My. M. विष्णोः for विघ्ने.
c : V. ०न्नपि वि० for ०न्नहनि.

अवरुह्य ध्वजं तच्च ध्वजोत्त्थापनपूर्वकम् ।

(उत्सवप्रसङ्गे बलिद्रव्यादिव्यत्यासे प्रायश्चित्तम्)

व्यत्यासे बलिवस्तूनां सर्पिषा शतमाहुतीः ॥ १६९ ॥

हुत्वा तु 'मूल'मन्त्रेण जपेदष्टोत्तरं शतम् ।
पुनः प्राप्तं बलिं दद्यात् कालेऽन्यस्मिन् यथाविधि ॥ १७० ॥

व्यत्यासे देवतानां तु तथा होमजपः स्मृतः ।

(अनङ्कुरार्पणाग्रमहोत्सवे प्रायश्चित्तम्)

अनङ्कुरार्पणाग्रं तु प्रारभेत महोत्सवम् ॥ १७१ ॥

ततोऽङ्कुरार्पणं कृत्वा 'मूल'मन्त्रायुतं जपेत् ।
पालिकावसथे पश्चात् ग्रामे चैव ददेद्बलिम् ॥ १७२ ॥

न चान्यतः प्रकुर्वीत राज्ञो राष्ट्रस्य वृद्धये ।
ग्रामस्य च विवृद्ध्यर्थं तस्मिन्ननप्यालये ददेत् ॥ १७३ ॥

शान्तिहोमस्समुद्दिष्टो बलिदाने कृतेऽन्यथा ।

(उत्सवक्रमे पांस्वादिभिः स्पृष्टे बिम्बे प्रायश्चित्तम्)

पांसुभिर्वापि पर्णाद्यैर्वर्षपातहिमातपैः ॥ १७४ ॥

स्पृष्टे महद्भिर्बिम्बे तु शान्तिहोमं समाचरेत् ।

(उत्सवक्रमे सद्मप्रपादिदाहादौ प्रायश्चित्तम्)

सदः प्रपादावप्येवमग्निदग्धे समाचरेत् ॥ १७५ ॥

---

१७०. b : V. ०रायुतम् for ०रं शतम्.
१७३. a : V. चान्यत्र for चान्यतः.
c : S. My. A. M. ०स्यैव for ०स्य च.
१७४. c : A. S. पांसुपावकवर्णाद्यैः.
d : S. My. A. M. वात० for पात०.
१७५. c : My. सद्म for सदः.

तथा दीपेषु सर्वेषु प्रशान्तेषु च मन्त्रवित् ।
भूषणायुधवस्त्राणां मालादीनां तथैव च ॥ १७६ ॥

छत्राणां चामरादीनां ध्वजानां महतां तथा ।
दीपानां मङ्गलानाञ्च तोरणानां महामुने ॥ १७७ ॥

पीठानां आसनानां च लाञ्छनानां तथैव च ।
अन्येषामेवमादीनां पतनं यदि संभवेत् ॥ १७८ ॥

'मूल'मन्त्रसहस्रं तु जपेत् पश्चात् समुद्धृते ।

(अग्न्युत्सवादिकालातिक्रमे प्रायश्चित्तम्)

सवितास्तं यदा याति तावदग्न्युत्सवः स्मृतः ॥ १७९ ॥

यदा तस्मिन्नुदेतिस्म तावदेव निशोत्सवः ।
प्रस्तावेऽस्मिन्नतीते तु स्नपनं चाधमं चरेत् ॥ १८० ॥

(तीर्थयात्राकालातिक्रमे प्रायश्चित्तम्)

स तीर्थयात्रावसरो यात्यस्तं यावदंशुमान् ।
तीर्थयात्रां न रात्रौ तु कारयेत्तन्त्रवित्तमः ॥ १८१ ॥

उत्तमं स्नपनं कुर्यात् प्रमादात् कारयेद्यदि ।
यात्रायां वर्तमानायां स्पृष्टेऽस्पृश्यैस्तु मन्त्रिणः ॥ १८२ ॥

न दोषस्तत्र विज्ञेयो विशेषादुत्सवेषु च ।

(अकृते उत्सवहोमे प्रायश्चित्तम्)

उत्सवे होमहीने तु प्रत्याहुतिशतं जपेत् ॥ १८३ ॥

---

१७८. a : V. कलशानां for आसनानां.
१७९. d : My. वन्हि for अग्नि.
१८१. b : S. My. A. M. यावदस्तं गतोंऽशुमान्.
d : S. My. A. M. मन्त्र० for तन्त्र०.

'अस्त्र'मन्त्रं विशेषेण 'हृन्'मन्त्रं वा यथारुचि ।
उत्सवे पूजयेद्देवं सर्वैः सर्वत्र सर्वदा ॥ १८४ ॥

वस्त्रपुष्पौदनाद्यैस्तु यथाभिमतदिङ्मुखम् ।
आसीनो वा स्थितो वापि साधको मन्त्रवित्तमः ॥ १८५ ॥

प्रायश्चित्तं तु न भवेत् प्रीतये तु हरेर्यतः ।

(उत्सवक्रमे बिम्बनाशे प्रायश्चित्तम्)

नष्टे चोरादिभिर्बिम्बे वर्तमाने महोत्सवे ॥ १८६ ॥

कृत्वा बिम्बान्तरं वापि कर्मार्चादिषु वाचरेत् ।

(पुष्पयागरहिते उत्सवे प्रायश्चित्तम्)

निशायां सर्वशान्त्यर्थं पुष्पयागं समाचरेत् ॥ १८७ ॥

अकृते पुष्पयागेऽस्मिन् यात्रान्ते मुनिसत्तम ।
तत्र सम्पूरणार्थं तु कुर्यात्स्नपनमुत्तमम् ॥ १८८ ॥

(संक्षेपतः पुष्पयागविधिनिर्देशः)

पुष्पयागे तु विहितास्त्रयो देशिकसत्तमाः ।
एको मण्डलपूजार्थमन्यो देवं समर्चयेत् ॥ १८९ ॥

बलिदानादिकं सर्वमन्यः कुर्याद्विचक्षणः ।
जलोत्थितानि पुष्पाणि त्रिरात्रेणोषितान्यपि ॥ १९० ॥

---

१८४. c : S. My. प्रायजेत् for पूजयेत्.
d : V. सर्वे for सर्वैः.

१८५. c : S. My. ०ऽव० for वा.

१८६. b : M. उत for यतः.

१८८. c : V. ०णार्थाय for ०णार्थं तु

१९०. c : V. जयार्थी for जलोत्थि०.
d : My. A. ०त्रोयोषि for ०त्रेणोषि०.

पूजायां विनियुञ्जीत विष्णोस्साधकसत्तमः ।
न पूर्वरात्रावुषितैर्दिवा सम्पूजयेत्ततः ॥ १९१ ॥

न पूर्वाह्णोषितैस्तद्वत् निशायामपि चार्चयेत् ।
पुष्पयागे यथाकाममर्चितव्यं तु मन्त्रिभिः ॥ १९२ ॥

(उत्सवध्वजावरोहणकालातिक्रमे प्रायश्चित्तम्)

ध्वजावरोहणं कुर्यात्तत्तद्रात्रौ द्विजोत्तम ।
ततोऽन्यायां विभावर्यां कृत्वा तु स्नपनं तथा ॥ १९३ ॥

ध्वजावरोहणं कुर्यात् अन्यथा दोषभाग्भवेत् ।
यात्रायाश्चान्तरे नष्टे भिन्ने वा पूर्ववद्ध्वजे ॥ १९४ ॥

कृत्वा सर्वं विधानेन पुनरेवावरोहयेत् ।

(महोत्सवदिनानुसारं बलिसंख्यानिर्देशः)

द्वाविंशद्बलिभिर्युक्तो द्वादशाहो महोत्सवः ॥ १९५ ॥

तथैव षोडशबलिर्नवाहस्तु महोत्सवः ।
सप्ताहो द्वादशबलिः पञ्चाहोऽष्टबलिः स्मृतः ॥ १९६ ॥

चतुर्भिर्बलिभिर्युक्तस्त्रियहो वैष्णवोत्सवः ।
एकाहो द्विबलिर्वापि तथैकबलिरेव वा ॥ १९७ ॥

---

१९१. c : My. ०ध्युषितैः for ०वुषितैः.
१९२. a : My. पूर्वाह्णे चोषितैस्तद्वत्.
b : S. My. नार्चयेत् for चार्चयेत्.
d : S. V. आचर्तव्यम् for अर्चितव्यं.
१९३. b : My. A. M. न for तत्.
c : My. A. M. विपर्ययां for विभावर्यां.
१९४. c : My. A. ०याश्चततो for ०याश्चान्तरे.
१९५. b : A. अपरो भवेत् for अवरोहयेत्
c : V. ब० for ०द्ब०.
१९६. d : My. ततः for स्मृतः.
१९७. a ; b. V. om

(सामान्योत्सवे बलितीर्थयात्रयोः राहित्यानुमतत्त्वम्)

बलिहीनस्तु वा ज्ञेयः उत्सवो द्विजपुङ्गव ।
तीर्थयात्राविहीनो वा तीर्थयात्रान्वितोऽपि वा ॥ १९८ ॥

(महोत्सवे बलिसंख्यान्यूनाधिक्ये दोषः प्रायश्चित्तञ्च)

एतैस्तु बलिभिर्हीने अधिके तु महोत्सवे ।
कर्तुः कारयितुश्चापि राज्ञो राष्ट्रस्य मन्त्रिणः ॥ १९९ ॥
भविष्यन्ति सदा विप्र दारुणा व्याधयो मुने ।
दारिद्र्यं च सदा कुर्यात् तस्माद्यागबलिं क्षिपेत् ॥ २०० ॥
तद्दोषशान्तये कुर्यात् अधमस्नपनं द्विज ।

(प्रचलिते उत्सवे नैमित्तिकोत्सवाचरणक्रमः)

उत्सवे वर्तमाने तु देवदेवस्य चक्रिणः ॥ २०१ ॥
नैमित्तिके तु सम्प्राप्ते द्वादश्यादौ महामुने ।
कुर्यात्सर्वं यथान्यायं तत्तद्विध्यनुसारतः ॥ २०२ ॥
न लोपयेत्प्रयत्नेन प्राप्तं वैशेषिकं सदा ।
अनुक्तेष्वितरेष्व'स्त्रम'युतं शान्तये जपेत् ॥ २०३ ॥

(प्रमाणरहिते पवित्रादौ प्रायश्चित्तम्)

प्रायश्चित्तमितो वक्ष्ये पवित्रारोहणार्थतः ।
अप्रमाणे पवित्रे तु कुण्डे वा स्थण्डिलादिके ॥ २०४ ॥

---

२००. b : V. नृणाम् for मुने.
d : My. त्याग for याग.
२०२. b : M. ०दश्यां वा for ०दश्यादौ.
२०३. b : S. My. A. M. तथा for सदा.
२०४. a : M. ०विधौ for ०मितो.
b : S. My. A. M. ०णं ततः for ०णार्थतः.
d : My. A. उदिते for आदिके.

'अस्त्र'मन्त्रायुतं जप्त्वा पूजयेत्कलशं ततः ।

(निर्दिष्टकालातीते पवित्रारोपणे प्रायश्चित्तम्)

अतीते उक्तकाले तु पवित्रारोहणार्थतः ॥ २०५ ॥

कृत्वा तु स्नपनं शक्त्या कालेऽन्यस्मिंस्तदाचरेत् ।
एवं सर्वेषु यागेषु प्रायश्चित्तं विधीयते ॥ २०६ ॥

(केशादिदूषिते पवित्रे प्रायश्चित्तम्)

केशपाषाणनखरचर्माङ्गारादिदूषिते ।
पवित्रे तद्विसृज्यान्यत्तथा कृत्वाधिवास्य च ॥ २०७ ॥

जपेदष्टोत्तरशतं 'मूल'मन्त्रं सुभावितः ।

(पवित्रे दग्धादौ प्रायश्चित्तम)

दग्धे नष्टे तथा छिन्ने मूषिकाद्यैस्तु भक्षिते ॥ २०८ ॥

पुनरन्यत्तथा कृत्वा पूर्ववज्जपमाचरेत् ।

(पवित्रोत्सवक्रमे अस्पृश्यैः कुम्भस्पर्शादौ प्रायश्चित्तम्)

पूजितं वैष्णवं कुम्भमस्पृश्यः संस्पृशेद्यदि ॥ २०९ ॥

कुम्भान्तरं समानीय तत्रावाह्य जपेत्तथा ।
भिन्ने कुम्भे पुनस्तद्वत् कृत्वा 'मूला'युतं जपत् ॥ २१० ॥

---

२०५. b : My. V. कनकं for कलशं.
२०६. b : M. तथा for तदा.
२०७. c : A. My. S. अथ for अन्य.
२०८. b : S. A. M. सुभावितम् for सुभावितः.
२०९. c : A. S. पूरितं for पूजितं.
२१०. b : A. ततः for तथा.
c : My. हीने for भिन्ने.

(पवित्रोत्सवे बिम्बपतनादौ प्रायश्चित्तम्)

अत्र बिम्बस्य पतने पूर्ववत्सर्वमाचरेत् ।
बलिप्रदानमन्येन कारयेत्तन्त्रवित्तमः ॥ २११ ॥

स्वयं दद्याद्यदि बलिं स्नात्वा कर्मण्यथा चरेत् ।
अक्रमेण पवित्रैस्तु पूजयेद्यदि साधकः ॥ २१२ ॥

स्नात्वा पश्चाज्जपं कुर्यान्'मूल'मन्त्रायुतं सुधीः ।
बिम्बेनाधिष्ठितं मन्त्री मण्डलं पूजयेद्यदि ॥ २१३ ॥

तदा तन्मण्डलीयैर्वा पवित्रैस्तत्र पूजनम् ।
पवित्रारोहणार्थं यत् स्नपनं विहितं पुरा ॥ २१४ ॥

कुर्यात् स्नपनबिम्बे तु मूलबिम्बे तु वा द्विज ।
मण्डलान्तर्गते देवे नाचरेत् स्नानमात्मवान् ॥ २१५ ॥

मनसा तत्र तत्कुर्यात् प्रोक्षयेद्वात्र तज्जलैः ।

(पवित्रोत्सवप्रसङ्गे फलादीनां निर्माल्यत्वविवेकः)

अत्र दत्तं फलं पुष्पम् अधिवासनकर्मणि ॥ २१६ ॥

पत्रमप्येवमाद्यं च त्रिरात्रोपोषितं त्वपि ।
निर्माल्यत्वं न तद्याति पावनं च भवेत्सदा ॥ २१७ ॥

---

२११. b : My. ०च्च समा० A. ०त्समभा० for ०त्सर्वमा०.
c : S. प्रधानम् for प्रदानं.
d : My. मन्त्र for तन्त्र०.

२१३. a : S. My. A. M. वास्त्र for पश्चात्.
b : M. शुचिः for सुधीः.
d : S. My. A. यदा for यदि.

२१४. a : S. तु V. न for तत्.
b : S. My. A. M. तस्य for तत्र.

२१५. c : V. मण्डप for मण्डल.
d : A. चरेत् for आत्मवान्.

२१६. b : V. पात्र M. वास्त्र for वात्र.

(पवित्रोत्सवे मण्डलद्वयकल्पननिषेधः)

न मण्डलद्वयं कुर्यात् पवित्रारोहणादिषु ।
मुहूर्ते समतिक्रान्ते विहीने तु विरोधतः ॥ २१८ ॥
अन्यस्मिन् वा समारोप्य कुर्यात् स्नपनमुत्तमम् ।

(बिम्बादौ प्रमाणराहित्ये प्रायश्चित्तम्)

प्रतिष्ठायां प्रवक्ष्यामि प्रायश्चित्तं द्विजोत्तम ॥ २१९ ॥
बिम्बे प्रमाणरहिते पीठेऽस्त्रे वा प्रभादिके ।
शमीपत्रान्वितैस्तत्र तण्डुलैश्शालिजैश्शुभैः ॥ २२० ॥
'पञ्चमन्त्रै'स्तु जुहुयात् प्रत्येकं तु शताहुतीः ।

(अस्थाने स्थापिते बिम्बे प्रायश्चित्तम्)

अस्थाने स्थापिते बिम्बे तस्मादुद्धृत्य तत्क्षणात् ॥ २२१ ॥
पुनः प्रतिष्ठामार्गेण स्थापयित्वा स्वके पदे ।
मध्यमं स्नपनं कुर्यात् तेन शान्तिर्भविष्यति ॥ २२२ ॥

(पाञ्चरात्रदीक्षितेतरैः सम्पादितायां प्रतिष्ठायां प्रायश्चित्तम्)

जिह्वाभेदविदा तेन सम्यग्वस्त्रेण मन्त्रिणा ।
तथा समरसज्ञेन षडध्वकुशलेन वै ॥ २२३ ॥
भगवद्वंशजातेन शुद्धभावयुतेन च ।
दीक्षाभिषेकयुक्तेन पञ्चरात्रविदा तथा ॥ २२४ ॥

---

२२०. b : S. M. समाहिते for प्रभादिके.
d : M. शालिभिः for शालिजैः.
२२१. d : S. M. तत्त्ववित् for तत्क्षणात्.
२२२. b : S. My. A. V. स्नापयित्वा for स्थापयित्वा.
२२३. a : S. विद्यासौम्यक् My. A. विदा सम्यग् for ०विदा तेन.
b : S. M. धौतवस्त्रेण My. हविषा वज्रेण for सम्यग्वस्त्रेण.
२२४. b : My. A. M. वैष्णवानां प्रियेण वै.

अनन्यदेवभक्तेन बिम्बं न स्थापितं यदि ।
राज्ञो राष्ट्रस्य सर्वस्य यजमानस्य तस्य च ॥ २२५ ॥

भवेत् कुलक्षयायैव नात्र कार्या विचारणा ।
अस्य दोषस्य नाशाय कुर्यात्स्नपनमुत्तमम् ॥ २२६ ॥

अत एवं विधेनैव स्थाप्यं भागवतेन वै ।
एवं भूतैस्तु कर्तव्यं होमकर्म विशेषतः ॥ २२७ ॥

(सेनादिविनाशिते बिम्बे प्रायश्चित्तम्)

नष्टे सेनादिभिर्बिम्बे सद्यः स्थापनमाचरेत् ।
न कालोऽत्र परिज्ञेयो रात्रावहनि सन्ध्ययोः ॥ २२८ ॥

(बालालयविषयकदोषेषु प्रायश्चित्तानि)

बालस्थाने प्रवक्ष्यामि प्रायश्चित्तं द्विजोत्तम ।
अतीते प्रार्थिते काले कृत्वा स्नपनमुत्तमम् ॥ २२९ ॥

पश्चात् सम्प्रार्थयेत् कालं यथाकांक्षं द्विजोत्तम ।
अकृत्वैवं गते पश्चात् काले द्वादशवत्सरे ॥ २३० ॥

पुनः प्रतिष्ठामस्मिन् वा मूलगेहे तु वाचरेत् ।
नष्टे स्तेनादिभिर्बिम्बे बालगेहे प्रमादतः ॥ २३१ ॥

पुनरर्चां तथा स्थाप्य स्नापयेदधमक्रमात् ।
स्वस्थानाच्चलिते तस्मिन् अन्तरायेण केनचित् ॥ २३२ ॥

संस्थाप्य पूर्ववत्कुर्यात् स्नपनं त्वधमं पुनः ।
सर्वं बालगृहे कार्यमेकबेरविधिक्रमात् ॥ २३३ ॥

---

२२७. d : S. My. A. M. क्रम for कर्म.
२२८. a : A. V. स्तेना० for सेना०.
b : S. My. A. स्नपन for स्थापन.
२३३. b : My. च for तु.
c : A. सर्व० for सर्वं.

(चोराद्यपहृते बिम्बे पुनः प्रतिष्ठाविवेकः)

चोराद्यपहृते बिम्बे प्रायश्चित्तविधिं शृणु ।
स्तेनैर्नष्टे तथा बिम्बे तद्द्रव्येणैव पूर्ववत् ॥ २३४ ॥

कृत्वा तु लक्षणोपेतं प्रतिष्ठाप्य तथैव तु ।
पूजयेत्पूर्ववन्मन्त्री बिम्बं सर्वत्र सर्वदा ॥ २३५ ॥

वस्त्वन्तरेण वा कुर्यात् अशक्तो यागसिद्धये ।
चोरैरपहृतं बिम्बं पुनः प्राप्तं यदि द्विज ॥ २३६ ॥

तस्य प्रतिष्ठां कुर्वीत पाञ्चरात्रविशारद ।

(चोरभूतद्विजादिभिः स्पृष्टे बिम्बे प्रायश्चित्तम्)

चोरभूतैः द्विजैः स्पृष्टे यात्रोक्तं स्नपनं चरेत् ॥ २३७ ॥

नृपैर्वैश्यैस्तथाभूतैः अधमं स्नपनं चरेत् ।
मध्यमं स्नपनं कुर्यात् शूद्रैः स्पृष्टे तथाविधैः ॥ २३८ ॥

चोरैरन्यैस्तु संस्पृष्टे कुर्यात्स्नपनमुत्तमम् ।
तथा विधैस्तु चण्डालैः प्रतिष्ठाकर्म कारयेत् ॥ २३९ ॥

(चण्डालाद्यधिष्ठिते आलये प्रायश्चित्तम्)

चण्डालसूतिकोदक्याशवराद्यैरधिष्ठिते ।
प्रमादादबुद्धिपूर्वाद्वा देववेश्मनि कुत्रचित् ॥ २४० ॥

अधमस्नपनं कुर्यात् तदन्ते मध्यमं चरेत् ।

(चण्डालाद्यैः स्पृष्टे बिम्बे प्रायश्चित्तम्)

उत्तमं स्नपनं कुर्यात् बिम्बे स्पृष्टे तदैव तु ॥ २४१ ॥

---

२३५. b : S. तथैव तम् My. A. M. तदैव तु for तथैव तु.
२३६. b : इतः आरभ्य २५० श्लोकसंख्यापर्यन्तं S. om.
c : A. चोरोपहृतं यद्बिम्बं, V. om. बिम्बं, M. द्रव्यं for बिम्बं.
२३८. d : My. A. तदैव तु for तथाविधैः.
२४१. a ; b : M. om.

(निकृष्टजन्तुभिः आलयस्पर्शे प्रायश्चित्तम्)

श्वसृगालविडालाद्यैः स्पृष्टे आयतने हरेः ।
मध्यमं स्नपनं कृत्वा शान्तिहोमो विधीयते ॥ २४२ ॥

(निकृष्टजन्तौ अङ्गणेऽधिष्ठिते प्रायश्चित्तम्)

अधिष्ठिताङ्गणेष्वेतैः शान्तिहोमो विधीयते ।

(निकृष्टजन्तुभिः बिम्बे स्पृष्टे प्रायश्चित्तम्)

बिम्बे एतैस्तु संस्पृष्टे मध्यमं स्नपनं चरेत् ॥ २४३ ॥

(निकृष्टपक्षिस्पर्शे प्रायश्चित्तम्)

स्पृष्टे तु पक्षिभिः कैश्चित् दोष आयतने भवेत् ।
गृध्रकुक्कुटकाकाद्यैः स्पृष्टे बिम्बे तु पूर्ववत् ॥ २४४ ॥

(खद्योतादिस्पर्शे प्रायश्चित्तम्)

खद्योताद्यैस्तु संस्पृष्टे त्वधमं स्नपनं भवेत् ।

(भृङ्गादिस्पृष्टे बिम्बे दोषाभावः)

न भृङ्गमक्षिकाद्यैस्तु स्पृष्टे दोषो भवेद्ध्रुवम् ॥ २४५ ॥
तथा पिपीलिकाद्यैस्तु तद्भुक्तैस्तु विशेषतः ।

(विण्मूत्राद्यस्पृष्टे बिम्बादौ प्रायश्चित्तम्)

विण्मूत्ररुधिरापेयमत्स्यमांसादिवस्तुभिः ॥ २४६ ॥
संस्पृष्टे वैष्णवे बिम्बे कार्यं स्नपनमुत्तमम् ।
एतैर्दुष्टेऽङ्गणादौ तु तस्माद्दुद्धृत्य तत्क्षणात् ॥ २४७ ॥

---

२४३. a ; b : V. A. om.
२४४. c : A. ०द्यैस्तु for ०काद्यैः.
२४५. b : M. चरेत् for भवेत्.
c ; d : My. om.
२४६. a : My. om.
b : My. भूतैः for भुक्तैः.
d : S. My. A. ०भिस्ततः for वस्तुभिः.

सम्प्रोक्ष्य पञ्चगव्येन शान्तिहोमं समाचरेत् ।

(वैश्यस्थापिते बिम्बे शूद्रादिस्पर्शे प्रायश्चित्तम्)

वैश्यस्य वैष्णवे बिम्बे शूद्रैस्स्त्रीभिर्द्विजोत्तम ॥ २४८ ॥

आलये स्थापिते स्पृष्टे क्षालयित्वा तु वारिणा ॥
शान्तिहोमं ततः कुर्यात् अनुलोमैस्तु वा द्विज ॥ २४९ ॥

प्रतिलोमैस्तु संस्पृष्टे सर्वमङ्कणभूमिवत् ।

(वैखानसस्पृष्टे बिम्बे प्रायश्चित्तम्)

वैखानसैस्तु संस्पृष्टे पयः स्नानेन शुद्ध्यति ॥ २५० ॥

(वैखानसैः स्पृष्टे प्रभादौ प्रायश्चित्तम्)

प्रभापीठास्त्रगेहं तु सममेतच्चतुष्टयम् ॥
बिम्बवच्च परिज्ञेयं पूजापीठं सुपूजितम् ॥ २५१ ॥

(आलये स्वापादौ प्रायश्चित्तम्)

शिष्यादिभिस्तु दोषोऽस्ति प्राङ्कणादावधिष्ठिते ।
अङ्कणेष्वेव सर्वत्र तस्मान्नाचमनादिभिः ॥ २५२ ॥

पूजाङ्गत्वेन विहितैः गुरुसाधकदीक्षितैः ।
न दोषो द्विजशार्दूल स्वापनस्वप्नभोजनैः ॥ २५३ ॥

अन्यैर्जनैः कृतेष्वेषु पञ्चगव्यं यथाविधि ।
प्रोक्षयित्वा तु तद्देशं कुशाद्भिः प्रोक्षयेत्ततः ॥ २५४ ॥

---

२४९. d : My. A. M. तथा for तु वा.
२५०. a : आरभ्य २८२. श्लोकसंख्या पर्यन्तं V. om.
२५१. a : My. A. बिम्बं for गेहं.
b : M. एव for एतत्.
c : My. पञ्च for वच्च.
२५२. b : S. M. om.

(सर्पादिभिः प्रविष्टे गर्भगेहे प्रायश्चित्तम्)

सर्पमूषिकमण्डूकविडालाद्यैस्तु जन्तुभिः ॥
प्रविष्टे गर्भगेहे तु शान्तिहोमं समाचरेत् ॥ २५५ ॥

(मण्डपादौ वल्मीकाद्युद्भवे प्रायश्चित्तम्)

वल्मीकमक्षिकावासे कृमीणां निचये तथा ।
छत्राकाणां समूहे वा दुष्टसत्त्वगणे तु वा ॥ २५६ ॥

अपूर्वपक्षिसङ्घाते ब्रह्मदण्डाधिरोहणे ॥
मण्डपादौ तु सञ्जाते कुत्रचिद्वा हरेर्गृहे ॥ २५७ ॥

शान्तिहोमं ततः कुर्यात् तद्व्यपोह्य तदैव तु ।
विमान एव सञ्जाते त्वधमं स्नपनं चरेत् ॥ २५८ ॥

(बिम्बे वल्मीकाद्युद्भवे प्रायश्चित्तम्)

बिम्बे यदि तु कार्यं स्यात् प्रवासावासपूर्वकम् ।
कर्म कृत्वा यथान्यायं कृत्वा यात्रां ततोऽत्र वै ॥ २५९ ॥

पुनर्बिम्बं नवं कृत्वा पूर्ववत्स्थापयेत्ततः ।

(अङ्गणादौ रक्तस्त्र्युपस्थितौ प्रायश्चित्तानि)

रक्तस्त्रीषु समुत्पन्नास्वङ्गणादौ द्विजोत्तम ॥ २६० ॥

तदोत्तमं तु स्नपनं कृत्वा तद्दोषशान्तये ।
विमाने पूर्वसृष्टासु कुर्यात्स्नपनमुत्तमम् ॥ २६१ ॥

मण्डपे गोपुरादौ वा मध्यमं स्नपनं भवेत् ।

(प्राङ्गणादौ रक्तस्त्रीस्पर्शे प्रायश्चित्तम्)

कुत्रचित्प्राङ्गणादौ तु स्पृष्टास्वेतासु तत्क्षणात् ॥ २६२ ॥

---

२५७. b : A. M. ०दण्डादि० for दण्डाधि०.
२५९. d : S. My. व्रजेत् for ०ऽत्र वै.
२६१. a : A. कृत्वोत्तमं for तदोत्तमं.

अधमं स्नपनं कुर्यात् तद्व्यपोह्य च शान्तये ।

(अकर्तव्यानुष्ठिते आलये प्रायश्चित्तम्)

अकर्तव्ये कृते कर्मण्यस्मिन् देवालये क्वचित् ॥ २६३ ॥

शान्तिहोमं प्रकुर्वीत तस्य दोषस्य शान्तये ।

(निष्ठीवनादिदूषिते आलये प्रायश्चित्तम्)

निष्ठीववमनाद्यैस्तु दुष्टे देवगृहे क्वचित् ॥ २६४ ॥

तद्व्यपोह्य तदैवाशु पञ्चगव्यैर्विलिप्य च ।
जपे'दस्त्र'शतं मन्त्री होमं चैव यथाविधि ॥ २६५ ॥

(अङ्गणे चण्डालादिमरणादौ प्रायश्चित्तम्)

चण्डालपतितोदक्यासूतिकामरणादिषु ।
प्राप्तेष्वङ्गणेष्वेव तद्देशे मृण्मये सति ॥ २६६ ॥

हस्तमात्रं ततः खात्वा पूरयित्वान्यमृत्तिकाः ।
मध्यमं स्नपनं कुर्यात्तेन शान्तिर्भविष्यति ॥ २६७ ॥

(विमानादौ चण्डालादिमरणे प्रायश्चित्तम्)

एषां तु मरणे प्राप्ते विमानादौ तु कुत्रचित् ।
पूर्ववत्सकलं कृत्वा कुर्यात् स्नपनमुत्तमम् ॥ २६८ ॥

अष्टोत्तरसहस्रं तु 'मूल'मन्त्रेण होमयेत् ।

(बिम्बे चण्डालादिशवस्पर्शे प्रायश्चित्तम्)

शवेन बिम्बे संस्पृष्टे कुर्यात्स्नपनमुत्तमम् ॥ २६९ ॥

समिद्भिः सप्तभिः कुर्यात् अष्टोत्तरसहस्रकम् ।
'मूल'मन्त्रं जपेत्पश्चात् साधकोऽष्टोत्तरायुतम् ॥ २७० ॥

---

२६५. d : A. च तु for चैव.
२६६. b : My. A. आदिके for आदिषु.
c : My. A. एषु for एव.
२६७. c : S. V. M. कृत्वा for कुर्यात्.
२६८. a : My. एतेषां for एषां तु, A. चैव for प्राप्ते.

महादानं प्रकुर्वीत वित्तशाठ्यविवर्जितम् ।

(बिम्बे द्विजादिशवस्पृष्टे प्रायश्चित्तम्)

द्विजानां शवसंस्पृष्टे स्नपनान्मध्यमाच्छुचिः ॥ २७१ ॥

जात्यन्तरशवस्पृष्टेऽप्येवमेव विधीयते ।

(विमाने द्विजातिशवस्पृष्टे प्रायश्चित्तम्)

द्विजातिशवसंस्पृष्टे विमाने धर्ममार्गतः ॥ २७२ ॥

स्नपनं कारयित्वा तु जपेन्'मूल'सहस्रकम् ।

(विमाने शूद्रशवस्पृष्टे प्रायश्चित्तम्)

तथा शूद्रशवस्पृष्टे विमाने यत्रकुत्रचित् ॥ २७३ ॥

मध्यमं स्नपनं कुर्यात् जपं पूर्ववदाचरेत् ।

(सालादौ द्विजादिमरणे प्रायश्चित्तम्)

सालमण्डपपीठेषु गोपुरेष्वजिरेषु वा ॥ २७४ ॥

विमानाद्बाह्यतः क्वापि परिवारालयादिषु ।

सर्वावासे महापीठे सर्वमङ्गणभूमिवत् ॥ २७५ ॥

मृते द्विजादौ कुर्वीत मध्यमस्नपनं क्रमात् ।

(सङ्कुरजातीयशवस्पर्शे प्रायश्चित्तम्)

अधमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ २७६ ॥

सङ्कराणां तु जातीनां शवस्पृष्टे तु शूद्रवत् ।

(पश्वादिमरणे प्रायश्चित्तम्)

पश्वादिषु मृतेष्वेषु श्वसृगालखरादिषु ॥ २७७ ॥

---

२७१. a ; b : S. om.

२७४. d : My. A. मन्दिरेषु for अजिरेषु.

२७५. c : S. M. सव्यान्यास for सर्वावासे.

२७७. a : My. द्विजातौ for जातीनां.

b : My. स्नपनं त्वधमं क्रमात्.

वायसश्येनगृध्राादिष्वन्येष्वप्येवमादिषु ।
शान्तिहोमस्तु कर्तव्यः साधकेन विपश्चिता ॥ २७८ ॥

(मूषिकादिमरणे प्रायश्चित्तम्)

मृते मूषिकसर्पादौ भूशुद्धिजमथाचरेत् ।
सर्वत्र कुर्याद्भूशुद्धिं विशेषान्मरणादिषु ॥ २७९ ॥

(महापीठे सर्पावासे प्रायश्चित्तम्)

सर्पावासे महापीठे सर्वमङ्गणभूमिवत् ।
प्रायश्चित्तं तु कर्तव्यमाचार्यैस्तन्त्रपारगैः ॥ २८० ॥

(आवसथार्पिते बिम्बे दोषाभावः)

न दोषो मरणाद्यैस्तु बिम्ब आवसथार्पिते ।

(महोत्पाते सम्प्राप्ते प्रायश्चित्तम्)

महोत्पाते तु सम्प्राप्ते दुर्निमित्तोदयेऽपि वा ॥ २८१ ॥
उल्काशन्यादिपतने वैपरीत्येऽप्युपस्थिते ।
अधमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ २८२ ॥

(मण्डपादिदाहे प्रायश्चित्तम्)

मण्डपे गोपुरे शाले प्रपादौ प्राङ्गणत्रये ।
दग्धेऽग्निना प्रमादेन नीत्वाऽन्यत्र तु देवताः ॥ २८३ ॥

---

२७८. c ; d : My. om.
२७९. a : S. M. om सर्पादौ.
२८०. a : S. My. A. चर्व for सर्प.
२८२. a : S. My. A. M. पाते तु for पतने.
b : M. व्यवस्थिते for ०प्युपस्थिते.
c : S. My. A. M. कुर्यात् for कृत्वा.
२८३. b : S. My. A. M. प्राङ्गणे वने for प्राङ्गणत्रये.
c ; d : S. om.

उद्यानोपवनाद्यं च पूर्वांशादवसानकम् ।
पूर्ववत्तन्नवं कृत्वा प्रतिष्ठाप्य यथाविधि ॥ २८४ ॥
अस्य दोषस्य शान्त्यर्थम् अधमं स्नपनं चरेत् ।

(अग्न्यादिना प्रासादैकदेशे भङ्गे प्रायश्चित्तम्)

भग्नैकदेशे प्रासादे हुतभुग्वातवृष्टिभिः ॥ २८५ ॥
अन्यैर्वा कारणैः कैश्चित् संधेयं तच्च शिल्पिभिः ।
अधमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ २८६ ॥

(सम्पूर्णविमानभग्ने प्रायश्चित्तम्)

भग्ने विमाने सकले बालस्थानं प्रकल्पयेत् ।
तद्दोषशान्तये कार्यं मध्यमं स्नपनं हरेः ॥ २८७ ॥

(मूलबिम्बाग्निदग्धे प्रायश्चित्तम्)

मूलबिम्बेऽग्निदग्धे तु बालस्थानं प्रकल्पयेत् ।
उत्तमं स्नपनं चात्र कार्यं पश्चाद्द्विजोत्तम ॥ २८८ ॥

(दग्धे कर्मबिम्बादौ प्रायश्चित्तम्)

दग्धे तु कर्मबिम्बादौ स्नपनं चोत्तमं भवेत् ।
अग्निवातादिवेगेन मन्त्रिणो वापराधतः ॥ २८९ ॥

(लोहबिम्बाङ्गभङ्गे सन्धानार्हत्वानर्हत्वम् प्रायश्चित्तञ्च)

भग्नाङ्गे राजते बिम्बे सौवर्णे वापि सन्धयेत् ।
अन्यल्लोहमयं यत्तन्न सन्धेयं द्विजोत्तम ॥ २९० ॥

---

२८४. b : My. पूर्वादाशावसानमाम्, A. पूर्वादंशावशानमाम्.
२८५. a : S. तस्य for अस्य.
b : My. A. मध्यमं for अधमम्.
२८८. b : M. मूल for बाल.
c : My. कार्यं for चात्र.
d : My. अत्र for कार्यं.
२९०. a : S. A. अंशे for अङ्गे.
b : S. साधयेत् for सन्धयेत्.

अथवा वित्तहीनश्चेत् ताम्ररीतिमयं द्विज ।
सन्धानयोग्यं सन्धेयं कुर्याद्विद्राव्य वापदि ॥ २९१ ॥

त्यक्तबिम्बं समुद्भ्रान्तः प्रक्षिपेत् पूर्ववर्त्मना ।

(भग्ने मृदादिबिम्बे प्रायश्चित्तम्)

मृत्काष्ठोपलजे भग्ने बिम्बे केनापि हेतुना ॥ २९२ ॥

बालस्थानं तदा कृत्वा विधिना मन्त्रकोविदः ।
तत्त्यक्त्वान्यन्नवं कृत्वा पुनः संस्थापयेत्क्रमात् ॥ २९३॥

एवं रत्नमये बिम्बे हीनाङ्गे कारयेत्सुधीः ।
सन्धेयं च प्रयत्नेन रत्नपाषाणकाष्ठजम् ॥ २९४ ॥

सन्धेयं मृण्मयं बिम्बं लोहजं वा विचक्षण ।
तत्र शूलेषु हीनेषु कुर्यात् शूलान्तरं पुनः ॥ २९५ ॥

न त्याज्यं मृत्तिकाशूलं रज्वाद्याः देवनिर्मिते ।

(देवादिप्रतिष्ठापितलोहादिबिम्बसन्धानविवेकः)

देवगन्धर्वमुनिभिः मर्त्यैः पौराणिकैस्तु वा ॥ २९६ ॥

प्रतिष्ठिते तथा जीर्णे बिम्बे लोहमये द्विज ।
तदङ्गं सन्धयेत्पश्चात् सुवर्णेनैव नान्यथा ॥ २९७ ॥

भग्ने शिलामये बिम्बे देवमुन्यादिभिः कृते ।
तदङ्गं रुक्मजं कृत्वा पुनः संस्थापयेत्क्रमात् ॥ २९८ ॥

---

२९१. d : V. यद्द्रव्य for विद्राव्य.
२९२. b : S. My. A. कर्मणा for वर्त्मना.
२९३. a : S. My. M. तथा for तदा.
२९४. b : M. बुधः for सुधीः.
२९५. c : S. My. A. M. संस्कुर्यात् for हीनेषु.
d : S. My. A. M. तत्तत् for कुर्यात्.
२९७. a : S. My. M. तदा for तथा, A. om. तथा जीर्णे.

तदङ्गं रुक्मजं कृत्वा सन्धयेद्रत्नजेऽपि च ।
देवादिस्थापिते बिम्बे हीनाङ्गे मृण्मयेऽपि वा ॥ २९९ ॥

मन्त्रिभिर्न परित्याज्यं सन्धयेत्तन्मृदा शनैः ।
एवं वर्णैर्विहीनेऽपि सन्धयेत्तद्द्विजोत्तम ॥ ३०० ॥

अस्मिन् जीर्णे हि यद्यत्तद्व्यपोह्यान्येन सन्धयेत् ।
न बालगेहबिम्बाद्यमस्मिन्नेव तु कारयेत् ॥ ३०१ ॥

नित्यादौ वर्तमानेऽत्र सर्वं कुर्यादतन्द्रितः ।

(स्वयंव्यक्तादिजीर्णे बिम्बे कृत्यम्)

एवमेव स्वयंव्यक्ते कारयेत्तन्त्रवित्तमः ॥ ३०२ ॥

मृद्दारुजे तु जीर्णे तु कृमिवह्निजलादिभिः ।
देवादिपूजिते वापि स्वयंव्यक्तेऽपि वा द्विज ॥ ३०३ ॥

तत्तद्बालगृहं कृत्वा पूज्यमाने तु पूर्ववत् ।
अर्चान्तरं क्रमात्कृत्वा स्थापयेच्च यथाविधि ॥ ३०४ ॥

---

२९९. d : A. हीनाङ्गेऽपि तथापि वा.
३००. b : S. My. A. M. सन्धेयस्तत्सदा द्विज.
c : A. My. S. जीर्णविभिन्नेऽपि for वर्णैर्विहीनेऽपि.
d : S. M. A. M. सदा द्विज for द्विजोत्तम.
३०१. a : S. My. यत्तत् for यद्यत्.
३०२. a : A. M. S. नीत्वादौ for नित्यादौ, V. तु for ऽत्र.
b : S. My. A. M. कार्यमतिन्द्रितै for कुर्यादतन्द्रितः.
d : S. M. मन्त्र for तन्त्र.
३०३. a : S. M. च for तु.
b : My. क्रमात् for कृमि.
३०४. a : V. गत्वा for कृत्वा.
c : S. M. om. क्रमात्कृत्वा.
d ; S. M. om. स्थापयेच्च.

कुयादाद्यप्रभृत्येवमस्मिन् जीर्णे पुनः पुनः ।

(मनुष्यनिर्मिते जीर्णतादिदोषयुक्ते बिम्बे कृत्यम्)

मनुष्यनिर्मिते जीर्णे दुष्टैः दोषैस्तु वा क्वचित् ॥ ३०५॥

वर्णशोभाविहीने च बिम्बे शैलमये द्विज ।

विशेषान्मृण्मये वापि चित्राभासेऽपि वा मुने ॥ ३०६ ॥

बालगेहे समाहूय चित्रयित्वा तु पूर्ववत् ।

ततः प्रतिष्ठां कुर्वीत विधिवत्तन्त्रवित्तमः ॥ ३०७ ॥

(उत्कृष्टद्रव्यकर्मबिम्बे प्राप्ते निकृष्टद्रव्यबिम्बत्यागः)

ताम्रजे कर्मबिम्बे तु पूज्यमाने प्रतिष्ठिते ।

उत्कृष्टे लोहजे प्राप्ते निकृष्टं संत्यजेद्बुधः ॥ ३०८ ॥

(मूलबिम्बस्य पुनः कल्पनादिक्रमे उपादानद्रव्यपरिवर्तननिषेधः)

काष्ठलोहशिलामृज्जे मूलबिम्बे प्रतिष्ठिते ।

न कर्तव्यं ततोऽन्येन वस्तुना तद्द्विजोत्तम ॥ ३०९ ॥

जीर्णेऽपि पूर्ववत्कुर्यात् पुनश्चैव यथाविधि ।

(पुरा प्रमादात्प्रमाणहीने बिम्बादौ स्थापिते कृत्यम्)

यदि प्रमाणरहितं प्रमादात्स्थापितं पुरा ॥ ३१० ॥

---

३०५. d : A. V. M. दुष्टे for दुष्टैः, V. द्विज for क्वचित्.

३०६. a : S. M. A. M. तु for च.
c : A. तु for ०पि.
d : My. A. M. तुवै for ०पि० वा.

३०७. a : S. M. om. बालगेहे समा०.
d : S. यन्त्र for तन्त्र.

३०८. b : S. My. A. M. पूज्यमानैः for पूज्यमाने.
d : My. A. पुनः for बुधः.

३०९. a : S. पृष्ठे My. A. M. सृष्टे for मृज्जे.
b : S. M. om. मूलबिम्बे प्रति०.

३१०. a : S. तु My. वा for ०पि.
b : A. तथा for यथा.

बिम्बं विमानं प्राकारं मण्डपं गोपुरं तथा ।
पश्चाज्जीर्णे तु कुर्वीत लक्षणाढ्यं सुशोभनम् ॥ ३११ ॥

वैपरीत्यान्न दोषोऽत्र भवेल्लक्षणनिर्मिते ।

(एकबेरबहुबेरजीर्णोद्धारविषये नियमः)

पूर्वं यद्येकबेरं तु जीर्णेऽपि स्थापितं भवेत् ॥ ३१२ ॥

यद्येवं बहुबेरं तु नान्यथा कारयेत्सुधीः ।
बहुबेरे तु देवीभ्यां रहिते स्थापिते पुरा ॥ ३१३ ॥

पश्चाज्जीर्णे तु देवीभ्यां सहितं वापि कारयेत् ।
वैपरीत्यान्न हानिः स्यात् अत्रापि द्विजसत्तम ॥ ३१४ ॥

(देवादिनिर्मिते जीर्णादिबिम्बादौ उद्धारक्रमः)

देवयक्षमुनीन्द्राद्यैर्निर्मिते लक्षणान्विते ।
बिम्बे विमाने प्राकारे गोपुरे मण्डपे तु वा ॥ ३१५ ॥

जीर्णे पुनस्तथा कुर्यान्न कुर्याल्लक्षणान्वितम् ।
नष्टे मलिम्लुचाद्यैस्तु त्रिदशादिप्रतिष्ठिते ॥ ३१६ ॥

बिम्बादौ वैष्णवे चिह्ने लक्षणैश्चापि वर्जिते ।
युक्ते वा पूर्ववत् कुर्यात् पूर्वरूपानुसारतः ॥ ३१७ ॥

---

३११. b : S. My. A. M. गोपुरं मण्डपादिकम्.
३१२. a : My. A. हानिः स्यात् for दोषोऽत्र.
b : My. A. अत्रापि द्विजसत्तम.
d : S. My. A. M. तथा for भवेत्.
३१५. b : S. M. उज्झिते My. उचिते for अन्विते.
३१६. d : S. My. A. M. त्रिदशाद्यैः for त्रिदशादि.
३१७. b : S. A. M. ०श्च वि० for ०श्चापि.
c : S. My. A. M. सर्वलक्षणयुक्ते वा.

न लक्षणान्तरं तत्र कार्यं तन्त्रविचक्षणैः ।

(चोरादिभिः नष्टे मानुषबिम्बे जीर्णोद्धारक्रमः)

चोरनद्यग्निवेगाद्यैरतिनष्टे तु मानुषे ॥ ३१८ ॥

बिम्बे तु पश्चात्कुर्वीत पूर्ववच्चान्यथापि वा ।
न शून्यमूलबिम्बात्तु बालार्चावाहनादिकम् ॥ ३१९ ॥

विशेषात् कारयेदत्र पञ्चरात्रपरायणः ।
पुनः प्रतिष्ठामत्रैव कुर्यादादौ यथा तथा ॥ ३२० ॥

एवं वै सर्वदेवानां बिम्बे तु विहितं क्रमात् ।
परिवारादिबिम्बानामेवमेवात्र कारयेत् ॥ ३२१ ॥

(प्रासादादिविस्तारक्रमः)

प्रासादं मण्डपं पीठं संवृतिं गोपुरं तु वा ।
सालं वा प्राङ्गणं वापि पाकस्थानादिकं तु वा ॥ ३२२ ॥

रक्षार्थं विनियोगार्थं बहिर्वृद्ध्या तु कारयेत् ।
आरभ्याभ्यन्तरादेव नान्तर्वासं तु कुत्रचित् ॥ ३२३ ॥

---

३१८. b : S. My. A. M. तत्र for तन्त्र.
d : A. ०षु for तु.

३१९. b : My. A. ०द्वा० for च्चा०, A. यथा रुचि for ०न्यथापि वा.
c : S. A. V. बिम्बत्वात् for बिम्बात्तु.

३२०. a : My. तत्र for अत्र.
b : S. My. A. M. विसारदः for परायणः.
c : S. My. A. मात्रैव for ०मत्रैव.

३२१. d : My. ०व तु for ०वात्र.

३२३. b : S. A. M. वृत्या for वृद्ध्या.
c : S. My. A. M. आरभ्यान्तरदेवानां.
d : S. My. A. M. मन्त्रावासं for नान्तर्वासं.

पौराणिकं समं निम्नं पीठं देवालयं तु वा ।
चिह्नं वा वैष्णवं चान्यत् सम्भवेद्यदि कुत्रचित् ॥ ३२४ ॥

सालादिदेवस्वीकारे लङ्घयित्वा तु तद्बहिः ।
सालाद्यं कारयेदत्र बहिर्वृद्ध्या तु देशिकः ॥ ३२५ ॥

बहिर्वृद्धिस्तथान्तश्चेत् बहिश्चेदन्तरेव तु ।
न दोषस्तत्र विप्रेन्द्र व्यासायामोच्छ्रयादिषु ॥ ३२६ ॥

न चालयेत्प्रयत्नेन सदा पौराणिकादिकम् ।
न पूरयेत्सरो दिव्यं कूपं वाथ मृदादिभिः ॥ ३२७ ॥

(अल्पविमानविस्तारक्रमः)

अल्पियांसि विमानानि भक्त्या द्रव्येण श्रद्धया ।
महान्ति कारयेत् पश्चात् न दोषोऽत्रार्चया विना ॥ ३२८ ॥

सालमण्डपपीठानां द्वारादीनां तथैव च ।
एकस्मिन् ग्रथनं कुर्यात् देशिकः स्थानसंकटे ॥ ३२९ ॥

न हानिरुक्ता विप्रेन्द्र विद्यते शास्त्रकोविदैः ।

(इष्टकाद्यपगते बिम्बादौ प्रतिष्ठापिते प्रायश्चित्तम्)

इष्टकादिविहीने तु बिम्बे वाऽयतनेऽपि वा ॥ ३३० ॥

प्रतिष्ठिते तु सम्मोहात् स्नपनत्रयमाचरेत् ।
उत्तमेनैव मार्गेण शान्तिहोमं च कारयेत् ॥ ३३१ ॥

---

३२४. a : A. My. S. सरित्तीर्थं for समं निम्नं.
३२६. a : S. A. M. न्तं चेत्. My. त्तच्चेत् for ॰न्तश्चेत्.
d : My. तस्य for व्यास.
३२७. d : V. कूपं वाप्यादिभिः सुधीः.
३२९. d : S. My. A. M. अशक्तौ for देशिकः.
३३०. a : S. My. A. M. अत्र for उक्ता.
३३१. a : S. My. A. M. ॰त्र for तु.
b : A. त्वधमा॰ M. स्वयमा॰ for ॰त्रयमा॰.
d : S. My. A. M. समाचरेत् for कारयेत्.

(तन्त्रसङ्करे दोषाः तन्त्रसाङ्कर्यनिषेधश्च)

यद्बिम्बं येन तन्त्रेण समारब्धं पुरादितः ।
प्रासादं वा ततस्तेन तन्त्रेणैव तदर्चयेत् ॥ ३३२ ॥

यो यजेदन्यमार्गेण स नाशं कर्तुमिच्छति ।
राज्ञो राष्ट्रस्य सर्वस्य नाशकर्ताऽत्मनोऽपि च ॥ ३३३ ॥

कुलक्षयश्च व्याधिश्च विप्लवं दुःखमञ्जसा ।
तन्त्रसङ्करदोषस्तु विशेषाद्राजराष्ट्रयोः ॥ ३३४ ॥

दोषायैव भवेद्विप्र सर्वदा कुत्रचित् कृतः ।
तस्मान्न सङ्करः कार्यः तन्त्राणां हितमिच्छता ॥ ३३५ ॥

(तन्त्रनामकीर्तनं तन्त्रसाङ्कर्ये प्रायश्चित्तञ्च)

गौतमः—

तन्त्राणि कानि देवर्षे तान्याचक्ष्वाद्य पृच्छतः ।
तन्त्रान्तरैस्तु देवेशे प्रायश्चित्तं तु पूजिते ॥ ३३६ ॥

नारदः—

वैखानसं च शैवं च तन्त्रं पाशुपतं तथा ।
पञ्चरात्रं महातन्त्रं तन्त्राण्येतानि सुव्रत ॥ ३३७ ॥

पूजायां वर्तमानायां पञ्चरात्रोदिताध्वना ।
वैखानसाध्वना पश्चात् पूजितेऽस्मिन् प्रमादतः ॥ ३३८ ॥

प्रतिष्ठोक्तेन विधिना संस्थाप्य मुनिपुङ्गव ।
अधिवास्य यथान्यायं तस्माद्दोषात् प्रमुच्यते ॥ ३३९ ॥

---

३३२. d : S. My. A. M. मन्त्रेण for तन्त्रेण.
३३३. d : A. वा for च.
३३५. c : A. तस्मादसंकरः for तस्मान्न संकरः.
३३६. a : My. देवार्थे for देवर्षे.
३३९. b : A. M. S. संस्नाप्य for संस्थाप्य.
d : S. दोषत्व for दोषात्प्र०.

शैवेन पूजिते पश्चात् तथा पाशुपतेन वा ।
विध्यन्तरेण वा विप्र पञ्चरात्रेतरेण वा ॥ ३४० ॥

पुनः प्रतिष्ठां कृत्वा तु कुर्यात्स्नपनमुत्तमम् ।
एवं कृते तु शान्तिः स्यात् अन्यथा दोषभाग्भवेत् ॥ ३४१ ॥

यत्पाञ्चरात्रविधिना स्थाप्य संपूजितं पुरा ।
तेनैव पूजनीयं तच्छश्वत् पश्चाद्धितार्थिभिः ॥ ३४२ ॥

(पञ्चरात्रविधिना नित्यनैमित्तिकार्चनेऽर्चकसंख्यादिविवेकः)

पूज्यो भागवतैरेव प्रासादस्थापितो हरिः ।
पञ्चरात्रोक्तमार्गेण राजराष्ट्रविवृद्धये ॥ ३४३ ॥

चतुर्भिरष्टभिर्वाऽपि तथा द्वादशभिस्तु वा ।
एकः सम्पूजयेदन्तर्देवमावाह्य कौतुके ॥ ३४४ ॥

परिवारान् यजेदेको विमानाद्बाह्यतः स्थितान् ।
हविरादीनि संस्कुर्यात् प्रवीणोऽन्यो महानसे ॥ ३४५ ॥

अन्योऽग्निकार्यं कुर्वीत दद्यादन्यो बलिं क्रमात् ।
एतेषामुपकुर्वीरन् अन्ये भागवतोत्तमाः ॥ ३४६ ॥

गुर्वादिष्टेन विधिना कुर्यात्सर्वत्र साधकः ।
प्रासादे स्थापिते देवे नैको यष्टुं समारभेत् ॥ ३४७ ॥

होमबल्यादिसंयुक्तं वित्ताढये तु विशेषतः ।
सर्वमेकेन वा कार्यं बहूनां संयतात्मनाम् ॥ ३४८ ॥

---

३४२. b : V. संपूजनं for सम्पूजितं.
३४४. c : My. A. एतत् for अन्तर्.
d : My. A. एवम् for देवम्.
३४५. d : S. महामुने for महानसे.
३४६. b : S. A. M. कुर्यात् for दद्यात्.
३४७. d : S. आचरेत् for आरभेत्.
३४८. c : M. वै for वा.

प्रवीणानामभिज्ञानां दीक्षितानामसन्निधौ ।
वैशेषिकेषु प्राप्तेषु बहुष्वायतनार्चने ॥ ३४९ ॥

आवाह्यावाह्य बिम्बेषु मूलादेव यथाविधि ।
उत्सवं स्नपनं यात्रां प्रभूतान्ननिवेदनम् ॥ ३५० ॥

तत्तद्बिम्बेषु कुर्वीरन् मन्त्रिणो बहवो यदि ।
नैमित्तिकेऽप्येवमेव भोजनं वह्नितर्पणम् ॥ ३५१ ॥

बलियागं च कुर्वीरन् एकदैव तु मन्त्रिणः ।
न दोषोऽत्र तु विज्ञेयः कालकर्मनिमित्ततः ॥ ३५२ ॥

(यजनादनन्तरं गेहे बलिदाने सति प्रायश्चित्तम्)

न गृहे बलिभिः कार्यं नित्यनैमित्तिकादिकम् ।
एकदैवं तु यजनमन्यथा दोषदं भवेत् ॥ ३५३ ॥

तद्दोषशान्तये कुर्यात् शान्तिहोमसमन्वितम् ।
यथाशक्ति जपं मन्त्री 'मूल'मन्त्रस्य सुव्रत ॥ ३५४ ॥

(अननुमतेनार्चिते देवे प्रायश्चित्तम्)

एवं प्रतिष्ठितेष्वेतैः प्रासादे च सुपूजिते ।
भक्तैर्भागवतैर्देवः शुभमेव प्रयच्छति ॥ ३५५ ॥

राज्ञो राष्ट्रस्य सर्वेषां पूजकानाञ्च नित्यशः ।
अन्यैः सम्पूजितो देवो न प्रसीदति कस्यचित् ॥ ३५६ ॥

---

३५१. c : V. नैत्यकेप्येवमेवं हि.
d : S. My. A. M. पूजायां for भोजनम्.
३५२. a : V. बलिदानं for बलियागं, S. My. A. M. तु for च.
d : My. निमित्तकः V. निमित्तजः for निमित्ततः.
३५३. a : S. My. ग्रहे for गृहे, A. बहुभिः कुर्यात् for बलिभिः कार्यं.
c : My. एकं for एवं.
३५४. c : S. V. जपेत् for जपम्, S. मन्त्रं for मन्त्री.
३५५. b : V. ०जितैः for ०जिते.

प्रयच्छत्यशुभं शश्वत् विशेषाद्राजराष्ट्रयोः ।
तद्दोषशान्तये विष्णोः कार्यं स्नपनमुत्तमम् ॥ ३५७ ॥

(एकबेरेऽर्चनप्रकारः)

एकबेरे तु कर्तव्यमेकदेवार्चनं सदा ।

(बिम्बावाहनक्रमः वैपरीत्ये प्रायश्चित्तम्)

एकदा बहुबिम्बेषु आवाह्यानैव पूजयेत् ॥ ३५८ ॥

मूलबिम्बात् परं देवमितरत्र महोत्सवात् ।
यथा न नाशो वह्नेः स्याज्जातेष्वन्येषु वह्निषु ॥ ३५९ ॥

सर्वत्रावाहनं चैव मूलादर्चासु सुव्रत ।
नावाह्यो मूलबिम्बे तु प्रतिष्ठाकालतो विना ॥ ३६० ॥

आवाहितेऽस्मिन् देवेशे कोपं याति हरिस्सदा ।
शान्तयेऽस्याधमं कुर्यात् स्नपनं मन्त्रवित्तमः ॥ ३६१ ॥

(सर्वप्रायश्चित्तविषयकसामान्यकृत्यम्)

प्रायश्चित्तेषु सर्वेषु विहितेषु पृथक् पृथक् ।
पुण्याहवाचनं होमं दानमाचार्यदक्षिणाम् ॥ ३६२ ॥

पूजनं देवदेवस्य जपं ब्राह्मणभोजनम् ।
कारयेच्च यथाशक्ति मन्त्री दोषानुरूपतः ॥ ३६३ ॥

---

३५८. a : S. My. A. M. ०बेरं for बेरे.
b : V. बेरार्चन for देवार्चन.

३६०. a : S. M. रात्रावा० for सर्वत्रा०, S. My. M. A. देवा० for चैव.

३६१. a : S. M. आवाहितो हि देवेशः
b : S. My. A. यदा M. तथा for सदा.

३६३. c : A. My. दापयेच्च for कारयेच्च.

(पुण्याहवाचनप्रकारनिरूपणम्)

पुण्याहमिति यत्प्रोक्तं तदिदानीं ब्रवीम्यहम् ।
पवित्रं भगवानस्तु वासुदेवः परो गुरुः ॥ ३६४ ॥

अस्तु सङ्कर्षणो देवः पवित्रं परमो विभुः ।
प्रद्युम्नोऽस्तु पवित्रं वै साक्षी विश्वस्य साम्प्रतम् ॥ ३६५ ॥

पवित्रमनिरुद्धोस्तु विश्वत्राता जगत्पतिः ।
शुद्धयेऽस्तु परो देवो वासुदेवोऽस्तु शुद्धये ॥ ३६६ ॥

सदा सङ्कर्षणो देवश्शुद्धयेऽस्तु सदामलः ॥
प्रद्युम्नः शुद्धये चास्तु सर्वत्र मम सर्वदा ॥ ३६७ ॥

शुद्धये त्वनिरुद्धोऽपि शुद्धयेऽस्तु जगत्पतिः ।
शुद्धये विष्णुरस्त्वाद्यः शुद्धये मधुसूदनः ॥ ३६८ ॥

सर्वलोकहितो देवः शुद्धयेऽस्तु त्रिविक्रमः ।
वामनः शुद्धयेऽस्त्वाद्यः श्रीधरोऽस्त्वद्य शुद्धये ॥ ३६९ ॥

शुद्धयेऽस्तु हृषीकेशः पद्मनाभोऽस्तु शुद्धये ।
सदा दामोदरो देवः शुद्धयेऽस्तु जगत्पतिः ॥ ३७० ॥

शुद्धयेऽस्तु सदा देवः केशवः केशिसूदनः ।
नारायणोऽस्तु विश्वेशः शुद्धये सर्वकर्मसु ॥ ३७१ ॥

शुद्धये माधवोऽस्त्वत्र सर्वलोकहिते रतः ।
शुद्धये चास्तु गोविन्दः परमात्मा सनातनः ॥ ३७२ ॥

---

३६४. b : S. M. om.; My. A. ब्रवीमि ते for ब्रवीम्यहम्.
३६६. d : S. A. M. वासुदेवः सदा मम.
३६८. a : S. M. अनिरुद्धः सदा देवो.
३७१. c : A. देवेशः for विश्वेशः.
३७२. b : S. My. A. M. सर्वलोकेश्वरो हरिः.
c : S. My. A. M. वास्तु for चास्तु.

मीनात्मा शुद्धयेऽस्त्वद्य कूर्मात्माद्यास्तु शुद्धये ।
शुद्धयेऽस्तु वराहात्मा नृसिंहात्माऽस्तु शुद्धये ॥ ३७३ ॥

शुद्धये वामनात्मास्तु रामाद्यात्मास्तु शुद्धये ।
तथा दाशरथी रामः शुद्धयेऽस्तु सदा गुरुः ॥ ३७४ ॥

वसुदेवात्मजो रामः शुद्धयेऽस्तु सदामलः ।
कृष्णोऽस्तु शुद्धये शौरिः बुद्धात्मास्तु विशुद्धये ॥ ३७५ ॥

शुद्धयेऽस्तु महामायः कल्की विष्णुः सनातनः ।
देव्यश्शान्त्यादयः सन्तु शुद्धये विष्णुवल्लभाः ॥ ३७६ ॥

द्वारपाः सन्तु चण्डाद्याः प्रभवान्ताश्च शुद्धये ।
शुद्धयेऽस्तु गणाध्यक्षो दुर्गास्त्वद्य विशुद्धये ॥ ३७७ ॥

शुद्धये वैनतेयोऽस्तु पक्षिराजोरगाशनः ।
इन्द्राद्याः शङ्करान्ताश्च शुद्धये सन्तु लोकपाः ॥ ३७८ ॥

विष्वक्सेनोऽस्तु भूतेशश्शुद्धयेऽस्तु महातपाः ।
कुमुदाद्यास्तु भूतेशाः शुद्धये सन्तु सर्वदा ॥ ३७९ ॥

शुद्धये सन्तु सर्वेषां सर्वे सर्वत्र सर्वदा ।
एते सर्वे सदा देवाश्शान्तये सन्तु पूजिताः ॥ ३८० ॥

---

३७३. d : S. ०द्यास्तु शुद्धये My. तु शुद्धये for ०ऽस्तु शुद्धये.
३७४. a : My. तु for स्तु.
b : A. रामात्माद्यात्मास्तु for रामाद्यात्मास्तु.
d : S. My. M. शुभः for गुरुः.
३७५. d : My. बुद्धोऽद्यास्तु for बुद्धात्मास्तु.
३७६. a : S. A. M. मायी for मायः.
३७७. b : S. A. ०स्तु for ०श्च.
३७८. b : My. A. महाशनः for ०रगाशनः.
c : V. तु for च.

शुद्धये पुष्टये सन्तु सिद्धये मुक्तयेऽपि च ।
शिवाय मुक्तये सन्तु सिद्धये कर्मणामपि ॥ ३८१ ॥

मन्त्राणां देशिकादीनां स्थानानामपि सर्वदा ।
पुत्रमित्रकलत्राणां दासादीनां गवामपि ॥ ३८२ ॥

वेदशास्त्रागमादीनां व्रतानामिष्टसम्पदाम् ।
मनोरथानां सर्वेषां हितानां सन्तु सर्वदा ॥ ३८३ ॥

आयुष्यारोग्यमेधानां धनधान्यादिसम्पदाम् ।
पुण्यानामणिमादीनां गुणानां श्रेयसामपि ॥ ३८४ ॥

राज्ञो जनपदस्यापि यजमानस्य मन्त्रिणाम् ।
वैष्णवानां विशेषेण परत्र हितमिच्छताम् ॥ ३८५ ॥

पञ्चकालविधिज्ञानां सत्त्वस्थानां शुभार्थिनाम् ।
स्वस्तिरस्तु शिवं चास्तु शान्तिरस्तु पुनः पुनः ॥ ३८६ ॥

अविघ्नमनिशं चास्तु दीर्घमायुष्यमस्तु वै ।
समाहितमना चास्तु सम्पदश्चोत्तरोत्तरम् ॥ ३८७ ॥

वैष्णवाः भगवद्भक्ताः हृत्समाहितचेतसः ।
एकान्तिनो महात्मानः सर्वे भागवतोत्तमाः ॥ ३८८ ॥

---

३८१. a : My. ऋद्धये for शुद्धये, S. M. सिद्धये for पुष्टये.
b : S. M. पुष्टये for सिद्धये.
३८२. a : S. पात्राणां for मन्त्राणाम्.
३८३. b : V. धनधान्यादिगवामपि.
c : V. आदीनां for सर्वेषाम्.
३८५. c : A. विशिष्यापि for विशेषेण.
३८६. a : My. विशुद्धानां for विधिज्ञानाम्.
b : My. A. स्तत्त्वः for सत्त्व०.
c : S. शुभं for शिवं.
३८७. c : S. My. A. M. ०मनश्चास्तु for मना चास्तु.
३८८. b : S. M. om.

पुण्याहं भवन्तो ब्रुवन्तु पुण्याहं हरिसत्तमाः ।
ओं पुण्याहमिति ब्रूयुरितरे च पुनस्त्रिधा ॥ ३८९ ॥

ओं भूस्स्वस्ति भुवस्स्वस्ति ओं स्वस्स्वस्ति महो(स्वस्ति?)।
जनः स्वस्ति तपः स्वस्ति स्वस्ति सत्यं तपोमिति ॥ ३९० ॥

एतत् पुण्याहमुद्दिष्टम् वैष्णवानां विशेषतः ।

(पुण्याहमन्त्रितजलप्रोक्षणफलम्)

अनेन मन्त्रितजलप्रोक्षणाच्छुद्धिरुच्यते ॥ ३९१ ॥

सर्वेषामपि दोषाणामल्पानां महतामपि ।
सालाप्रासादबिम्बानामोकसां मन्त्रिणा कृतम् ॥ ३९२ ॥

(अनवसरे आलयाद्बहिर्नीते बिम्बे प्रायश्चित्तम्)

गच्छेन्न बिम्बमादाय तृतीयावरणाद्बहिः ।
आलये स्थापितं मोहादन्यत्रैव महोत्सवात् ॥ ३९३ ॥

त्रिसन्ध्यं बलिदानं तु तृतीयावरणाद्बहिः ।
सर्वावासं महापीठं कारयेच्च प्रदक्षिणम् ॥ ३९४ ॥

बहिर्गतेऽन्यदा देवे त्वधमं स्नपनं चरेत् ।

(प्रतिमन्त्रमृष्यादिस्मरणे प्रायश्चित्तम्)

ऋषिं च दैवतं छन्दः प्रतिमन्त्रं न संस्मरेत् ॥ ३९५ ॥

---

३८९. d : S. त्रयः for त्रिधा.

३९०. a ; b ; c ; d : अत्रत्यः स्वस्तिवाचनप्रकारः तत्र तत्र मातृकासु यथा दृश्यते क्रमशः तथात्र लिख्यते :—S. M. ओं भूः स्वस्ति च भुवः स्वस्ति स्वस्ति च वै महत् । ............... तथोमिति । My. A. भुव्रः स्वस्ति सुवः स्वस्ति च वै महत् जनः स्वस्ति तपः स्वस्ति सत्यं स्वस्ति तथोमिति.

३९३. c : S. M. होमात् for मोहात्.
d : V. महोत्सवं for महोत्सवात्.

३९४. c : My. सर्वापत्सु for सर्वावासं.

३९५. b : My. A. भवेत् for चरेत्.
c : A. देवतां for दैवतं.

निष्फलस्तु भवेन्मन्त्रः प्रतिमन्त्रं स्मरेद्यदि ।
तद्दोषशान्तये पश्चात् जपेन्मन्त्रशतं सुधीः ॥ ३९६ ॥

(पाञ्चरात्रमन्त्राणां सामान्यतः वासुदेवदैवतादिकत्वम्)

पञ्चरात्रोदितानां च मन्त्राणां मुनिपुङ्गव ।
देवता वासुदेवस्तु सर्वेषामृषिरेव च ॥ ३९७ ॥
स एव देवाः सर्वे तु नात्र कार्या विचारणा ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
प्रायश्चित्तविधिर्नाम पञ्चविंशोऽध्यायः

---

३९७. a : A. M. उत्थितानां for उदितानां.
b : S. सत्तम for पुङ्गव.
d : S. V. च for स.
३९८. a : S. My. A. V. स for तु.

# षड्विंशोऽध्यायः

## [महाहविर्विधाननिरूपणाध्यायः]

(महाहविर्विधानविषयकः प्रश्नः)

**गौतमः—**

ब्रह्मसूनो सुरमुने सम्यगाचक्ष्व साम्प्रतम् ।
महाहविर्विधानं तु पञ्चरात्रार्थकोविद ॥ १ ॥

(महाहविर्निवेदनार्थं मण्डपादिकल्पनम्)

**नारदः—**

शृणुष्व द्विजशार्दूल महाहविर्विधिं परम् ।
यथाभिमतदेशे तु यथाभिमतमण्डपे ॥ २ ॥

बहिःसालान्तरेकत्र प्रपायां वा सुशोभने ।
आसनं तु सुविस्तीर्णं चतुरश्रायतं शुभम् ॥ ३ ॥

महदास्तरणोपेतं स्थापयित्वा तु मण्डपे ।
तस्यासनस्य पुरतः चतुरश्रायतान् शुभान् ॥ ४ ॥

अक्षतान् विकिरेत्तत्र नववासोभिरावृतान् ।
छादयेत् कदलीपत्रैरन्यैर्वा याज्ञिकोद्भवैः ॥ ५ ॥

(हविर्पीठे भगवतः स्नपनादिप्रकारः)

क्षालयित्वाभिघार्याथ अन्नं संस्कृत्य वेदवित् ।
लोहजेन द्विजश्रेष्ठ चतुरश्रायतेन तु ॥ ६ ॥

---

१. a : S. प्रवक्ष्यामि for सुरमुने.
२. b : S. My. M. V. ०विधम् for विधिम्.
३. a : S. My. M. बहिः सालान्तरे कुत्र.
   b : A. प्रभायां for प्रपायां, V. तु for वा.

यथाभिमतमानेन वित्तस्यैवानुरूपतः ।
मूलबिम्बात् समावाह्य पूजितां समलङ्कृताम् ॥ ७ ॥

उत्सवार्चां तु वान्यां वा स्नपनं तत्र कारयेत् ।
शुद्धस्नानं तु वा तत्र अलङ्कारैरलङ्कृताम् ॥ ८ ॥

अलङ्कारासने स्थाप्य पाद्यार्घ्याचमनैरपि ।
गन्धादिभिः समभ्यर्च्य विज्ञाप्य मधुसूदनम् ॥ ९ ॥

तस्मात्तु स्थापयेन्मन्त्री पश्चाद्भोज्यासनोपरि ।
प्रत्यङ्मुखस्ततो दद्यात् पाद्यमाचमनं क्रमात् ॥ १० ॥

मधुपर्कं ततो दद्यात् यथाविधि विचक्षणः ।
ततस्ताम्बूलदानान्ते दद्यादाचमनं क्रमात् ॥ ११ ॥

ततः प्रागासनं न्यस्य बिम्बं तत्रैव चासने ।
न्यस्त्वा पानीयचषकं देवस्यैव तु दक्षिणे ॥ १२ ॥

न्यसेदर्घ्यादिकं तत्र कर्करीमीशगोचरे ।

(हविरादिस्थापनक्रमः)

यथाभिमतदेशे तु स्थापयित्वौदनादिकम् ॥ १३ ॥

समन्त्रं संस्कृतं शुद्धं दीक्षितैर्मन्त्रवित्तमैः ।
'मूल'मन्त्रेण संप्रोक्ष्य हविर्व्यञ्जनसंयुतम् ॥ १४ ॥

---

७. c : S. My. A. M. समादाय for समावाह्य.
८. a : My. A. उत्सवार्यां for उत्सवार्चां.
१०. a : S. My. स्नापयेत् for स्थापयेत्.
b : A. V. भोगा for भोज्या०.
c : A. प्रत्यङ्मुखस्तु ते दद्यात्, S. My. प्रत्यङ्मुखस्तदा दद्यात्.
११. c : S. M. ०मादाय for दानान्ते.
१२. a : A. प्रागाननम् for प्रागासनं, V. M. न्यस्त्वा for न्यस्य.
१३. b : S. My. पार्श्व for ईश.

अभिघार्य घृतेनैव 'विश्व'मन्त्रेण मन्त्रवित्।
देवाग्रे प्रक्षिपेद्वेद्यां छन्नायां तु दलैः शुभैः ॥ १५ ॥

पात्रे च पृथुले वापि 'प्रणवे'न तु मन्त्रवित्।
अविभज्यैव तत् सर्वं साधकः प्रत्यगाननः ॥ १६ ॥

व्यञ्जनैस्तदलङ्कृत्य यथाशोभं प्रयत्नतः।
अपूपगुडदध्याद्यैः घृतपक्वैः फलैर्युतम् ॥ १७ ॥

हृतकाजतिजीरादिपिष्टद्रव्यैः समन्वितम्।
रसखण्डसमायुक्तं पक्वैर्वा मुद्गतण्डुलैः ॥ १८ ॥

शुभैरोदनपात्रैस्तु भूषयेत्तत्समन्ततः।
पूर्ववत् प्रोक्षयित्वा तत् परिक्षि'प्यास्त्र'विद्यया ॥ १९ ॥

प्रदद्यादर्हणं पश्चात् कर्करीस्थेन वारिणा।

(हविर्मुद्राप्रदर्शनम्)

'प्रणवे'न परामृश्य हस्तौ न्यस्त्वा समन्त्रकम् ॥ २० ॥

---

१५. a : M. अमृतेनैव for घृतेनैव.
b : S. विन्यसेत् My. A. तत्त्ववित् for मन्त्रवित्.

१६. b : My. A. प्रज्ञवेण for प्रणवेन.
c : S. My. M. संविभज्य हविः सर्वं, A. हविर्विभज्य हविः सर्वम्.
d : V. आत्मनः for आननः.

१७. a : V. सूपाद्यागुलदध्याद्यैः.
d : A. S. घृतकैश्च. forघृतपक्वैः

१८. a : S. M. श्रत...जीरकादि, A. हृतकं जीरकादि.

१९. d : A. My. S. परिसिच्य for परिक्षिप्य.

२०. a : My. अस्तणं for अर्हणं.
d : A. च मन्त्रपम् for समन्त्रकम्.

तद्धविर्मुद्रया दद्यात् पञ्चकृत्वस्तु पञ्चभिः ।
मन्त्रैरुदङ्मुखो मन्त्री समासीनः प्रयत्नवान् ॥ २१ ॥

(हविर्निवेदनावसरे नृत्तादिविधानम्)

तदा नृत्तं च वाद्यं च कारयेत् गेयमङ्गलम् ।

(हविर्विधानस्य महाजनादिदर्शनेऽप्यदोषत्वम्)

महाजनेक्षणादत्र न दोषो विद्यते द्विज ॥ २२ ॥
तथा काकादिभिः सत्त्वैर्निकृष्टैर्वन्यजन्तुभिः ।

(पानीयादिनिवेदनक्रमः)

दत्वा मन्त्रैस्तु पानीयं दद्यादिक्षुरसं ततः ॥ २३ ॥
पश्चिमाभिमुखं स्थित्वा दद्यादाचमनं ततः ।

(श्रीदेव्यादीनां हविषा अर्चनम्)

ततोऽन्य आसने न्यस्त्वा यथाभिमतदिङ्मुखम् ॥ २४ ॥
श्रियं भूमिं च हविषा पूजयेदन्तरास्थिताम् ।

(निवेदितहविषः सेनेशाय दाननिषेधः)

सेनेशाय न दातव्यम् अस्मिन् यद्धिनिवेदितम् ॥ २५ ॥

---

२१. b : A. कृत्वा for कृत्वः.
c : S. A. My. स्वमन्त्रैरुन्मुखो मन्त्री.
d : A. प्रयत्नतः for प्रयत्नवान्.
२२. c : My. तत्र for अत्र.
२३. d : निष्पुंसनं for इक्षुरसं.
२४. b : M. तु तत् for ततः.
c : M. स्थित्वा for न्यस्त्वा.
d : S. My. M. मुख for मत, S. My. M. मुखः for मुखम्
२५. a : My. A. शिवं for श्रियं.
d : S. My. A. M. यस्मिन् for अस्मिन्.

व्याधिना कलहेनैव सदा बाधां प्रयच्छति ।
विष्वक्सेनः सदा चात्र निवेदितनिवेदनात् ॥ २६ ॥

(महाहविर्विधाने होमबलिविधाननिषेधः)

न होममाचरेदत्र हितमिच्छंस्तु साधकः ।
न बलिं प्रक्षिपेदत्र क्षिप्ते त्वनभिवर्धनम् ॥ २७ ॥

तस्मात् सर्वप्रयत्नेन विष्वक्सेननिवेदनम् ।
होमं च बलिदानं च महाहविषि नाचरेत् ॥ २८ ॥

(निवेदितौदनादिविनियोगः)

तदाचार्याय दत्त्वादौ तस्मादुद्धृत्य वार्चितम् ।
सद्दीक्षितद्विजेन्द्राय निवेदितमहौदनम् ॥ २९ ॥

वैष्णवेभ्यस्ततो दद्यात् विप्रादिभ्यो विशेषतः ।
गुरुरेव समादद्यात् अत्र वासांसि तण्डुलान् ॥ 30 ॥

(पुनः आचमनदानं मालादिभिः अलङ्करणञ्च)

ततस्त्वाचमनं दद्यात् करकस्थेन विष्णवे ।
अपनीय पुरादत्तं पुष्पमालादिकं पुनः ॥ 31 ॥

अन्यैश्च भूषयेन्मन्त्री पुष्पमालादिभिः प्रभुम् ।
मुखवासं प्रभूतं तु दद्यात् 'सर्वेण' मन्त्रवित् ॥ ३२ ॥

---

२६. c : S. My. A. M. चित्र for चात्र.
d : S. My. A. M. ०मिवोदनम् for निवेदनात्.
२७. a : M. स for न, S. अग्नौ for अत्र.
d : S. My. क्षिप्रैरेनोभिवृद्धिदम्.
२८. c : V. यानं for दानं.
२९. d : A. विनिवेदित ओदनात्.
३१. c : A. पानीयञ्च for अपनीय.
d : S. My. A. M. ततः for पुनः
३२. a : S. My. A. M. तु for च.

राजोपचारानुरूपं सर्वैरत्र यजेत्सदा ।
स्थापयेच्च ततो बिम्बं पश्चादायतनं हरेः ॥ ३३ ॥

मूलबिम्बे समारोप्य पूजयेत् कुसुमैः प्रभुम् ।
(स्नपनरहितहविर्निवेदनप्रकारः)
स्नपनेन विना वापि दद्यादेवं महाहविः ॥ ३४ ॥

प्रभूतौदनयागार्थमन्ययागार्थमेव वा ।
बिम्बे कस्मिंश्चिदावाह्य पूजिते तु यथाविधि ॥ ३५ ॥

(प्रारब्धे हविर्यागे प्राप्तावसरनैमित्तिकादिविषये विशेषः)
समारब्धेऽसमाप्तेऽस्मिन् यागे तस्मिन् द्विजोत्तम ।
आद्ये महाहविर्यागे प्राप्ते नैमित्तिकादिषु ॥ ३६ ॥

दातव्यं तच्च मन्त्रज्ञैरकृत्वोद्वासनादिकम् ।
तत उद्वासयेत्तत्र स्नपनेऽप्येवमेव हि ॥ ३७ ॥

मूलबिम्बे तु वा देयं मन्त्रिभिस्तु महाहविः ।
तृतीयावरणाद्बाह्ये तथैवाभ्यन्तरेऽपि वा ॥ ३८ ॥

महोत्सवविधौ दद्यात् कुत्रचिद्वा महाहविः ।
(परिवारदेवादीनां कृते हविर्दानम्)
एवं तु परिवाराणां निवेद्य तु महाहविः ॥ ३९ ॥

---

३३. c : My. A. स्नापयेत् for स्थापयेत्.
३४. c : S. My. A. M. चापि for वापि.
d : S. My. M. एव for एवं.
३६. b : S. My. A. M. कस्मिन् for तस्मिन्.
c : A. V. अन्ये for आद्ये.
३७. c : S. My. A. M. अत्र for तत्र.
d : V. ह्येव for ०प्येव.
३८. d : S. My. A. M. तु for ०पि.
३९. b : A. विद्या for चिद्वा.

स्वे स्वे स्थाने तु विप्रेन्द्र सिद्धये काम्यकर्मण: ।
विमाने गोपुरे साले मण्डपादिषु या: स्थिता: ॥ ४० ॥
अर्चास्तु देवताविष्टा: सर्वकामप्रदा: सदा ।
महौदनादिकं तासां दातव्यं तत्र मन्त्रिभि: ॥ ४१ ॥

(महाहविर्निवेदनफलश्रुति:)

एवं महाहविर्दद्याच्छ्रद्धया यस्तु मानव: ।
स वैष्णवपदं वापि कांक्षितं वा समाप्नुयात् ॥ ४२ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
महाहविर्विधानो नाम षड्त्रिंशोऽध्याय:

---

४०. b : S. My. M. कर्मणाम् for कर्मण:.
d : S. My. A. M. च for या:.
४१. a : V. स्तु for तु, M. ०दिष्टा for ०विष्टा.
b : A. सम for सर्व, S. फलप्रदा: for प्रदा: सदा.
c : S. तस्मात् for तासाम्.
४२. a : My. A. सर्व एव for एवं महा.
A. उत्सवविधिर्नाम for महाहविर्विधानो नाम.

# सप्तविंशोऽध्यायः

## [पूजोपकरणानां लक्षणादिनिरूपणाध्यायः]

### (पूजासाधनलक्षणनिरूपणार्थं गौतमकृताभ्यर्थना)

**गौतमः—**

प्रमाणं सर्ववस्तूनां लक्षणं मम साम्प्रतम् ।
समासान्मुनिशार्दूल नित्यनैमित्तिकादिषु ॥ १ ॥

### (संक्षेपतः पूजासाधनवर्णनम्)

**नारदः—**

साधनानां तु पूजायाः लक्षणं शृणु चाधुना ।
आपः पुष्पाणि पत्राणि गन्धवासांसि नित्यके ॥ २ ॥

माला धूपाश्च दीपाश्च भूषणादीनि च द्विज ।
यथोपलब्धानि देयानि विष्णवे प्रभविष्णवे ॥ ३ ॥

चरोर्घृतं गुलं मुद्गं मत्स्यण्डी च तथा दधि ।
विविधानि च भक्ष्याणि संस्कृतानि यथाविधि ॥ ४ ॥

---

अध्यायस्यादौ M. कोषे 'श्रीरस्तु' इत्यधिकः पाठः.

२. a : My. A. M. साधकानां for साधनानां.
   c : My. पत्राणि पुष्पाणि for पुष्पाणि पत्राणि.
   d : S. A. M. नैत्यके for नित्यके.

३. a : A. ०पांश्च for ०पाश्च.
   b : S. My. A. भूषणानि च यद्द्विज.

४. a : V. वरोद्धृतं for चरोर्घृतं.
   b : S. मत्स्यखण्डं for मत्स्यण्डी.
   d : S. My. M. तथा for यथा ; S. दधि for विधि.

फलं च हृतकं सूपं व्यञ्जनाद्यं तथा परम् ।
यथालब्धं तु निर्दिष्टमेषां न्यूनाधिकं न वै ॥ ५ ॥

(स्रुवस्रुचोः लक्षणम्)

बाहुदण्डसमायामं होमार्थं कारयेत् स्रुवम् ।
सप्तभिर्पञ्चभिर्वा स्यात् अङ्गुलानां तु विस्तृतम् ॥ ६ ॥

सममायामविस्तारौ त्रिधा कृत्वा प्रयत्नतः ।
तृतीयभागे मध्येऽस्य समीपे मध्यमे खनेत् ॥ ७ ॥

आयामसमनिम्नं तच्छ्वभ्रं कृत्वा विचक्षणः ।
तथा तिर्यगधश्चैव सर्वतः सममेव तत् ॥ ८ ॥

श्वभ्रस्य बाह्यतस्त्यक्त्वा द्वयं वा त्रितयं तु वा ।
पदस्तु कर्णिकाकारस्वभ्रमानेन पृष्ठतः ॥ ९ ॥

चतुरश्राकृतेरग्रे मेखलायाः गलं स्मृतम् ।
नाभ्यर्धं तु यथा कुण्डे तद्बहिर्मेखला भवेत् ॥ १० ॥

---

५. a : V. भृतकं for हृतकं.
c : S. My. A. M. ०लब्धानि for ०लब्धं तु.

६. a : S. आयातं for आयामं.
b : M. ध्रुवम् for स्रुवम्.
c : S. M. पञ्चभिस्सप्तभिर्वास्य.
d : S. M. मङ्गुलानाम् for अङ्गुलानाम्.

७. a : S. ०विस्तारे My. ०विस्तारं for विस्तारौ.
d : A. समिद्धे for समीपे.

८. b : My. शुभ्रं for श्वभ्रम्.
d : M. सभ्रम् for समम्.

९. b : S. My. A. M. द्विविधं तु वा.
c ; d : S. My. A. M. om.

१०. c : S. नाभिं तन्तुं तथा My. नात्यन्तं तु यथा M. A. नाभ्यन्तं तु यथा for नाभ्यर्धं तु यथा.
d : S. M. नाभिः for बहिः.

नाभिमानेन सा ज्ञेया विस्ताराद्वुच्छ्रयादपि ।
श्वभ्रानुरूपतो वृत्तो नाभिश्चैव तु मेखला ॥ ११ ॥

सर्वस्य बाह्यतः कुर्यात् चतुरश्रां तु मेखलाम् ।
अन्तर्मेखलया तुल्यं विस्तारायाममुच्छ्रयम् ॥ १२ ॥

मेखलाद्वयमध्यं तु यथारुचि विचित्रयेत् ।
पादस्तु कर्णिकाकारः श्वभ्रमीनप्रकोष्ठतः ॥ १३ ॥

चतुरश्राकृतेरन्तर्मेखलायां गलं स्मृतम् ।
अङ्गुष्ठेन समायामं सर्वाङ्गुष्ठेन वा शुभम् ॥ १४ ॥

विस्तारस्यास्य विस्तारं त्रिभागेन समं भवेत् ।
चतुरङ्गुलविस्तारं पञ्चाङ्गुलमथापि वा ॥ १५ ॥

गलपार्श्वे मुखं कुर्यात् त्रिरेखाङ्गुलमन्ततः ।
मुखमध्ये तु कुल्या स्यात् कण्ठमध्ये यथारुचि ॥ १६ ॥

---

११. b : S. My. A. M. विस्तारं for विस्तारात्, S. A. तूच्छ्रयात् My. कृच्छ्रयात् for उच्छ्रयात्.
१२. a : S. A. M. सर्वत्र for सर्वस्य.
c : S. याम for तुल्यं.
d : S. A. तुल्यविस्तार M. तस्य विस्तार for विस्तारायाम०.
१३. a : My. A. M. मुख्यं for मध्यम.
b : S. विचिन्तयेत् for विचित्रयेत्.
c : A. पादम् for पादः.
d : A. My. ०मीशत् for मीन.
१४. a : S. M. अर्ध A. अन्ध्र V. अग्रे for अन्तः.
१६. b : S. My. A. विद्वेकाङ्गुलं for त्रिरेखाङ्गुलम्, S. M. मन्वतः for अन्ततः.
c : A. मख for मुख.
d : A. कर्ण for कण्ठ.

कण्ठे तु सुषिरं कुर्यात् विशेद्यावत् कनीयसी ।
शेषदण्डं तु कर्तव्यं यथारुचि विचित्रितम् ॥ १७ ॥

स्रुवं तु हस्तमात्रं स्यात् चटुकेन समन्वितम् ।
चटुकं द्व्यङ्गुलं वृत्तं कर्तव्यं तु सुशोभनम् ॥ १८ ॥
गोष्पदं तु यथामग्नं मलपङ्के तथा भवेत् ।

(आहुतिद्रव्याणां परिमाणनिर्देशः)

घृताहुतिश्चतुर्बिन्दुरेवं क्षीराहुतिर्भवेत् ॥ १९ ॥
मध्वाहुतिश्चतुर्बिन्दुश्शुक्तिर्दध्याहुतिर्भवेत् ।
ततः प्रसृति मात्रा तु गौल्यान्नाहुतिरुच्यते ॥ २० ॥
परमान्नाहुतिस्तद्वत् कृसरान्नं तथैव च ।
अन्नाहुतिस्तु ग्रासार्धा त्वेवं वै कृसराहुतिः ॥ २१ ॥
निष्पावबीजमात्रा तु गुल्गुलाहुतिरुच्यते ।
तिलव्रीहियवादीनां मुष्ट्यर्धार्धाहुतिर्भवेत् ॥ २२ ॥

---

१७. a : S. दद्यात् for कुर्यात्.
b : V. कनीनिका for कनीयसी.
d : S. My. A. M. विनिश्चितम् for विचित्रितम्.

१८. a : My. एवं for स्रुवं.
c : S. चटुकाद्यं गुडंकृ, M. चटुकाद्यङ्गुलवृत्त, V. द्विसलं for द्व्यङ्गुलम्, My. A. कृत्तं for वृत्तं.
d : My. तु for सु०.

१९. a : My. भेष्वेदं A. गेष्वेदं for गोष्पदं, A. भग्न S. भुग्न for मग्नं.; My. A. मल्पवंके for मलपङ्के.

२०. b : My. द्रव्य० for दधि०.
c : V. A. प्रभृति for प्रसृति, S. My. A. M. मात्रं for मात्रा.

२१. a : S. My. A. चरमाना० for परमान्ना०.
b : S. My. A. M. ज्ञेया सर्वसुखप्रदा.
c : S. My. A. अन्त० for अन्न ; S. प्राशार्थी for ग्रासार्धा.

२२. a : S. My. V. निष्पाद for निष्पाव.
b : My. गतपाहुतिः for गुल्गुलाहुतिः.

स्वप्रमाणं फलस्योक्तं पुष्पस्याप्येवमुच्यते ।
त्रुटिमात्राहुतिर्ज्ञेया लवणस्य विशेषतः ॥ २३ ॥
सर्षपस्यैवमुद्दिष्टा पत्राणां स्वप्रमाणतः ।
पूर्णाहुतिस्तु सर्वत्र विज्ञेया स्वमिता सदा ॥ २४ ॥
आहुतिस्त्वङ्कुराणां तु सुप्रमाणेन कथ्यते ।

(समिधः लक्षणम्)

तालमानेन विज्ञेया समित्काष्ठमया शुभा ॥ २५ ॥

(इध्मप्रमाणम्)

इध्मायामो द्वितालेन परिधिर्बाहुमात्रकः ।

(आज्यपात्रलक्षणम्)

अधस्तादाज्यपात्रस्य विस्तारं चतुरङ्गुलम् ॥ २६ ॥
उपर्यष्टाङ्गुलं वृत्तं तन्नालं हस्तसम्मितम् ।

(प्रणीताप्रोक्षणीलक्षणम्)

प्रणीतां प्रोक्षणीं चैव नालहीनां तु कारयेत् ॥ २७ ॥

(अर्घ्यादिपात्रलक्षणम्)

कुर्यादर्घ्यादिपात्राणि प्रस्थपूर्णानि सुव्रत ।
यथालब्धानि वेद्यां तु प्रयोक्तव्यानि पण्डितैः ॥ २८ ॥

---

२३. b : S. My. M. पुष्पाणामेव for पुष्पस्याप्येव०.
d : A. लक्षणस्य for लवणस्य, V. विधीयते for विशेषतः.
२५. a ; b : V. om.
२६. a : S. इद्ध for इध्म.
c : S. My. M. पात्रं तु for पात्रस्य.
२७. a : S. My. A. M. उपरि for उपर्य०.
b : S. A. M. संयुतम् for सम्मितम्.
c : A. प्रोक्षणीयं च for प्रोक्षणीं चैव.
d : A. हीनं for हीनां.
२८. b : S. M. भारत for सुव्रत.
c : A. वेद्यायां for वेद्यां तु.

(धूपपात्रलक्षणम्)

धूपपात्रं सनालं तु कारयेच्च सुशोभनम् ।

(सर्वपात्राधारलक्षणम्)

आधारः सर्वपात्राणां त्रिपादो वाञ्छितोच्छ्रयः ॥ २९ ॥

(घटवर्धन्योः परिमाणम्)

घटस्तु द्रोणसम्पूर्णः शिवपूर्णं तु वर्धनी ।

(कटाहकर्परयोः लक्षणम्)

कटाहो भारपूर्णस्तु चतुर्द्रोणस्तु कर्परः ॥ ३0 ॥

(जलपात्रलक्षणम्)

जलपात्रद्वयं प्रोक्तमेवं लक्षणसंयुतम् ।

(स्थालीलक्षणम्)

हविःस्थाल्यास्तु संप्रोक्तं हविषामनुरूपतः ॥ ३१ ॥

तत्तुल्यायामविस्तारगलौष्ठादिविभूषिता ।
विस्तारार्धमुखावृता विचित्रैश्च समन्विता ॥ ३२ ॥

(देवस्य मकुटादिभूषणानां लक्षणम्)

देवस्य मकुटादीनां भूषणानां तु लक्षणम् ।
अर्चानुरूपतः प्रोक्तं सौवर्णं राजतं तु वा ॥ ३३ ॥

---

३0. a : A. गटा : for घटः, A. पूर्णं for पूर्णः.
b : V. वर्धनं for वर्धनी.
d : S. कूर्पकः A. कोर्परम् for कर्परः.
३१. c : S. A. M. स्थाल्यां for स्थाल्याः.
३२. c : S. My. M. द्विहस्त० for विस्तार०, A. ०तार्थं for ०रार्घ.

सहजाभरणाकारतुल्यं रत्नैस्तु वान्वितम् ।
जपेद्धि'मूल'मन्त्रस्य संस्कृतिर्भूषणादिभिः ॥ ३४ ॥

अष्टोत्तरसहस्रान्तान् अष्टोत्तरशतावरान् ।

(बलिमहाबल्योः प्रमाणम्)

बलिः कराग्रसुमितः त्वमितस्तु महाबलिः ॥ ३५ ॥

(स्नपनद्रव्यप्रमाणम्)

स्नपनद्रव्यवस्तूनां प्रमाणं शृणु सुव्रत ।
तर्कमात्रप्रमाणेन हस्तमुष्टिप्रमाणतः ॥ ३६ ॥

एकबीजान्यबीजानि फलानि स्वप्रमाणतः ।
फलानां बहुबीजानां प्रमाणं पलमुच्यते ॥ ३७ ॥

पत्रमूलफलानां तु पलमेकैकशो भवेत् ।
शुक्तिमात्राणि बीजानि त्वक्षतं कुडवं भवेत् ॥ ३८ ॥

निष्कार्धार्धमितं लोहं रत्नं तु स्वप्रमाणतः ।
गन्धो निष्कप्रमाणेन त्वचः पलमुदाहृतम् ॥ ३९ ॥

---

३४. a : A. आस्तरण for आभरण.
b : A. M. तुल्यैः for तुल्यम्.
c : M. V. जपाद्धि for जपेद्धि.
३५. c : S. बलिरग्रे भूमिसुतः, My. बलिरग्रे भुविमितः.
३६. c : S. तन्त्रतक for तर्कमात्र.
३७. b : A. फलस्व for फलानि.
d : A. अलम् S. M. फलम् for पलम्.
३८. b : V. फलम् for पलम्.
c : S. A. M. उक्त for शुक्ति.
d : S. क्वथतण्डुलजं for त्वक्षतं कुडवम्, My. कुडुवं for कुडवम्.
३९. a : S. My. A. M. ०च्चमितं for ०र्धमितं.
b : S. My. A. रक्तं for रत्नम्.
d : V. न त्वचः फलमुद्धृतम्.

अङ्कुरं मुष्टिमात्रेण गृह्णीयात् साधकोत्तमः ।
तृणानां मुष्टिमात्रेण प्रमाणं समुदाहृतम् ॥ ४० ॥
निशादीनां पलं प्रोक्तं स्तम्बकानां तु मुष्टिना ।

(प्रोक्षणार्थं कल्प्यमाने पञ्चगव्ये द्रव्यप्रमाणम्)

समानि पञ्चगव्यानि प्रोक्षणे विहितानि वै ॥ ४१ ॥

(प्राशनार्थं कल्प्यमाने पञ्चगव्ये द्रव्यप्रमाणम्)

गोशकृद्रसमूत्रे द्वे तुल्ये दधि तयोः समम् ।
आज्यं तु तैः समम् प्रोक्तं चतुर्भिस्तु समं पयः ॥ ४२ ॥
प्राशने पञ्चगव्यस्य लक्षणं समुदाहृतम् ।

(स्नपनार्थके पञ्चगव्ये द्रव्यप्रमाणम्)

घृतं शकृद्रसं सममेताभ्यां तु समं दधि ॥ ४३ ॥
त्रिभिरेतैः समं क्षीरं सर्वैरन्यत्समं भवेत् ।
स्नपने पञ्चगव्यस्य लक्षणं समुदाहृतम् ॥ ४४ ॥

(पूजोपकरणानामन्यतमस्य वस्त्रस्य लक्षणम्)

अष्टहस्तायतं वापि पञ्चहस्तायतं तु वा ।
वस्त्रस्य लक्षणं प्रोक्तं चतुस्तालेन विस्तृतम् ॥ ४५ ॥

---

४०. a : S. अङ्कुरान् for अङ्कुरम्.
b : S. प्रमाणं for गृह्णीयात्.
४१. a : S. A. V. फलं for पलम्.
b : S. M. A. हस्तकानां for स्तम्बकानाम्.
४२. a : A. का० for गो, My. यव for रस.
d : My. A. चतुर्थः for चतुर्भिः.
४४. b : V. अन्यं for अन्यत्.

(ध्वजलक्षणम्)

त्रिपादाश्च द्विहस्ताश्च सशिरस्काः विचित्रिताः ।
यथाभिमतविस्तारं समुन्नतिसमन्विताः ॥ ४६ ॥
ध्वजाः कार्यास्तु सर्वत्र सर्वेषां मुनिपुङ्गव ।

(छत्रलक्षणम्)

श्वेतानि वाथ कृष्णानि रक्तहेमनिभानि वा ॥ ४७॥
सर्ववर्णानि विप्रेन्द्र मकुटेनान्वितानि च ।
मध्यतो नालयुक्तानि नानारत्नान्वितानि च ॥ ४८॥
मयूरपत्रक्लृप्तानि वस्त्रक्लृप्तानि वा द्विज ।
लोहजानि विचित्राणि तालपत्रमयानि वा ॥ ४९ ॥
वृत्तानि चतुरश्राणि षडष्टाश्राणि वा मुने ।
सर्वशोभान्वितान्येवमातपत्राणि कारयेत् ॥ ५० ॥
कोणेषु नालयुक्तानि कूटाकाराणि वै द्विज ।

(अष्टमङ्गललक्षणम्)

हस्तमात्रायतं कुर्यात् तालमानेन विस्तृतम् ॥ ५१ ॥

---

४६. a : S. My. A. द्विपा० for त्रिपा०.
d : V. M. उन्नत for उन्नति, S. My. A. अन्वितम् for अन्विताः.
४७. d : V. मुक्ता for रक्त.
४८. b : S. A. कुटुचेना M. कुडुपेना for मकुटेना०.
d : S. My. S. वा० for च.
४९. a : My. सु० for क्लृ०.
b : S. हैमानि राजतानि वा.
५१. a : S. My. A. M. ०ष्वा for षु.
b : S. My. A. रहाकाराणि वा for कूटाकाराणि वै.
d : My. V. तुल्य for ताल, A. ०पि च स्मृतम् for ०न विस्तृतम्.

दारुजं च चतुष्कोणम् एकद्वित्र्यङ्गुलोन्नतम् ।
एवं शङ्खादिभिर्युक्तम् अष्टमङ्गललक्षणम् ॥ ५२ ॥

अष्टमङ्गलरूपाणि कुर्याल्लोहैस्तु वा शुभैः ।
तालमात्रोन्नतान्यत्र युक्तान्यम्बुजविष्टरैः ॥ ५३ ॥

ध्वजेषु वालिखेदेषामष्टानां तु यथाक्रमम् ।
रूपाणि द्विज सर्वेषामष्टानां तु यथाक्रमम् ॥ ५४ ॥

शङ्खचक्रपताकाश्च श्रीवत्सो दर्पणो वृषः ।
मत्स्ययुग्मं च कुंभं च मङ्गलानि शुभानि वै ॥ ५५ ॥

(अष्टमङ्गलस्य लक्षणान्तरम्)

अष्टमङ्गलरूपाणि विज्ञेयान्यन्यथापि वा ।
तथा शङ्खं च चक्रं च स्वस्तिकं कलशं तथा ॥ ५६ ॥

श्रीवत्सं चामरं चापि सिंहस्ताक्ष्योऽष्टमः स्मृतः ।

(तालवृन्तस्य लक्षणम्)

सनालं तालवृन्तं तु पक्षिपत्रमयं तु वा ॥ ५७ ॥

वस्त्रजं पत्रजं वापि विचित्रं सुमनोहरम् ।
चन्द्राभमर्धचन्द्राभं चतुरश्रं तु वायतम् ॥ ५८ ॥

---

५२. c : My. A. शाखा for शङ्खा०.
५३. b : M. द्विज for शुभैः.
c : S. A. M. पत्रो० for मात्रो०.
d : My. A. अम्बुनि for अम्बुज
५४. a : My. द्विजेषु for ध्वजेषु, M. V. चा for वा ; V. एषु for एषाम्.
b : V. मङ्गलानां तु वा लिखेः.
५५. b : A. वृषा for वृषः.
५७. a : S. A. M. पंचरं My. पञ्जरं for चामरम्, A. M. V. वापि for चापि.
५८. d : S. My. A. वायुतम् for वायतम्.

यथाशोभं तु वा कुर्यात् तृणजं चामरं तु वा ।

(पाद्यप्रतिग्रहपात्रलक्षणम्)

त्रिपादो लोहजो वृत्तं कमलाभः सुशोभनः ॥ ५९ ॥

पाद्यप्रतिग्रहः प्रोक्तः चक्रपाद्यस्तु वा हरेः ।

(आचमनप्रतिग्रहपात्रलक्षणम्)

साधारः कर्णिकाकारो लोहजः शुभदर्शनः ॥ ६० ॥

देवस्याचमनार्थं तु प्रतिग्रहः उदाहृतः ।

(पञ्चविधासननामनिर्देशः)

योगासनं च देवस्य तथा स्नानासनं शुभम् ॥ ६१ ॥

अलङ्कारासनं चैव भोजनासनमेव च ।

यात्रासनं च पञ्चैतान्यासनानि द्विजोत्तम ॥ ६२ ॥

(पीठस्य लक्षणम्)

तालेन वाथ हस्तेन विस्तारायामतः समम् ।

पादगात्रेण संयुक्तं यथाकामोच्छ्रयं शुभम् ॥ ६३ ॥

लोहजं दारुजं वापि पीठानां लक्षणं स्मृतम् ।

(भोजनासनयात्रासनयोः लक्षणम्)

विस्ताराद्द्विगुणायामं भोजनासनविष्टरम् ॥ ६४ ॥

---

५९. b : S. तृणजाभ्रकरं My. तृणजामरजं for तृणजं चामरम्.
c : A. My. हेमजः for लोहजः.

६०. a : A. पात्र० for पाद्य०.
c : A. ०धारो for ०कारो.

६१. a : A. देवस्य चामरार्धं तु.
d : My. A. आदिकं for आसनम्

६३. a : My. चतुर्हस्तेन तालेन, S. चतुः for वाथ.
b : V. आयाम तत् for आयामतः.
c : S. My. A. M. गात्राणि for गात्रेण.

एवं यात्रासनं प्रोक्तं सालङ्कारोपशोभितम् ।

(पादुकयोः लक्षणम्)

रत्नजे लोहजे वापि दारुजे सुविचित्रिते ॥ ६५ ॥

अर्चापादानुरूपेण पादुके समुदीरिते ।

(दर्पणलक्षणम्)

ततस्तु दर्पणं कुर्यात् देवाननसमं शुभम् ॥ ६६ ॥

वृत्तमाधारसंयुक्तमनाधारं तु वामलम् ।

कांस्योत्थं स्फटिकोत्थं वा हेमाद्यैर्भूषितं तु वा ॥ ६७ ॥

(ओदनपात्रलक्षणम्)

कुर्यादोदनपात्राणि निवेद्यस्यानुरूपतः ।

(सामान्यतः यागोपकरणलक्षणम्)

यागोपकरणान्येवमन्यान्यपि महान्ति वा ॥ ६८ ॥

स्वल्पानि वा प्रकुर्वीत तत्तत्कर्मानुरूपतः ।

(खट्वायाः लक्षणम्)

पादगात्रसमायुक्ता विस्ताराद्द्विगुणायता ॥ ६९ ॥

खट्वा शय्यान्विता ज्ञेया मृद्वास्तरणभूषिता ।

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
यागोपकरणवर्णनं नाम सप्तविंशोऽध्यायः

---

६५. a : S. My. M. अस्वतंत्रं स्वतंत्रं वा.
b : A. स्याल० for साल०:
d : S. वापि चित्रके for सुविचित्रिते.

६६. d : S. आसन for आनन.

६७. d : M. भूषिते for भूषितम्.

६८. a : A. देवस्य for ओदन.

६९. c : A. युक्त for युक्ता.
d : My. V. S. विस्तारन्विद्विगुणाता.
A. नारद for नारदीय. M. विधि for वर्णनम्.

# अष्टाविंशोऽध्यायः

## [सर्वदेवतास्थापनविधिनिरूपणाध्यायः]

(स्वतन्त्रदेवतानां प्रतिष्ठादिनिरूपणार्थं नारदं प्रति गौतमकृताभ्यर्थना)

गौतमः—

देवतानां तु सर्वेषां प्रतिष्ठाद्यं तु पूजनम् ।
स्वतन्त्राणां मुनिश्रेष्ठ वद देव मुनीश्वर ॥ १ ॥

(द्विविधविमाननिर्देशः)

नारदः—

शृणुष्वावहितो ब्रह्मन् सर्वासां स्थापनादिकम् ।
स्वतन्त्रमस्वतन्त्रं च विमानं द्विविधं भवेत् ॥ २ ॥

(अस्वतन्त्रालयलक्षणम्)

ग्रामाद्यङ्गं भवेद्यत्तत् अस्वतन्त्रालयं सदा ।

(स्वतन्त्रालयलक्षणम्)

यत्तीर्थारण्यनद्यादौ तत्स्वतन्त्रमुदाहृतम् ॥ ३ ॥

(आलयकल्पनोद्देश्यम्)

स्वतन्त्रं वास्वतन्त्रं वा देवानामालयं हितम् ।
रक्षार्थमुत्सवार्थं वा शोभार्थं वा यथारुचि ॥ ४ ॥

---

1. b : My. पूजकम् S. A. M. पूर्वजम् for पूजनम्.
3. a : My. ब्रह्माद्यङ्गम् for ग्रामाद्यङ्गम्.
   b : S. My. A. M. ०न्त्रं भवेत् for ०न्त्रालयम्.

तद्देवभक्तैः संयुक्तं सद्भिस्त्रैवर्णिकैः शुभैः।

(केवलालयलक्षणं तत्र विशेषाश्च)

यद्देवानां स्वतन्त्राणामङ्गत्वेन पुनः कृतम् ॥ ५ ॥

नगरग्रामरथ्यादौ केवलं तदुदाहृतम्।
नात्र देवालयं कुर्यात् कृते दोषकरं भवेत् ॥ ६ ॥

देवतान्तरभक्तैश्च नाधिष्ठेयं विशेषतः।
न देवतान्तराणां तु कुर्यादत्र महोत्सवम् ॥ ७ ॥

यजेदग्निं तु भोगार्थी ब्रह्माणं तु सुखाय वै।
यजेद्धनार्थी धनदं गजास्यं विघ्नशान्तये ॥ ८ ॥

श्रियै श्रियं यजेत् स्कन्दं जयार्थी सर्वदा यजेत्।
सूर्यं रोगविनाशाय विद्यार्थी रुद्रमर्चयेत् ॥ ९ ॥

दुर्गां तु सर्वकामार्थी यममायुष्यवृद्धये।
इन्द्रं विभूतये विष्णुं मोक्षाय च यजेत्सुधीः ॥ १० ॥

कामं सौभाग्यकामस्तु यजेन्मन्त्री सुसंयतः।
कुर्याद्रसायनार्थी चेत् अश्वियागं यथाविधि ॥ ११ ॥

---

५. b : V. सहितैः वर्णिकैः शुभैः.
 d : V. पुरस्कृतम् for पुनः कृतम्.

७. b : S. M. नादिष्ठेयं My. A. नायिष्ठेयम् for नाधिष्ठेयम्.
 c : V. च for तु.

८. a : A. यच्छेत् for यजेत्.
 d : My. विघ्नेशं S. A. M. गणेशं for गजास्यं, My. नाशकः for शान्तये.

९. a : My. श्रियः श्रियै for श्रियै श्रियम्.
 b : S. My. A. M. जयेत् for यजेत्.

१०. a : M. स्वर्ग for सर्व.
 b : S. My. M. यममानुष्य for यममायुष्य.

११. c : A. वत् S. M. यत् for चेत्.
 d : V. अश्व for अश्वि०.

पुष्ट्यर्थी पूजयेच्चन्द्रं गृहेष्वायतनेषु वा ।

(अग्नेराराधनक्रमः)

अग्नेस्तु पूजनं वक्ष्ये प्रथमं शृणु सुव्रत ॥ १२ ॥

विमानं पूर्ववत्कुर्यात् हुतभुग्भेदसंयुतम् ।
प्रासादस्योपरिष्टात्तु पूर्वमाहवनीयकम् ॥ १३ ॥

सभ्यं दक्षिणपार्श्वे तु तत्पश्चाद्गार्हपत्यकम् ।
ततश्चोत्तरदिग्भागे ओदने पचनं न्यसेत् ॥ १४ ॥

इमेऽग्निरूपा विप्रेन्द्र विशेषमधुनोच्यते ।
पूर्वे किंशुकपुष्पाभो दक्षिणे शोणितप्रभः ॥ १५ ॥

जपाकुसुमसंकाशस्तृतीयः पश्चिमे भवेत् ।
पिण्डीतकप्रसूनाभः चतुर्थोऽग्निस्तथोत्तरे ॥ १६ ॥

विशेषादजचिह्नं तु वह्नेः प्रासादकोणके ।
रक्ताभं रक्तवस्त्रं च रत्नभूषणभूषितम् ॥ १७ ॥

पार्श्वयोः पृष्ठतः पादास्त्रयोऽस्य विहिताः शुभाः ।
पञ्चवक्त्रं त्रिनेत्रं च सप्तजिह्वं विभावसुम् ॥ १८ ॥

पञ्चानने तु कर्तव्ये पूर्ववद्वदनत्रयम् ।
पूर्वपश्चिमवक्त्रे द्वे दक्षिणोत्तरयोर्भवेत् ॥ १९ ॥

---

१२. a : A. My. पुष्यार्थी for पुष्ट्यर्थी.
b : S. My. V. M. गेहेषु for गृहेषु, S. My. A. आयतनेऽपि for आयतनेषु.

१३. a : A. समानं for विमानं.

१४. b : My. तत्पार्श्वात् for तत्पश्चात्.

१७. b : V. ०मुच्यते My. कोशके for कोणके.
d : A. My. S. रक्त for रत्न.

१८. c : A. पङ्क्तित्रिवक्त्रपञ्चास्यं, My. वा for च.

१९. b : My. पूर्वाद्यामध्यमे त्रयम्, A. पूर्ववन्नयनत्रयम् S. M. पूर्वमाद्यन्तमध्यमे.
c : V. ०भ्यः A. ०द्य for द्वे.

त्रिवक्त्रे सप्तजिह्वासु जिह्वैका मध्यगा भवेत् ।
तिस्रस्तिस्रस्तु कर्तव्याः दक्षिणोत्तरवक्त्रयोः ॥ २० ॥

उपवीतादिभिर्युक्तं त्रिपञ्चमकुटान्वितम् ।
प्रणवाद्योऽस्य मन्त्रः स्यात् अग्नयेति नमोन्तकः ॥ २१ ॥

विशेषयागं कुर्वीत प्रतिपद्यस्य मन्त्रवित् ।

(ब्रह्मणः आराधनक्रमः)

सर्वसिद्धिकरं वक्ष्ये ब्रह्मयागमनुक्रमात् ॥ २२ ॥

विमानं ब्रह्मणः प्रोक्तं चतुर्दिग्द्वारसंयुतम् ।
उपरिष्टाच्चतुर्दिक्षु वेदाः स्थाप्याः ऋगादयः ॥ २३ ॥

रूपाणि कारयेत्तेषां वासुदेवादयो यथा ।
हंसं कोणेषु विन्यस्य सर्वमन्यद्यथा परम् ॥ २४ ॥

ब्रह्माणं पीतवर्णं तु चतुर्हस्तं चतुर्मुखम् ।
आसीनं वा स्थितं वापि हंसारूढं तु वा द्विज ॥ २५ ॥

सावित्रीं चैव गायत्रीं दक्षिणोत्तरपार्श्वयोः ।
कपिलः काश्यपो दक्षः रुद्रोऽग्निश्च मरुत्तथा ॥ २६ ॥

---

२०. b : V. My. मध्यमा for मध्यगा.
c : S. My. A. M. वक्तव्या for कर्तव्याः.
२१. b : S. पञ्चत्रि M. सच्छत्र for त्रिपञ्च.
c : S. प्रणवाद्येति मन्त्रस्य.
d : S. अग्नीयेति नमोन्तकम्.
२२. a : V. कुर्याद्विशेषतो यागं.
c : S. My. A. ततस्तु सर्वसिद्ध्यर्थम्.
d : S. M. यजेत्क्रमात् for अनुक्रमात्.
२३. d : S. My. A. देवाः for वेदाः.
२४. a : V. एषां for तेषाम्.
d : A. परात् for यथा, S. V. A. M. पुरम् for परम्.
२६. b : M. दक्षिणोत्तरयोः क्रमात्.

भृगुश्च नारदश्चैव दिक्षु पूर्वादितः स्मृताः ।
अन्यत्साधारणं प्रोक्तं विशेषः मन्त्र एव तु ॥ २७ ॥

ओं तत्सद्ब्रह्मणे मन्त्रो नमोऽन्तोऽस्य समीरितः ।
शुक्लपक्षे द्वितीयायां विशेषाद्यागमाचरेत् ॥ २८ ॥

(धनदस्याराधनक्रमः)

ततो धनदयागं तु प्रवक्ष्यामि यथातथम् ।
सुवर्णवर्णं धनदं पिङ्गाक्षं तुङ्गनासिकम् ॥ २९ ॥

ऋद्धिं गुप्तिं न्यसेदस्य दक्षिणोत्तरपार्श्वयोः ।
प्रासादं चास्य कुर्वीत केवलं लक्षणान्वितम् ॥ ३० ॥

ओं तद्वैश्रवणायेति नमोऽन्तो मन्त्र उच्यते ।
नरं यक्षप्रियं चैव नलकूवरमेव च ॥ ३१ ॥

धनप्रियं धनाध्यक्षं धनिनं धनिनायकम् ।
अष्टदिक्षु न्यसेदेतान् कूप्यमीशानगोचरे ॥ ३२ ॥

सर्वदास्य तृतीयायां विशेषार्चनमाचरेत् ।

(गणेशाराधनक्रमः)

गणेशयागं वक्ष्यामि विघ्नानां विनिवृत्तये ॥ ३३ ॥

ग्रामादीनां चतुर्दिक्षु गणेशस्थानमुच्यते ।
प्राच्यां पश्चिमवक्त्रं तु पूर्वस्यं पश्चिमे भवेत् ॥ ३४ ॥

---

२८. c : S. A. M. चतुर्दश्याम् for द्वितीयायाम्.
३०. a : S. M. बुद्धिं for ऋद्धिम्, A. गुप्तं for गुप्तिं.
३१. c : S. धारायकं V. कब्दं यक्ष० for नरं यक्ष०.
३२. b : S. My. A. M. धननायकम् for धनिनायकम्.

उत्तरे दक्षिणास्यं तु दक्षिणे चोत्तराननम् ।
दिननाथं यजेदग्रे प्रासादस्याग्रदिक्षु च ॥ ३५ ॥

कीर्तितश्चास्य मन्त्रोऽयम् ओं गणाधिपतये नमः ॥
विशेषयागं कुर्वीत चतुर्थ्यामस्य मन्त्रवित् ॥ ३६ ॥

(श्रियः आराधनक्रमः)

श्रीयागं संप्रवक्ष्यामि सर्वकामफलप्रदम् ।
विशेषयागं पञ्चम्यां कुर्यादस्याश्च पक्षयोः ॥ ३७ ॥

अस्याः विमानं सर्वासु दिक्षु ग्रामस्य सम्मुखम् ।
सिंहाङ्कं वाथ तार्क्ष्याङ्कं कुर्याल्लिक्षणसंयुतम् ॥ ३७ ॥

पद्महस्तां च कमलां वासुदेवीं हरिप्रियाम् ।
पद्मासनां पद्मभवां महोदध्यात्मजामिलाम् ॥ ३९ ॥

अष्टदिक्षु विमानेऽस्याः कारयेत्सप्तमातरः ।
ओं श्रीं श्रियै नम इति मन्त्रोऽस्याः परिकीर्तितः ॥ ४० ॥

(स्कन्दस्याराधनक्रमः)

स्कन्दयागमथो वक्ष्ये शृणुष्व मुनिपुङ्गव ।
वायव्ये नैर्ऋते कोणे कुर्यात् स्कन्दालयं शुभम् ॥ ४१ ॥

श्रीपत्रपुष्पसंकाशं बालरूपं चतुर्भुजम् ।
शक्तिहस्तं विशेषेण बालाभरणभूषितम् ॥ ४२ ॥

रुक्माभं लांछितं कुर्यात् प्रासादं तु विशेषतः ।
मयूरं पूर्वदिग्भागे शक्तिमाग्नेयगोचरे ॥ ४३ ॥

---

३५. b : S. उत्तरासनम् for उत्तराननम्.
c : My. दिननाथं न्यसेदग्रे.
d : S. M. ग्रकेथु च for ०ग्रदिक्षु च.
३६. b : V. ओं गणाधिपते नमः.
४०. d : V. कीर्तितः परः for परिकीर्तितः.
४२. a : V. त्रिपत्र for श्रीपत्र.

मेधां दक्षिणपार्श्वे तु प्रज्ञां नैर्ऋतगोचरे ।
द्विरदं पश्चिमे भागे वायव्ये कुक्कुटं न्यसेत् ॥ ४४ ॥
उत्तरे देवसेनां तु विद्यामीशानगोचरे ।
कुं कुमाराय मन्त्रोऽस्य नमोऽन्तः प्रणवादिकः ॥ ४५ ॥
षष्ठयां विशेषयागस्तु कर्तव्यस्तस्य भक्तितः ।

(सूर्यस्याराधनक्रमः)

सूर्ययागं श्रृणुष्वाद्य विमानं दिक्षु कारयेत् ॥ ४६ ॥
ग्रामस्याभिमुखं पूर्वे पश्चिमे च विशेषतः ।
उत्तरे दक्षिणे वापि पूर्वपश्चिमदिङ्मुखम् ॥ ४७ ॥
जपाकुसुमसंकाशं पीतवस्त्रविभूषितम् ।
मुकुटाङ्गदचिह्नाङ्गं द्विकरं कवचोज्वलम् ॥ ४८ ॥
उषां सन्ध्यां ततः कुर्यात् पार्श्वयोः तस्य सुव्रत ।
चन्द्रं च पूर्वदिग्भागे वह्नावङ्गारमर्चयेत् ॥ ४९ ॥
दक्षिणे तु बुधं पूज्य नैर्ऋत्यां तु वृहस्पतिम् ।
शुक्रं तु पश्चिमे भागे वायव्ये तु शनैश्चरम् ॥ ५० ॥
वामपार्श्वे यजेद्राहुं केतुमीशानगोचरे ।
एते स्वनामभिः पूज्याः परिवारास्तु नित्यशः ॥ ५१ ॥
कुर्याद्विशेषतो यागं सप्तम्यामस्य सुव्रत ।
हं सूर्याय नमो मन्त्रः प्रणवाद्यस्तु कीर्तितः ॥ ५२ ॥

---

४४. d : V. ककुदं S. A. M. कुकुदं for कुक्कुटम्.
४७. b : S. My. A. M. अपि for च.
४८. b : V. वक्त्र for वस्त्र, विभूषणं for विभूषितम्.
d : S. My. A. M. कमल for कवच.
४९. b : A. स्मर V. अस्य for तस्य.
५०. b : S. My. A. M. ०ऋते for ०ऋत्यां.
५१. a : M. भागे for पार्श्वे.

(रुद्रस्याराधनक्रमः)

रुद्रयागं प्रवक्ष्यामि सर्वविद्याप्रदं सदा ।
शिवालयं तु कुर्वीत ग्रामादीनां पराङ्मुखम् ॥ ५३ ॥
ग्रामश्मशानयोर्मध्ये स्थानं विष्णोः श्रियस्तु वा ।
ग्रामस्याभिमुखं कुर्यात् ग्रामादीनां विवृद्धये ॥ ५४ ॥
यं ईशानाय मन्त्रोऽस्य नमोऽन्तः प्रणवादिकः ।
द्विहस्तं शूलिनं रौद्रं नागाभरणभूषितम् ॥ ५५ ॥
व्याघ्रचर्मपरीधानं जटामकुटधारिणम् ।
त्रिनेत्रं रौद्रतारं च सुस्थितं शशिशेखरम् ॥ ५६ ॥
गङ्गायमुनयोर्मध्ये स्थितं मुदितमानसम् ।
वृषभं चोपरि न्यस्य सनकं स्कन्दमेव च ॥ ५७ ॥
सनत्कुमारं ब्रह्माणं चन्द्रादित्यौ यथाक्रमम् ।
पूर्वादीशानपर्यन्तं पूजयेच्च स्वनामभिः ॥ ५८ ॥
वृषभाङ्कं विमानं तु परिवारैश्च संयुतम् ।
अष्टम्यां तु विशेषेण पूजयेच्छूलिनं विभुम् ॥ ५९ ॥

(दुर्गायाः आराधनक्रमः)

यजेन्नवम्यां दुर्गां तु विशेषेणानुजां हरेः ।
विदिक्षु दिक्षु वा कुर्यात् विमानं सिंहलाञ्छितम् ॥ ६० ॥
पूर्वस्यां पश्चिमस्यां वा ग्रामादीनां द्विजोत्तम ।
ह्रीं दुर्गायै नमो मन्त्रः प्रणवाद्यस्तु कीर्तितः ॥ ६१ ॥

---

५४. a : V. ग्रामेशानालयोः मध्ये.
५५. b : V. प्रणवोदितः for प्रणवादिकः.
५६. a : My. A. ० वसानं च for परीधानम्.
५७. c : V. ०त्यज्च for न्यस्य.
५९. a : V. अङ्गं for अङ्कं.
d : V. प्रभुम् for विभुम्.

दुर्गायाः कीर्तितं रूपं पूर्वमेव मया तव ।
जया च विजया चैव पूर्णा वै पुष्कला तथा ॥ ६२ ॥

पुष्टिस्तुष्टिस्तथेष्टिश्च प्रीतिश्चैवाष्टमी तथा ।
अष्टदिक्षु सदा पूज्याः पूजायां तु जयादयः ॥ ६३ ॥

उपरिष्टाद्विमाने तु कर्तव्यञ्च यथाक्रमम् ।
अस्याः न यानं शयनमासनं वापि कारयेत् ॥ ६४ ॥

स्थितामेव सदा कुर्यात् माहिषे शीर्ष एव वा ।
पद्मे वा केवले पीठे स्तनद्वयविराजिताम् ॥ ६५ ॥

कन्यालक्षणसंयुक्तां विष्णोर्मायास्वरूपिणीम् ।
दैविके वापि पैशाचे बहुबेरविधानतः ॥ ६६ ॥

(यमस्याराधनक्रमः)

यमस्यायतनं कुर्यात् ग्रामादीनां तु दक्षिणे ।
महिषाङ्कं विशेषेण दशम्यां पूजयेत्सुधीः ॥ ६७ ॥

द्विभुजं पीतवर्णं तु दण्डपाणिं ज्वलद्दृशम् ।
मकुटादिविचित्राङ्गं सर्वलक्षणलक्षितम् ॥ ६८ ॥

ओं यमाय नमो मन्त्रो प्रणवाद्योऽस्य कीर्तितः ।
चित्रगुप्तं यजेत्प्राच्यां कालं चैव तु दक्षिणे ॥ ६९ ॥

---

६२. b : V. क्रमायतः for मया तव.
६३. c : S. My. A. समा for सदा.
६४. a : A. My. S. विमानं for विमाने.
b : S. आसनं वापि कारयेत्.
६५. b : A. च for वा.
६६. b : My. M. विष्णोर्मायां सुरूपिणीम्.
६७. b : My. स for तु.
६८. b : My. चतुर्दशम् for ज्वलद्दृशम्.
६९. d : A. My. A. कविम् for कालं.

प्रतीच्यां तु कृतान्तं वै मृत्युमुत्तरदिग्गतम् ।
कालकन्यां तथाग्नेय्यां निद्रां नैर्ऋतगोचरे ॥ ७० ॥
उपरिष्टाद्विमानेऽपि कुर्यादेताः विचक्षणः ।

(इन्द्रस्याराधनक्रमः)

एकादश्यां यजेदिन्द्रं विशेषेण महामते ॥ ७१ ॥
विमानं पश्चिमद्वारं पूर्वस्यां दिशि कारयेत् ।
ऐरावताङ्कितं तद्वत् परिवारैः समन्वितम् ॥ ७२ ॥
मन्त्रोऽयं वासवायेति नत्यन्तः प्रणवादिकः ।
पूजयेत्त्रिदशाचार्यं पूर्वस्यां दिशि मन्त्रवित् ॥ ७३ ॥
शुक्रं दक्षिणदिग्भागे प्रतीच्यैरावतं न्यसेत् ।
स्वनाम्नैव तु सर्वत्राप्युच्चैःश्रवसमुत्तरे ॥ ७४ ॥
शचीमाग्नेयदिग्भागे नैर्ऋत्यां चाप्युपश्रियम् ।
अहिल्यां वायुदेशे तु न्यसेत्कुलिसमीश्वरे ॥ ७५ ॥
एवमेवोपरिष्टाच्च विमानस्य तु कारयेत् ।
इन्द्रयाग इति प्रोक्तः

(विष्णोः आराधनक्रमः)

विष्णुयागं ब्रवीम्यहम् ॥ ७६ ॥
कीर्तितान्यस्य रूपाणि यानि तेष्वेकमर्चयेत् ।
द्वादश्यां तु विशेषेण नित्ये काम्ये च मन्त्रवित् ॥ ७७ ॥

---

७१. a : S. My. विताने for विमाने.
b : S. My. A. एतां for एताः.
७३. a : A. सुदेवाय for वासवाय.
d : S. My. A. M. मन्त्रपः for मन्त्रवित्.
७४. a : A. शुकं for शुक्रम्.
d : S. My. A. M. हि for ०पि.
७५. a : My. शुचि S. शशि for शची०.
७७. a : V. ०नि स्व० for अस्य.

ऋग्भिः षोडशभिर्दद्यात् उक्ताभिस्तु पुनः पुनः ।
सर्वान् पुरुषसूक्तस्य पूजायां मुनिपुङ्गव ॥ ७८ ॥

अथवा पूर्ववत्कुर्यात् 'पुण्डरीकाक्ष'विद्यया ।
होमं तु पूर्ववत् कुर्यात् तिसृभिः सप्तभिस्तु वा ॥ ७९ ॥

समिद्भिस्तु यथायोगं साधकस्तन्त्रपारगः ।
नित्यहोमे विशेषेण समिधां च फलं शृणु ॥ ८० ॥

सर्वकाष्ठसमिद्भिस्तु लभेन्मन्त्री सुसंयतः ।
आज्येन सुखमाप्नोति शुद्धान्नेन धनादिकम् ॥ ८१ ॥

हुतेन परमान्नेन मन्त्री प्रज्ञामवाप्नुयात् ।
रिपवोऽस्य क्षयं यान्ति शुद्धान्नेन हुतेन वै ॥ ८२ ॥

बलिं च पूर्ववद्दद्यात् भूतेशानां त्रिसन्धिषु ।
बलियागं ततः कुर्यात् बलिबिम्बेन मन्त्रवित् ॥ ८३ ॥

पूर्ववत्तण्डुलाद्यैर्वा यथेष्टं मुनिपुङ्गव ।
बिम्बेन बलियागे तु कृते ग्रामस्य वर्धनम् ॥ ८४ ॥

तण्डुलौदनपुष्पैस्तु राजराष्ट्रविवर्धनम् ।
एवमिच्छानुरूपेण बलियागं समाचरेत् ॥ ८५ ॥

---

७८. b : S. A. M. च for तु.
d : S. A. M. पूजयेत् for पूजायां.
८०. a : S. My. सदा for यथा.
c : S. My. होम for होमे.
८२. a : S. मूलेन for हुतेन.
b : S. A. M. V. मंत्री प्रज्ञानमाप्नुयात्.
८३. a : S. कुर्यात् for दद्यात्.
c : S. My. A. M. दानं for यागम्.
८४. c : V. याने for यागे.
८५. d : S. A. M. V. बलियानं for बलियागम्.

पूर्वमेवोदितं चान्यत् नित्यनैमित्तिकादिकम् ।
सर्वं सहैव कर्तव्यं नित्यनैमित्तिकादिकम् ॥ ८६ ॥

(कन्दर्पस्याराधनक्रमः)

कामयागं प्रवक्ष्यामि त्रयोदश्यां विशेषतः ।
कन्दर्पस्य विमानं तु ग्रामादीनां विदिक्षु वै ॥ ८७ ॥

मध्यमे वा मुनिश्रेष्ठ प्राक् प्रत्यग्द्वारमेव वा ।
कोणेषु मकरैर्युक्तमुपरिष्टाच्छुभं महत् ॥ ८८ ॥

कन्दर्पं कारयेत्तत्र पीतवर्णं वृहद्भुजम् ।
रक्तवासः परीताङ्गं रत्नवस्त्रादिभूषितम् ॥ ८९ ॥

विचित्रं मुकुटं शान्तम् उभयांसोपवीतकम् ।
विस्तीर्णोरःस्थलं कान्तं तनुमध्यं कृशोदरम् ॥ ९० ॥

सुकुमारं सुगुप्ताङ्गं पुष्पवाणेक्षुधन्विनम् ।
पञ्चवाणान्वितं कुर्यात् अस्य वै दक्षिणं करम् ॥ ९१ ॥

इक्षुचापान्वितं कुर्यात् वामं कामस्य वै करम् ।
तापिनी मोहिनी चैव मर्दनी च प्रमाथिनी ॥ ९२ ॥

हारिणी चेति पञ्चैताः शराख्याः परिकीर्तिताः ।
वसन्तं पूर्वदिग्भागे दक्षिणे मदनं यजेत् ॥ ९३ ॥

पश्चिमस्यां यजेन्मारं सोममुत्तरतो यजेत् ।
रतिमाग्नेयदिग्भागे वारुणीं नैर्ऋते तथा ॥ ९४ ॥

---

८७. d : S. M. वा for वै.
८८. d : V. नयेत् for महत्.
८९. c : My. रत्नैः वासः for रक्तवासः M. परीधानं for परीताङ्गं.
d : A. S. V. रक्त for रत्न, S. My. M. पुष्पादि for वस्त्रादि.
९१. a : My. सगुप्तङ्गं A. स्वगुप्ताङ्गं for सुगुप्ताङ्गं.
९४. d : S. A. M. वारुणं My. वरुणं for वारुणीं.

वायव्ये च तथोषां तु मकरं रुद्रगोचरे।
ओं क्लीं कामाय नत्यन्तो मन्त्रोऽयं मदनस्य तु ॥ ९५॥

(अश्विनीकुमारयोः आराधनक्रमः)

अश्वियागं ततो वक्ष्ये सर्वरोगविनाशनम्।
ग्राममध्ये तथा दिक्षु ग्रामस्याभिमुखं शुभम् ॥ ९६ ॥

चतुरश्रायतं वापि तथा वृत्तायतं तु वा।
अस्रकं तु भवेत्तच्च परिवारैः समन्वितम् ॥ ९७ ॥

आयुर्वेदो धनुर्वेदो तथा धन्वन्तरिर्द्विजः।
आत्रेयश्च चिकित्सा च रोहिणी दीपिनी तथा ॥ ९८ ॥

विशाला त्वष्टमी प्रोक्ता विद्धि दिक्षु क्रमात् स्थिताः।
अश्विनोस्तु चतुर्दश्यां महायागं तु कारयेत् ॥ ९९ ॥

आसीनौ सर्वदा कार्यौ न्यसेदश्वं तदग्रतः।
प्रासादस्य च कोणेषु न्यसेदश्वचतुष्टयम् ॥ १०० ॥

त्रिपत्रपुष्पसंकाशौ बालरूपौ शुभाननौ।
पीतवस्त्रधरौ कान्तौ तथा पीतस्रगुज्वलौ ॥ १०१ ॥

अश्विनौ तत्र कुर्वीत सहितौ ब्रह्मचारिणौ।
मुकुटादिविचित्राङ्गौ पुष्पमालोपशोभिनौ ॥ १०२ ॥

---

९५. a : V. तु for च, S. My. M. च for तु.
९६. a : V. कोषे इतः आरभ्य अध्यायसमाप्तिपर्यन्तं ग्रन्थपातः
A. अश्व० for अश्वि०.
९७. c : S. असकं My. अग्रकं M. अश्मकं for अस्रकम्.
१००. b : My. A. तथाग्रतः for तदग्रतः.
१०१. b : My. बहु० A. बाहु० for बाल.
d : My. विध for पीत०, S. V. समु for स्रगु०.

मन्त्रस्तु'ओं नमोऽश्विभ्यामि'ति संकीर्तितस्तयोः ।

(चन्द्रस्याराधनक्रमः)

चन्द्रयागमथो वक्ष्ये सर्वसस्य समृद्धिदम् ॥ १०३ ॥

सोमस्यायतनं कुर्यात् ग्रामादीनां तथोत्तरे ।
प्राक् प्रत्यग्द्वारमेव स्यात् अन्यदिग्द्वारमेव वा ॥ १०४ ॥

मृगाङ्कमेव कुर्वीत प्रासादं मुनिपुङ्गव ।
सिताभं रक्तवस्त्रं तु द्विभुजं शान्तिविग्रहम् ॥ १०५ ॥

पद्मपत्रायताक्षं च कुमुदस्रग्विभूषितम् ।
प्रासादाग्रे मृगस्थानं कुर्यादिन्यांस्ततो न्यसेत् ॥ १०६ ॥

रोहिणीं रेवतीं ज्योत्स्नां ह्लादिनीं वैकृतीं तथा ।
वायवीं वारुणीमैन्द्रीं क्रमाद्दिक्षु निवेशयेत् ॥ १०७ ॥

ओं सुं सोमाय नत्यन्तो मन्त्रस्सोमस्य कीर्तितः ।
पञ्चदश्यां विशेषेण यागं कुर्यान्महामतिः ॥ १०८ ॥

(अग्न्यादिदेवानामालयबिम्बविषये सामान्यविधिः)

आसां पञ्चदशानां तु वह्न्यादीनां समासतः ।
देवतानां वदाम्यद्य यद्यत्साधारणं मुने ॥ १०९ ॥

वृत्तं वा चतुरश्रं वा प्रासादं दीर्घमेव वा ।
प्रासादस्यानुरूपेण प्रतिमां कारयेत्पुनः ॥ ११० ॥

एकहस्तान्न च न्यूनां पञ्चहस्तान्न चाधिकाम् ।
प्रतिमां नवतालेन दशतालेन वा पुनः ॥ १११ ॥

---

१०४. d : S. V. M. च for वा.
१०६. a : My. पद्मपत्रविशालाक्षं.
१०८. a : A. सु for सुं.
११०. b : A. प्रासादसहितं तदा.

शैलजां मणिजां तत्र दारुजां लोहजां तु वा ।
बहुबेरविधानेन सर्वलक्षणसंयुतम् ॥ ११२ ॥

मूलार्चलिक्षणं ह्येतत् कर्मार्चलिक्षणं शृणु ।
षडङ्गुलान्न च न्यूनं नाधिकं द्वादशाङ्गुलात् ॥ ११३ ॥

पूजाबिम्बं तु कर्तव्यं सर्वत्रैव विचक्षणः ।
एवं वै बालबिम्बस्य लक्षणं समुदाहृतम् ॥ ११४ ॥

तीर्थयात्राबिम्बस्याप्येवमेव हि लक्षणम् ।
एकतालान्न च न्यूनं चतुस्तालान्न चाधिकम् ॥ ११५ ॥

प्रोक्तमुत्सवबिम्बस्य लक्षणं मुनिपुङ्गव ।
एवं वै स्नपनार्चायां लक्षणं समुदाहृतम् ॥ ११६ ॥

लक्षणं यत्पुरा प्रोक्तं तद्वत् सर्वत्र कारयेत् ।

(बिम्बपीठवैशिष्ट्यनिर्देशः)

पूजापीठं तु सर्वासां ब्रह्मस्थाने प्रकल्पयेत् ॥ ११७ ॥

दैविके मानुषे वापि देवताग्रेऽपि शोभनम् ।
एकमेखलकं वापि द्विमेखलमथापि वा ॥ ११८ ॥

त्रिमेखलं वा सर्वत्र चतुरश्रं तु वायतम् ।
आयतं बिम्बबाहुल्यात् पीठं तस्य सुसम्मतम् ॥ ११९ ॥

अहीनं तालमानं तु विस्तारं देशसम्पदम् ।
हस्तान्तमुच्छ्रयं विद्यात् आरभ्य चतुरङ्गुलात् ॥ १२० ॥

---

११२. a : A. M. ताम्र for तत्र.
११४. d : A. मुनिपुङ्गव for समुदाहृतम्.
११८. b : M. A. अति for अपि.
११९. b : My. A. न चायतं for तु वायतं.
१२०. b : S. विस्तारा for विस्तारं, My. A. सम्पदा for सम्पदम्.

(अग्न्यादिदेवानां होमासनविषयविवेक:)

समिद्भिश्च प्रसूनैश्च धूपैर्दद्यात्तथैव च ।
बीजैरन्यैर्घृतेनैव मोक्षविघ्नप्रशान्तये ॥ १२१ ॥

होमं कुर्याद्यथान्यायं नित्यनैमित्तिकादिषु ।
समिद्भिश्च घृतैर्बीजैः धूपैरन्यैश्च भुक्तये ॥ १२२ ॥

एताभिस्तिसृभिश्चैव जन्मर्क्षे होममाचरेत् ।
जन्मन्येवं कृते होमे केवले चायुराप्नुयात् ॥ १२३ ॥

जनार्दनेतरेषां तु देवतानां यथाक्रमम् ।
चतुर्दशानां वक्ष्यामि यत्तत् साधारणं मुने ॥ १२४ ॥

सर्वासामासनं पद्मं स्थितानां पीठमेव च ।
आसीनानां तु सर्वासां कुर्यात् सिंहासनं तु वा ॥ १२५ ॥

स्वयानं यानयुक्तानां यस्य यत्प्रथितं द्विज ।

(अग्न्यादिदेवानामालयमन्त्रविषये सामान्यनिर्देशः)

साधारणं तु सर्वासां सालगोपुरमण्डपाः ॥ १२६ ॥

प्रतिष्ठायां तु 'मूले'न सर्वकर्माणि कारयेत् ।
'मूल'मन्त्रेण पूजायामावाहोद्वासनं भवेत् ॥ १२७ ॥

(अग्न्यादीनामुत्सवक्रमः)

अन्यत्सर्वं सदा प्रोक्तमुत्सवस्य द्विजोत्तम ।
ध्वजं च कारयेत्तत्र तत्तद्वाहनलाञ्छितम् ॥ १२८ ॥

अत्र मन्त्रोऽङ्गदेवानां स्वनाम्नैव विधीयते ।
उत्सवे सर्वकर्माणि 'मूल'मन्त्रेण कारयेत् ॥ १२९ ॥

---

१२१. b : My. A. ०दध्ना for दद्यात्.
१२२. d : S. M. भक्तये for भुक्तये.
१२५. b : A. वा for च.

सर्वदेवेभ्यो नमः, सर्वासुरेभ्यो नमः,
सर्वपिशाचेभ्यो नमः, सर्वनागेभ्यो नमः,
सर्वयक्षेभ्यो नमः, सर्वभूतेभ्यो नमः,
सर्वसत्त्वेभ्यो नमः ।

ग्रामादिषु बलिं दद्यात् मन्त्रैरेतैर्यथाक्रमम् ।
पूर्वादिमध्यपर्यन्तम् अन्यत्पूर्ववदाचरेत् ॥ १३० ॥

भद्रकं पूर्ववत्कृत्वा पुष्पयागं समाचरेत् ।
सर्वासां भद्रकं प्रोक्तं पवित्रारोहणेऽपि च ॥ १३१ ॥

ग्रन्थयो 'हृदयाद्यै'स्तु पूजनीयाः पुनः पुनः ।
अत्र सर्वाणि कर्माणि 'मूल'मन्त्रेण कारयेत् ॥ १३२ ॥

स्नपने 'मूल'मन्त्रेण कारयेदभिषेचनम् ।
सर्वमन्यत् स्वमन्त्रेण विशेषेष्वितरेषु च ॥ १३३ ॥

महाहवि'र्हृदा'दद्यात् 'सर्व'मन्'त्रास्त्र'विद्यया ।

(सालादिद्वारपालनिर्देशः)

द्वारपान् सम्प्रवक्ष्यामि सालमण्डपसद्मसु ॥ १३४ ॥

सर्वप्रियः सर्वसमः सर्ववाञ्छितवित्तदः ।
सर्वतोवहितः सर्वकर्मकृतसर्ववल्लभः ॥ १३५ ॥

---

१३०. c : S. मन्त्र for मध्य.
१३१. d : S. ०रोपणे for रोहणे.
१३३ c : A. समं मन्त्रं for स्वमन्त्रेण.
१३४. d : A. स्याल M. बाल for साल.
१३५. b : A. वित्तमः for वित्तदः.
c : S. My. सर्वतोपहितः for सर्वतोवहितः.

सर्वसिद्धिस्तु सर्वेष्टो द्वारपालाः उदाहृताः ।
आरभ्य मण्डपे पूर्वात् सालेष्वारण्यसंवृतेः ॥ १३६ ॥

शङ्खपद्मनिधी द्वास्थौ पूर्वप्रासादपालकौ ।
स्यातामन्येषु सर्वेषु न्यसेदस्त्रं महामुने ॥ १३७ ॥

अङ्गानि कल्पयेदासां बीजैरेव समाहितः ।
द्वितीयस्वरसंयुक्तं बीजं हृदयमुच्यते ॥ १३८ ॥

चतुर्थेन स्वरेणैव युक्तं बीजं शिरो भवेत् ।
षष्ठेन तु शिखा ज्ञेया कवचं द्वादशेन तु ॥ १३९ ॥

चतुर्दशेन नेत्रं तु षोडशेनास्त्रमुच्यते ।
स्वमूर्त्यवयवैः युक्ताः हृदयाद्यास्तु देवताः ॥ १४० ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
सर्वदेवतास्थापनविधिर्नाम अष्टाविंशोऽध्यायः

---

१३६. b : A. द्वारपाल उदाहृतः.
d : A. स्यालेष्वारण्यसन्मितेः.
१३९. c : A. शिरो ज्ञेयं for शिखा ज्ञेया.
A. श्री पाञ्चरात्रे महोपनिषदि०.

# एकोनत्रिंशोऽध्यायः

## [निषेकादिश्मशानान्तसंस्कारनिरूपणाध्यायः]

गौतमः—

गर्भाधानादिकर्माणि दीक्षितानां यथाक्रमम् ।
इदानीं मुनिशार्दूल ब्रूहि संक्षेपतो मम ॥ १ ॥

(गर्भाधानसंस्कारः)

नारदः—

श्रूयतां सावधानेन गर्भाधानादिकं द्विज ।
ऋतुस्नातां तथा शुद्धां पत्नीं रात्रौ शुभे दिने ॥ २ ॥
गच्छेत्प्रत्यङ्मुखो मन्त्री 'विष्णुर्योनिमि'तीरयन् ।

(पुंसवनसंस्कारः)

ततः पुंसवनं कुर्यात् तृतीये मासि वासरे ॥ ३ ॥
न्यग्रोधस्याङ्कुरं छित्त्वा तस्याः नासापुटे पुनः ।
सेचयेद्दक्षिणे सम्यक् 'इदं विष्णुरि'ति ब्रुवन् ॥ ४ ॥

(सीमन्तसंस्कारः)

चतुर्थे मासि सीमन्तं पञ्चमे वाष्टमेऽपि वा ।
होमं 'पुरुष'सूक्तेन कृत्वाज्यसमिदोदनैः ॥ ५ ॥
ततो 'व्याहृति'भिर्हुत्वा शलल्या तु त्रिशुक्लया ।
सीमन्तोन्नयनं कुर्यात् क्रमाद्'व्याहृति'भिस्त्रिभिः ॥६॥

---

१. c : V. ये नराः for इदानीम्.
२. b : V. भो for ०कम्.
३. c : S. तत्र for ततः.
४. a : S. My. A. V. क्षुत्वा for छित्त्वा.
५. b : A. चाष्टमे for वाष्टमे.

(जातकर्मसंस्कारः)

जातकर्म ततः कुर्यात् जाते पुत्रे समाहितः ।
यवव्रीहिसुवर्णञ्च मधुन्येवावपुष्य तु ॥ ७ ॥

न्यसेत्तत्पुत्रकास्ये तु त्रिभि'र्व्याहृति'भिः क्रमात् ।
तस्य मूर्ध्नि समाघ्राय 'प्रणवे'न समाहितः ॥ ८ ॥

(गुह्यनामकरणसंस्कारः)

नाम गुह्यं ततो दत्वा

(स्तनपानसंस्कारः)

पाययेत्स्तन्य'मो'मिति ।

(जातकस्य रक्षार्थं होमः)

सायं प्रातस्तु रक्षार्थं तदा प्रभृति होमयेत् ॥ ९ ॥

(जन्माशौचावधिः)

दशरात्रं तदाशौचं दीक्षितस्य विधीयते ।

(नामकरणसंस्कारः)

एकादशेऽह्नि कृत्वाथ नामकर्मास्य कारयेत् ॥ १० ॥

(उपनिष्क्रमणसंस्कारः)

उपनिष्क्रमणं कुर्यात् चतुर्थे मासि मन्त्रतः ।

(भानुनिरीक्षणविधिः)

'तच्चक्षुरि'ति वै भानुं कुमारस्य निरीक्षणम् ॥ ११ ॥

---

७. d : V. ०द्विहृष्य A. विपृष्य for ०वपुष्य.
८. a : My. त्यजेत् पृथुकां सेतु.
b : A. M. S. महा for त्रिभिः.
c : V. ०दाय for ०घ्राय.
९. a : My. शुद्धं for गुह्यम्.
१०. a : A. My. V. तथा for तदा.
११. a : My. निष्क्रामणं for निष्क्रमणम्.

(अन्नप्राशनसंस्कारः)

षष्ठेऽन्नप्राशनं कुर्यात् मासे हुत्वा तु पूर्ववत् ।

(चूडाकर्मसंस्कारः)

संवत्सरे द्वितीये तु तृतीये वाथ मन्त्रवित् ॥ १२ ॥

चूडाकर्म तु कुर्वीत होमं कृत्वा तु पूर्ववत् ।
शिखास्थापनमेवं तु

(उपनयनसंस्कारः)

पश्चादुपनयेच्छुभम् ॥ १३ ॥

पञ्चमे सप्तमे वापि नवमे वा तु वत्सरे ।
ऋग्भिः 'पुरुषसूक्त'स्य 'विष्णुसूक्त'स्य च क्रमात् ॥ १४ ॥
'सप्तव्याहृति'भिश्चापि स्वाहान्ताभिः पृथक् पृथक् ।
समिद्भिश्च घृतेनैव तिलैरन्यैश्च होमयेत् ॥ १५ ॥

ततस्तु मेखलां बध्वा त्रिगुणां जननिर्मिताम् ।
'विष्णोः कर्माणि' मन्त्रेन गुरुरग्नेः समीपतः ॥ १६ ॥

दद्याद्यज्ञोपवीतं तु त्रिभि'र्व्याहृति'भिस्ततः ।
ततः कृष्णाजिनं दद्यात् 'पृथिव्यां विष्णुरि'त्यृचा ॥ १७ ॥

उपवीतवदायामं शुभरोमान्वितं गुरुः ।
दद्याद्दण्डं तु पालाशं 'यो मे दण्ड' इति ब्रुवन् ॥ १८ ॥

---

१२. a : V. मासे for कुर्यात्.
b : S. My. A. M. कृत्वा for हुत्वा.
१३. a : V. A. जटामकुट for चूडाकर्म.
१६. c : A. कर्मर्णि for कर्माणि.
d : V. गुरुणाग्नेः for गुरुरग्नेः.
१७. a : V. कुर्यात् for दद्यात्.
c : S. कृष्णाजिनं ततो दद्यात्.
१८. a : V. ०दाकारं for ०दायामं.
b : My. शुद्धः for शुभ०.

गायत्रीं शिक्षयेत् पश्चात् सवितुः परमार्थवित् ।
ततो व्रतानि चत्वारि कुर्याद्धोमपुरस्सरम् ॥ १९ ॥

(वेदाभ्यासः)

एवं भागवतो वेदमुपनीतोऽभ्यसेद्गुरोः ।

(दीक्षापाञ्चरात्राभ्यासक्रमौ)

ततस्तु दीक्षां संप्राप्य पञ्चरात्रं समभ्यसेत् ॥ २० ॥

(समावर्तनसंस्कारः)

क्रमादभ्यस्तविद्यस्तु समावर्तनमाचरेत् ।
होमं च पूर्ववत् कृत्वा कलशैरभिषेचयेत् ॥ २१ ॥

(विवाहसंस्कारः)

अथोपयमनं कुर्याल्लब्धकन्यः सुसंयतः ।
'पृथिव्यां विष्णु'रित्यस्याः पाणिं संगृह्य दक्षिणम् ॥ २२ ॥
बहिर्गृहेऽग्नौ जुहुयात् समिदाज्यौदनैः क्रमात् ।
ऋग्भिः 'पुरुषसूक्त'स्य 'विष्णुसूक्त'स्य च क्रमात् ॥ २३ ॥
'सप्तव्याहृति'भिश्चैव 'प्रणवे'न च पूर्ववत् ।
लाजहोमं ततः कुर्यात् कन्यया कारयेत् वरः ॥ २४ ॥
त्रिभिः 'व्याहृति'भिश्चैव कृत्वा वह्निप्रदक्षिणम् ।
स्पृष्ट्वा ग्रावाणशकलमासी...... ॥ २५ ॥

---

२०. b : V. उपनीते for उपनीतो.
२१. a : S. एवं My. A. M. यावत् for क्रमात्.
२२. d : S. My. A. M. यदैषीति च दक्षिणे.
२३. b : V. समिदाद्योदनैः क्रमात्.
२४. d : My. A. V. कारयेत् कन्यया वरः, S. पिता for वरः.
२५. c : S. दृष्ट्वा for स्पृष्ट्वा.

सङ्गृह्य पाणिना तद्वत् प्रदक्षिणमथाचरेत् ।
विवाहमेवं कृत्वा तु

(वह्न्याधानादिकम्)

ततः आधाय पावकम् ॥ २६ ॥

विष्णुमेव यजेत्तेन वह्निना ह्यग्निपूजने ।

(वानप्रस्थगमनम्)

ततः कालान्तरे प्राप्ते वानप्रस्थाश्रमं व्रजेत् ॥ २७ ॥

(सन्यासस्वीकरणम्)

ततस्तु सन्यसेत् पश्चात्

(शरीरत्यागः)

त्यजेद्योगेन विग्रहम् ।

एवं भागवतो योगी वासुदेवपरायणः ॥ २८ ॥
भगवद्वंशजातस्तु कुर्यादन्यो न चार्हति ।

(दाहसंस्कारविधिः)

मृते भागवते तस्य संस्कारं शृणु सुव्रत ॥ २९ ॥
कृत्वा संनिवसं तत्र शाययित्वा तु कार्पटे ।
आदाय गत्वा भवनात् स्थापयेत्पितृकानने ॥ ३० ॥
ततः काष्ठैः चितिं कृत्वा समारोप्य शवं क्रमात् ।
सुवर्णशकलान् सर्पिः दधि बीजानि तण्डुलान् ॥ ३१ ॥

---

२६. d : V. तथा for ततः, M. यायत् for आधाय.
२७. d : S. My. A. भवेत् M. भजेत् for व्रजेत्.
२८. b : M. भोगेन for योगेन.
२९. d : S. सर्वयः for सुव्रत.
३०. a : S. My. A. कृत्वा संदिगतं प्राणैः.
c : V. अच्छाद्य for आदाय.
d : S. पैतृकासने for पितृकानने.

क्षिप्त्वा मुखस्य द्वारेषु 'प्रणवे'ण दहेत्ततः ।

(बलिदानास्थिसञ्चयादिक्रमः)

ततो गृहबहिर्द्वारि निकटस्थे श्मसन्निधौ ॥ ३२ ॥

बलिं दत्त्वा त्रिरात्रं तु चतुर्थेऽहनि तत्त्यजेत् ।
तस्मिन् संचयनं कृत्वा ततस्त्वेकादशेऽहनि ॥ ३३ ॥

एकोद्दिष्टस्य मार्गेण श्राद्धं कृत्वा यथाविधि ।
मासि मासि ततश्चैवं परिपूर्णे तु वत्सरे ॥ ३४ ॥

श्राद्धं कृत्वा यथान्यायं योजयेद्वैष्णवे पदे ।
वासुदेवे परे धाम्नि दीक्षायां तु यथा तथा ॥ ३५ ॥

(वार्षिकश्राद्धकालः)

ततः श्राद्धं च कुर्वीत तत्तिथौ वत्सरे दिने ।

(अत्रानुक्तविधीनां वैदिकमार्गेण सम्पादनीयत्वम्)

निषेकादिषु सर्वत्र यद्यदुक्तमविस्तरम् ॥ ३६ ॥

वेदोदितेन मार्गेण तत्तत्कार्यं विपश्चिता ।

(विष्णवतिरिक्तयागादीनां सम्पादननिषेधः)

न च यागान्तरं कुर्यात् विष्णुयागाद्विना सदा ॥ ३७ ॥

विष्णुमेव यजेदेष योगी भागवतोऽनिशम् ।
वेदोदितैस्तु संस्कारैः संस्कृतो वापि केवलैः ॥ ३८ ॥

---

३३. a : V. च for तु.
 b : V. यजेत् for त्यजेत्.

३६. a : S. तु for च.
 b : S. My. M. प्रतिसंवत्सरं दिने.

३८. a : My. ०मेष for ०मेव, ०देत for ०देष.
 d : My. A. M. ०पिच for वापि.

(पाञ्चरात्रस्य वैदिकत्वप्रतिपादनम्)

अत्र मन्त्रास्तु ये केचित् पञ्चरात्रे प्रकाशिताः ।
ते सर्वे वैदिकाः ज्ञेयाः रहस्यं वैदिकं त्विदम् ॥ ३९॥

पाञ्चरात्रमिति ख्यातं वेदाध्वप्रकटीकृतम् ।
एतद्रहस्यं परमं ज्ञानसर्वस्वमीरितम् ॥ ४० ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां
निषेकादिश्मशानान्तसंस्कारविधिर्नाम एकोनत्रिंशोऽध्यायः

---

४०. b : S. A. M. वेदार्थ for वेदाध्व.
c : S. My. A. M. प्रकटं for परमम्.

# त्रिंशोऽध्यायः

## [पञ्चकालनिरूपणाध्यायः]

**गौतमः—**

समाचक्ष्व मुनिश्रेष्ठ पञ्चकालविनिर्णयम् ।
यज्ज्ञात्वा मुच्यते जन्तुः जन्मसंसारबन्धनात् ॥ १ ॥

(अभिगमनादिपञ्चकालनामकीर्तनम्)

**नारदः—**

शृणुष्वावहितो ब्रह्मन् पञ्चकालविनिर्णयम् ।
अथाभिगमनाख्यस्तु कालः प्रथम उच्यते ॥ २ ॥

अथोपादानसंज्ञस्तु द्वितीयः काल उच्यते ।
इज्याकालस्तृतीयस्तु स्वाध्यायाख्योऽन्य उच्यते ॥ ३ ॥

पञ्चमो योगकालस्तु पञ्चकाला उदाहृताः ।

(अभिगमनकालनिर्देशः)

आरभ्य शयनात् प्रातः यावत्पूर्वावसानकम् ॥ ४ ॥

कर्म भागवतः कुर्यात् यदा नित्यमतन्द्रितः ।
एष कालाभिगमनः

(उपादानकालनिर्देशः)

उपादानाख्य उच्यते ॥ ५ ॥

---

१. c : My. विज्ञात्वा for यज्ज्ञात्वा.
२. d : My. मुच्यते for उच्यते.
४. a : My. याम for योग.
   d : A. My. पूजा for पूर्वा°.
५. b : S. यथा for यदा.

यदासौ देवपूजार्थं सम्भाराण्याहरिष्यति ।
तदुपादानकालस्तु तत्परः काल उच्यते ॥ ६ ॥

(इज्याकालनिर्देशः)

यजेद्यदासौ देवेशम् इज्याकालः स उच्यते ।

(स्वाध्यायकालनिर्देशः)

अध्यापनं वाऽध्ययनं जपं भागवतो यदा ॥ ७ ॥
कुर्यात् स्वाध्यायकालोऽसौ कीर्तितो मुनिपुङ्गव ।

(योगकालनिर्देशः)

यदा भागवतश्रेष्ठो योगं योगी च योगवित् ॥ ८ ॥
स योगकालो विज्ञेयः

(अष्टाङ्गयोगकथनप्रतिज्ञा)

शृणु योगमतः परम् ।
योगोऽष्टाङ्गस्तु विज्ञेयो योगिभिर्भगवन्मयैः ॥ ९ ॥

(यमाद्यङ्गकथनप्रतिज्ञा)

अङ्गान्यपि यमादीनि तानि वक्ष्यामि तत्त्वतः ।

(दशयमानां परिगणनम्)

आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् ॥ १० ॥
दानं प्रसादो माधुर्यं मार्दवं च यमा दश ।

(दशनियमानां परिगणनम्)

शौचमिज्या तपः सत्यं स्वाध्यायोपस्थनिग्रहौ ॥ ११ ॥

---

६. a : V. यदसौ for यदासौ.
b : My. V. A. संभाराणि शुभानि च.
d : My. A. M. तत्परं for तत्परः.
८. b : M. सत्तम for पुङ्गव.
९. b : S. यतं वरम् for ०मतः परम्.
११. b : My. आर्दवम् for मार्दवम्.

व्रतोपवासौ मौनं च ध्यानं च नियमा दश ।

(आसनस्य लक्षणम्)

प्रमाणयुक्तमचलं यथारुचि सुखप्रदम् ॥ १२ ॥

योगिनामासनं प्रोक्तं योगसंसिद्धिकारणम् ।

(प्राणायामस्य लक्षणम्)

पूरणाद्रेचनाद्वायोः रोधनाद्वा च यः श्रमः ॥ १३ ॥

भवेत्प्राणकृतः पुंसां प्राणायामः स उच्यते ।

(प्राणायामसम्पादनविधिः)

प्रथमं पूरयेन्नाडीं वायुना रेचयेत्ततः ॥ १४ ॥

ततस्तु स्तम्भयेद्वायुं क्रमो ह्येषः प्रकीर्तितः ।

एते निरोधमात्रास्तु आलम्बनगुणाः स्मृताः ॥ १५ ॥

सालम्बनश्चतुर्थोऽन्यो बाह्यान्तर्विषयः स्मृतः ।

(प्रत्याहारलक्षणम्)

शब्दादिष्वनुरक्तानि ग्राह्याण्यक्षाणि योगवित् ॥ १६ ॥

कुर्याच्चित्तानुकारीणि प्रत्याहारः प्रकीर्तितः ।

(धारणायाः लक्षणम्)

शुभे ह्येकत्र विषये चेतसो यच्च धारणम् ॥ १७ ॥

निश्चलेन तु योगीन्द्रैर्धारणा तु समीरिता ।

(ध्यानस्य लक्षणम्)

पौनः पुन्येन यत्रैव विषये सैव धारणा ॥ १८ ॥

---

१२. b : My. A. स्नानं for ध्यानम्.
    c : V. मध्यप्रमाणमचलम्, S. बध्वाप्रमाण० for प्रमाणयुक्त०.

१३. b : S. लक्षणम् for कारणम्.
    d : A. स्तम्भनात् for रोधनात्, V. पि for च.

१४. a : A. जयः for कृतः.

१६. d : S. My. A. नाकम्बनमिति स्मृतम्.

१८. b : My. धारणा सा उदाहृता.

ध्यानमित्युच्यते ब्रह्मन् सदा भागवतैर्द्विजैः ।

(समाधिलक्षणम्)

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ॥ १९ ॥

मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ।

(योगाङ्गाभ्यासफलम्)

कथितानि तवैतानि योगाङ्गानि द्विजोत्तम ॥ २० ॥

यथाशक्त्यभ्यसन्नेवं मन्त्री नित्यमतन्द्रितः ।

महानन्दमवाप्नोति महतीमपि सम्पदम् ॥ २१ ॥

(ग्रन्थोपसंहारः)

एवमुक्तमृषे सम्यक् पाञ्चरात्रं मयाधुना ।

न शक्यं सकलं वक्तुं महत्त्वादस्य सुव्रत ॥ २२ ॥

अपेक्षितमनुक्तं यदस्मिन् तन्त्रे तु कुत्रचित् ।

आददीताविरुद्धं च अनेनैवान्यतोऽपि वा ॥ २३ ॥

इत्थमुक्त्वा सुरमुनिस्तत्रैवान्तरधीयत ।

ऋषिर्दृष्ट्वा तदाश्चर्यं गौतमो विस्मयान्वितः ॥ २४ ॥

पूजयित्वा तु तं पश्चात् एतन्निष्ठोऽभवत्तदा ।

स्वशिष्यान् ग्राहयामास दीक्षितान् वैष्णवोत्तमान् ॥ २५ ॥

---

१९. c : S. A. M. कलना for कल्पना.
२०. a : A. My. V. ज्ञान for ध्यान.
२२. a : S. My. A. M. मया for ऋषे.
b : S. My. A. M. तवा for मया.
२३. c : My. A. आदिपादविरुद्धं चेत्.
२४. a : A. स तु S. तु स for सुर.
२५. d : S. My. वैष्णवोत्तमः for वैष्णवोत्तमान्.

तेऽप्येतन्मतमास्थाय त्वयजन् विष्णुमव्ययम् ।

(नारदीयसंहितामहिम्नः कीर्तनम्)

एतत्पवित्रं पापघ्नम् एतत् पुण्यतमं महत् ॥ २६ ॥

सर्वदुःखप्रशमनं सुखदं पापनाशनम् ।
तन्त्रेणानेन संपूज्य सर्वान् कामान् अवाप्नुयात् ॥ २७ ॥

यस्मिन्ननेन मार्गेण पूजितो विष्णुरव्ययः ।
तद्राजा विजयी भूत्वा सार्वभौमो भविष्यति ॥ २८ ॥

जनाः सर्वे तु सुखिनः सस्यपूर्णा वसुन्धरा ।
उपद्रवैस्तु रहिता वर्धते तु दिने दिने ॥ २९ ॥

अनेन नारदीयेन तन्त्रेण द्विजसत्तम ।
पूजयेद्देवदेवेशं पञ्चरात्रेण सिद्धये ॥ ३० ॥

(भृगोः तिरोभावः)

एवमुक्त्वा तु वै सर्वं भृगुरन्तरधीयत ।

(अत्रिणा पाञ्चरात्रानुसारं विष्णोः आराधनम्)

अत्रिस्तदाप्रभृत्येवमिष्ट्वा विष्णुं सनातनम् ॥ ३१ ॥

भूतं भव्यं भविष्यं च सकलज्ञानमाप्तवान् ।
आस्थाय वैष्णवीं भक्तिं मुनीनामधिकोऽभवत् ॥ ३२ ॥

इति श्रीपाञ्चरात्रे नारदीयसंहितायां कालाध्यायो नाम त्रिंशोऽध्यायः

समाप्ता चेयं नारदीयसंहिता

शुभमस्तु

---

२९. a : S. My. A. M. द्विजाः for जानाः, S. अपि for तु.
३०. b : V. पुङ्गव for सत्तम.
३२. a : A. भूतभव्यभविष्यं च.
d : M. अधिपो० for अधिको.
My. पञ्चकालाध्यायः for कालाध्यायः.

# परिशिष्टम्

[विंशेऽध्याये V. काशे ४६ श्लोकसंख्यात्मकः पाठः अधिकः दृश्यते। अधिके पाठे श्लोकसंख्या १ तः प्रारभ्य १३. b : पर्यन्तं, पुनः श्लोक २९ तः प्रारभ्य श्लोकसंख्या ४० पर्यन्तं दृश्यमानः पाठः प्रायः अस्मिन्नेव रूपे पारमेश्वर-संहितायाः १४ अध्याये उपलभ्यते। अन्ये च अवशिष्टाः अत्रस्थाः श्लोकाः अंशतः पारमेश्वरसंहितास्थपाठेन सह साम्यं भजन्ते। इदमेव कारणं यत् अयं निम्नलिखितः पाठः मूले न स्वीकृतः।] पाठश्च—

त्रिविधं स्नपनं प्रोक्तं चतुर्थं स्नपनं शृणु।
अष्टोत्तरशतैः कुम्भैरभिषेकं वदामि ते। १॥

चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते।
कोष्ठकानां भवन्त्यत्र चतुर्न्यूनं शतद्वयम्॥ २॥

मध्ये पङ्क्तिचतुष्कं तु संस्थाप्य परिमार्जयेत्।
एकैकं बाह्यविथये स्थापयेत्तु चतुष्टयम्॥ ३॥

तत्रापि कोष्ठकानां तु कलशस्थापनार्थकम्।
संस्थाप्याष्टोत्तरशतं शिष्टांस्तु परिमार्जयेत्॥ ४॥

दिक्षु कोष्ठेषु कलशान् न्यस्य द्रव्याणि निक्षिपेत्।
विन्यसेद्रत्ननिचयं मध्ये कुम्भचतुष्टये॥ ५॥

प्राङ्मध्यसूत्रदक्षिणतः कलशे मौक्तिकं द्विज।
एतद्दक्षिणदिक्संस्थे वज्रं गोमेदकं क्रमात्॥ ६॥

इन्द्रनीलं पुष्यरागं पश्चिमस्थे द्वयं न्यसेत्।
ब्रह्मरागं चन्द्रकान्तं सोमदिक्स्थे द्वये यथा॥ ७॥

प्राङ्मध्यसूत्रोत्तरतो विद्रुमं कलशे द्विज।
एवं द्विषट्ककुंभानां मध्यतस्तद्दिगष्टके॥ ८॥

प्रतिदिक्कलशानां तु द्विषट्कं मुनिसत्तम ।
तेषां मध्ये स्थिते कुम्भचतुष्के प्राग्दिगदितः ॥ ९ ॥
अर्घ्यं पाद्यं तथाचामं पञ्चगव्यं तु विन्यसेत् ।
विदक्स्थितेषु कुम्भेषु न्यसेन्मध्ये चतुष्टये ॥ १० ॥
तिलोदकं पञ्चगव्यमक्षतं त्वीशपश्चिमे ।
शेषांश्चान्यांश्चतुष्षष्टि पुण्यगन्धोदकेन तु ॥ ११ ॥
अर्चयेत्कलशानेतान् वासुदेवाधिदैवतम् ।
अर्घ्यादिसर्वरत्नान्तमुद्धारक्रम इष्यते ॥ १२ ॥
चतुर्थस्नपनं ख्यातं परसंज्ञं वदामि ते ।

(परस्नपनार्थं कलशविन्यासप्रकारः)

मण्डपस्य तु विप्रेन्द्र प्राग्भागमवलम्ब्य च ॥ १३ ॥
स्वीकृत्य प्राक्पदप्रत्यक् दद्यात्सूत्रचतुष्टयम् ।
दक्षिणोत्तरगं सूत्रपञ्चकं विनिवेशयेत् ॥ १४ ॥
एवं कृते भवन्त्यत्र पदानि द्वादश द्विज ।
कोष्ठेषु पीठिकां कृत्वा कलशान् विनिवेशयेत् ॥ १५ ॥
तत्र दक्षिणदिक्पङ्क्तौ कलशे पश्चिमस्थिते ।
पञ्चगव्यं दधि क्षीरं घृतं च विनिवेशयेत् ॥ १६ ॥
ततस्तु मध्यपङ्क्तौ तु तथैव विनिवेशयेत् ।
मधु सर्वौषधिजलं निशाम्बु फलतोयकम् ॥ १७ ॥
तथैवोत्तरपङ्क्तौ तु भवेदेवं चतुष्टयम् ।
गन्धतोयं च पुष्पाम्भो हेमाम्भो रत्नवारि च ॥ १८ ॥
कलशानां द्विषट्कं यत् परमेतदुदाहृतम् ।
द्रव्यन्यासक्रमेणैव तदुद्धारः प्रकीर्तितः ॥ १९ ॥

(सूक्ष्मस्नपनप्रकारः)

पञ्चधा भाजिते क्षेत्रे भागाः स्युः पञ्चविंशतिः ।
बहिः प्रागादियोगेन कलशानां द्विरष्टके ॥ २० ॥

क्षीरं दधि घृतं चैव मधु चैव निवेशयेत् ।
आग्नेयादिषु कोणेषु ऐक्षवं तु [रसं स्मृतम् ?] ॥ २१ ॥

धातुफलोदकं चैव लोहतोयमतः परम् ।
रत्नचन्दनतोयं च क्रमेण विनिवेशयेत् ॥ २२ ॥

इन्द्राग्निमध्यादारभ्य मध्येन्द्रेशावसानके ।
स्थापयेत्क्रमयोगेन रजनीनीरमुत्तमम् ॥ २३ ॥

शुद्धपल्लववार्येव......रेदकम् ? ।
प्रियङ्गुवारितदनु मांसीजलमतः परम् ॥ २४ ॥

सिद्धार्थोदकं चाथ सर्वौषधिजलं ततः ।
पत्रोदकं ततः पश्चात् तदन्तः कलशाष्टके ॥ २५ ॥

प्रागादिपुष्पतोयं च फलबीजोदके त्वथ ।
गन्धोदकं च तदनु हेमरत्नजलं ततः ॥ २६ ॥

पुण्यतीर्थसरित्तोयं केवलं तदनन्तरम् ।
पञ्चगव्यं तु तन्मध्ये दिग्विदिक्षु क्रमात्ततः ॥ २७ ॥

द्रव्यन्यासक्रमेणैव तदुद्धार उदाहृतः ।
एवं क्रमादद्रव्ययुक्तैः कलशैर्द्विजसत्तम ॥ २८ ॥

स्नपनं पञ्चविंशद्भिः सूक्ष्मं स्थूलमथोच्यते ।

(स्थूलस्नपनक्रमः)

चतुर्हस्तं त्रिहस्तं वा क्षेत्रं सार्धद्विहस्तकम् ॥ २९ ॥

द्विहस्तं वा समापाद्य तदर्धं तु द्विधा भवेत् ।
एकेन कर्णिकां कुर्यात् द्वितीयेन द्विरष्टकम् ॥ ३० ॥

दलानां तु ततो ब्रह्म कर्णिकोपरि विन्यसेत्।
कलशानां चतुष्कं तु दिक्चतुष्कं समाश्रितम् ॥ ३१ ॥
पूर्वं तु पुष्पतोयेन गन्धोदेन ततः परम्।
स्वर्णोदेनापरं चान्यत् सर्वरत्नजलेन तु ॥ ३२ ॥
पूर्वपत्रात् समारभ्य यावदीशानगोचरम्।
षोडशान्यान् प्रतिष्ठाप्य तत्रैव कलशान् मुने ॥ ३३ ॥
प्रथमं पञ्चगव्येन केवलेन तु पूरयेत्।
गोमूत्रेण द्वितीयं तु तृतीयं गोमयाम्बुना ॥ ३४ ॥
त्रेताग्निभूतिना विप्र चतुर्थं सोदकेन तु।
गजगोवृषभशृङ्गवल्मीकाख्यमृदा परम् ॥ ३५ ॥
शालिक्षेत्रान्नदीमध्यात् पद्मषण्डाच्च पर्वतात्।
मृद्भिः षष्ठं तु कलशं पूरणीयं ततो द्विज ॥ ३६ ॥
सप्तमं सर्षपांभोभिः सर्वौषधिभिरष्टमम्।
क्षीरेण नवमं विद्धि दध्ना दशममुच्यते ॥ ३७ ॥
घृतेन चैकादशं च मधुना द्वादशं द्विज।
सर्वैस्त्रयोदशं बीजैः फलैः सर्वैश्चतुर्दशम् ॥ ३८ ॥
समस्तधान्यैरपरं सर्वगन्धैस्तु षोडशम्।
दलस्थान् पूर्वमुद्धृत्य द्रव्यन्यासक्रमेण तु ॥ ३९ ॥
पश्चात्तु कर्णिकासंस्थान् तथैव तु समुद्धरेत्।
इति विंशतिभिः कुंभैः स्थूलमेतदुदाहृतम् ॥ ४० ॥

(हरिद्राचूर्णस्नपनक्रमः)

एतेषां कलशानां तु वासुदेवोऽधिदैवतम्।
शालिभिर्तण्डुलैर्वापि खारिमात्रैस्तु पीठिकाः ॥ ४१ ॥

कृत्वा तु पूर्वदिग्भागे कलशानां महामते ।
हरिद्रातण्डुलस्वर्णचूर्णैः कुम्भान्......कान् ? ॥ ४२ ॥

पूरयेन्नवनिर्दोषान् सप्त वा पञ्च वाथवा ।
त्रीनेककुम्भमथवा ते च स्थाप्याः पृथक् पृथक् ॥ ४३ ॥

सापिधानेषु कुम्भेषु सकूर्चेषु समर्चयेत् ।
श्रियं कुंभात् त्य?श्रीसूक्तेनाभिषेचयेत् ॥ ४४ ॥

पूर्णाहुतिर्यथाहोमे चूर्णैः स्नानं तथा प्लवे ।
विष्वक्सेनस्य दत्वा वै मन्त्रेण द्विजपुङ्गव ॥ ४५ ॥

भक्तानां स्थापयेन्मूर्ध्नि चातुर्वर्ण्यक्रमेण तु ।
नृसूक्तेन तु संस्थाप्य तत ऊर्ध्वं तु नित्यवत् ॥ ४६ ॥

अलङ्कृत्य यथान्यायं निवेद्यं तु चतुर्विधम् ।

---

## अनुबन्धः–१

### नारदीयसंहितायां प्रयुक्तानां वैदिकमन्त्राणामकाराद्यनुक्रमः

| मन्त्राः | वैदिकाकरः | नार. सं० अध्यायाः श्लोकाश्च |
|---|---|---|
| 1. अतो देवा अवन्तु न | ऋ. वे. १.२२.१६. | १५-१८४ ; |
| | सा. वे. १६७४. | २३-६३ ; |
| 2. इदं विष्णुः | ऋ. वे. १.२२.१७. | १५-७४ ; |
| | सा. वे. २२२.१६६९. | २०-६३ ; |
| | तै. सं. १, २, १३, १. | २९-४ ; |
| 3. इदमापः प्रवहत | ऋ. वे. १.२३.२२. | १५-७१ ; |
| | १०.९.८. | |
| 4. इमं मे गङ्गे | ऋ. वे. १०.७५.५. | १३-४३ ; |
| | तै. आ. १०.१.१३. | |
| 5. उत्तिष्ठ ब्रह्मणस्पते | ऋ. वे. १.४०.१ | १५-८०, १८४ ; |
| 6. ओषधीश्च | ऋ. वे. १०.९७.१. | १५-७६ ; |
| 7. गन्धद्वाराम् | ऋ. वे. (खि.) ५.८७.९. | २-१० ; |
| 8. चित्रं देवा- | ऋ. वे. १.११५.१. | १५-६६ ; |
| 9. तच्चक्षुः | ऋ. वे. ७.६६.१६. | १८-२९ ; |
| | | २९-११ ; |
| 10. त्वं विष्णो | ऋ. वे. ७.१००.२. | २०-७६ ; |
| 11. दीर्घायुत्वाय | ऋ. वे. ८.५९.७. | १५-७८ |
| 12. द्रुपदादि | यजु. मै. सं. ३.११.१११. | १५-६९ ; |
| 13. धूरसि | तै. सं. कृ. य. १.१.४.४. | १५-७६ ; |
| 14. ध्रुवाद्यौः | ऋ. वे. १०.१७३.४. | १५-१८६ ; |
| 15. परमेष्ट्यात्म | तै. सं. ४.४.६.१. | १५-१८७ ; |
| 16. भद्रं कर्णे- | ऋ. वे. १.८९.८. | १५-६० ; |
| 17. मधुवाता | ऋ. वे. १.९०.६. | १५-६५ ; |
| 18. मानस्तोके | ऋ. वे. १.११४.८. | १५-७० ; |
| 19. मूर्धानं दिवो | ऋ. वे. ६.७.१. | १५-६३ ; |
| 20. या दिव्या | तै. सं. १.४.२२.५. | १५-६४ ; |
| 21. येन | यजु. मै. सं. ४.१४.२४७ | २०-८३ ; |

1243—66

| मन्त्राः | वैदिकाकरः | नार. सं० अध्यायाः श्लोकाश्च |
|---|---|---|
| 22. विश्वतश्चक्षु | ऋ. वे. १०.८१.३. | १५-६१, ७५, ८१, १८७; १९-११८; |
| 23. विष्णुर्योनिम् | ऋ. वे. १०.१८४.१. | २९-३; |
| 24. विष्णोरराट | तै. सं. १.२.१३. | १५-६८, ७१; |
| 25. विष्णोर्नुकम् | ऋ. वे. १.१५४.१ | २०-८३; |
| 26. विष्णोः कर्माणि | ऋ. वे. १. २२.१९. | २९-१६; |
| 27. वेदाहम् | तै. आ. ३.१२.१३. | १५-७५; |
| 28. समिद्ध | ऋ. वे. ६.१५.७. | १५-७७; |
| 29. सोमं राजानम् | ऋ. वे. १०.१४१.३. | १५-६८; |
| 30. हंसः शुचिषद्वसु | ऋ. वे. ४.४०.५. | १५-६७; |
| 31. हिरणमयं | कृ. य. तै. सं. ५.२.७.५. | १५-७३; |
| 32. हिरण्यगर्भ | ऋ. वे. १०.१२१.१. | १५-६५; |

## नारदीयसंहितायां प्रयुक्तसूक्तानां साम्नां च अकाराद्यनुक्रमः

| | | |
|---|---|---|
| 1. पुरुषसूक्तम् | ऋ. वे. ९०.९०.१. | २-५८, ९५; १३-४९; १४-१४३; १५-८०; १९-४५; २०-४२, ४३, ६३; २८-७८; २९-५, १४, २३; |
| 2. रथन्तराख्यसाम | सा. वे. ३.१.१. | १५-७९; |
| 3. विष्णुगायत्री | तै. उ. प्रश्न. ४.२६. | १५-१४९, १६०; |
| 4. विष्णुसूक्तम् | ऋ. वे. १.१५४. | २-२२; २९-१४, २३; |
| 5. वैराजसाम | सा. वे. ४.५.८. | १५-७९; |

## नारदीयसंहितायां वर्णितानां चतुर्मूर्तिमन्त्राणाम् उद्धृतानि स्वरूपाणि

| | अ० | श्लोक. |
|---|---|---|
| 1. ओं नमो भगवते वासुदेवाय | ३. | ३-८; |
| 2. ओं आं नमो भगवते सङ्कर्षणाय | ३. | ७८-७९; |
| 3. ओं अः नमो भगवते प्रद्युम्नाय | ३. | १०१-१०२; |
| 4. ओं नमो भगवते अनिरुद्धाय | ३. | १११-११२; |

## नारदीयसंहितायां वर्णितद्वादशमासाधिपमूर्तिमन्त्राणाम् उद्धृतानि स्वरूपाणि

1. प्रथममासाधिपमन्त्रः—ओं नमो विष्णवे स्वाहा।
2. द्वितीयमासाधिपमन्त्रः—ओं नमो मधुसूदनाय स्वाहा।
3. तृतीयमासाधिपमन्त्रः—ओं नमो त्रिविक्रमाय स्वाहा।
4. चतुर्थमासाधिपमन्त्रः—ओं नमो वामनाय स्वाहा।
5. पञ्चममासाधिपमन्त्रः—ओं नमो श्रीधराय स्वाहा।
6. षष्ठमासाधिपमन्त्रः—ओं नमो हृषीकेशाय स्वाहा।
7. सप्तममासाधिपमन्त्रः—ओं नमो पद्मनाभाय स्वाहा।
8. अष्टममासाधिपमन्त्रः—ओं नमो दामोदराय स्वाहा।
9. नवममासाधिपमन्त्रः—ओं नमो केशवाय स्वाहा।
10. दशममासाधिपमन्त्रः—ओं नमो नारायणाय स्वाहा।
11. एकादशमासाधिपमन्त्रः—ओं नमो माधवाय स्वाहा।
12. द्वादशमासाधिपमन्त्रः—ओं नमो गोविन्दाय स्वाहा।

ना० सं० अ. ४. श्लो० २-४.

## वासुदेवमन्त्रस्याङ्गादिविवेचनक्रमः

| वर्णाः | अङ्गानि | अङ्गमन्त्रस्वरूपम् | वाहनम् | स्वरूपम् | तत्रस्थतत्त्वम् |
|---|---|---|---|---|---|
| ओं | हृदयम् | ओं हृदयाय नमः | पद्मम् | शुक्लवर्णम् | बुद्धितत्त्वम् |
| न | शिरः | ओं शिरसे नमः | वृषभः | जलवर्णम् | अहंकारः |
| मो | शिखा | ओं शिखायै नमः | अजः | दण्डहस्तः तडित्प्रभः | पृथ्वी |
| भ | कवचम् | ओं कवचाय नमः | सप्तिः | खड्गपाणिः कृष्णवर्णः | आपः |
| ग | अस्त्रम् | ओं अस्त्राय नमः | गजः | ध्वजहस्तः सितवणाभः | तेजः |
| व | दृक् | ओं दृग्भ्यां नमः | मकरः | अम्बुजहस्तः सितवर्णः | वायुः |
| ते | उदरम् | ओं उदराय नमः | गरुडः | वज्रहस्तः शङ्खाभः | वियत् |
| वा | पृष्ठम् | ओं पृष्ठाय नमः | महिषः | दण्डपाणिः पिङ्गलवर्णः | मनः |
| सु | बाहू | ओं बाहुभ्यां नमः | नरः | चक्रहस्तः पीतवर्णः | गन्धः |
| दे | ऊरु | ओं ऊरुभ्यां नमः | हंसः | अक्षसूत्रकरः रक्तवर्णः | रसः |
| वा | जानुनी | ओं जानुभ्यां नमः | खगः | अष्टबाहुः गदापाणिः अतसीकुसुमवर्णः | रूपम् |
| य | पादौ | ओं पादाभ्यां नमः | सिंहः | शङ्खपाणिः | सर्वतत्त्वम् |

ना. सं अ. ३. श्लो० ८-२१.

## नारदीयसंहितायां वर्णितानां प्राद्भुर्भावावतारमूर्तिमन्त्राणाम् उद्धृतानि रूपाणि

| | | अ० श्लो.सं. |
|---|---|---|
| 1. | मत्स्यमन्त्रः—ओं वां तोयावासायैकशृंगाय नमः | ५. १-६; |
| 2. | कूर्ममन्त्रः—ओं फां सर्वशक्त्यात्मने कूर्माय नमः | ५. ११-१३; |
| 3. | वराहमन्त्रः—ओं भूः वीर्यात्मने वराहाय नमः | ५. २१-२२; |
| 4. | नृसिंहमन्त्रः—ओं हों नमो भगवते नारसिंहाय नमः | ५. ३२-३४; |
| 5. | वामनमन्त्रः—ओं छां निखर्वरूपाय विष्णवे नमः | ५. ४१-४३; |
| 6. | त्रिविक्रममन्त्रः-ओं छां निखर्वरूपाय विष्णवे त्रिविक्रमाय नमः | ५. ४४. |
| 7. | जामदग्न्यमन्त्रः—ओं फां भगवन्नत्युग्रतेजसे नमः | ५. ४८-५०; |
| 8. | दाशरथिराममन्त्रः—ओं रां महातमोविघातकृन्नमः | ५. ५७-६१; |
| 9. | कृष्णमन्त्रः—ओं कां प्रफुल्लेन्दीव[राय]यादवाय नमः | ५. ६५-७२; |
| 10. | बुद्धमन्त्रः—ओं हां शान्तात्मने मोक्षदाय नमः | ५. ७८-७९; |
| 11. | कल्किमन्त्रः—ओं थां तेजोमयाय कल्किविष्णवे नमः | ५. ८३-८४; |

## नारदीयसंहितायां निर्दिष्टानां पञ्चोपनिषन्मन्त्राणाम् उद्धृतानि रूपाणि

| | | अ. श्लो. सं. |
|---|---|---|
| 12. | पञ्चोपनिषन्मन्त्राः— | |
| | (क) ओं षां नमः पराय परमेष्ठ्यात्मने | ५. ९१-९२; |
| | (ख) ओं यां नमः पराय पुरुषात्मने | ५. ९१-९२; |
| | (ग) ओं रां नमः पराय विश्वात्मने | ५. ९१-९२; |
| | (घ) ओं वां नमः पराय निवृत्यात्मने | ५. ९१-९२; |
| | (ङ) ओं लां नमः पराय सर्वात्मने | ९. ९१-९२; |

## नारदीयसंहितायां प्रयुक्तानां मन्त्राणामकाराद्यनुक्रमः

संख्याः अध्यायश्लोकसूचकाः

49. रां बीजेन, १५-११७
50. लां बीजेन, १५-११९
51. सर्वदेवेभ्यो नमः, २८-१३०
52. सर्वनागेभ्यो नमः, २८-१३०
53. सर्वभूतेभ्यो नमः, २८-१३०
54. सर्वयक्षेभ्यो नमः, २८-१३०
55. सर्वसत्त्वेभ्यो नमः, २८-१३०
56. सर्वासुरेभ्यो नमः, २८-१३०
57. सोमाय वनस्पत्यन्तर्गताय नमः, १५-४६
58. हं सूर्यद्वादशात्मकम्, १५-११३

## नारदीयसंहितायां केवलं नाम्ना निर्दिष्टानां सामान्यमन्त्राणाम् अकाराद्यनुक्रमः

1. अङ्गमन्त्रः, ३-८३, १०६; ५-९७; २८-१२९;
2. अधिदेवतामन्त्रः, १९-४६;
3. अष्टाक्षरमन्त्रः, १२-४५; १४-२८, ७९, ८१; १५-२८, ५८, १४७.
4. अस्त्रमन्त्रः, २-१२, १३, २६, ३३, ४४; ३-८१, ८४, १०४, ११४; ४-९६; ५-९९; २०-१६, २०; २३-४६; २५-३०, १८५, २०४, २०६, २२१, २६६; २६-१९; २८-१३७, १४०.
5. इन्द्रमन्त्रः, २८-७३.
6. उपचारमन्त्रः, २-६१, ६२.
7. ऊरुमन्त्रः, ३-१०, ८२, १०५, ११५.
8. एकाक्षरमन्त्रः, ९-२१६, २१७.
9. एकादशाङ्गमन्त्रः, ३-१०६.
10. कल्किविष्णुमन्त्रः, ५-८३.
11. कवचमन्त्रः, ५-९८.
12. कूर्ममन्त्रः, ५-११, १५.
13. कृष्णमन्त्रः, ५-७२.
14. गणेशमन्त्रः, २८-३६.
15. गायत्रीमन्त्रः, १५-१६०.
16. गारुडमन्त्रः, १८-५०.
17. चक्रमन्त्रः, २०-११८.
18. जातिमन्त्रः, ५-९९.
19. जामदग्न्यमन्त्रः, ५-४८.
20. जितन्तमन्त्रः, १९-२५.
21. तद्दैवतमन्त्रः, २०-५५.
22. तार्क्ष्यमन्त्रः, १८-५९.
23. त्रिविक्रममन्त्रः, ५-४४.
24. त्र्यक्षरमन्त्रः, ९-२१६.
25. दाशरथिराममन्त्रः, ५-५७
26. देववाचकमन्त्रः, २-१२.
27. द्वादशाक्षरमन्त्रः, ३-८, १२, २४, २५, ३३, ३७, ४०; ४-२; ७-५७; ९-२३, २५७, २५९, २६१, २६२, ३३०, ३३८; १०-१२; ११-४५; १२-४६; १४-३४, ५९, ६०, ६२, ६३, ६९, ७८; १५-२८, ३०, ४७, ४९, ८१, १३५, १५६; १९-२२, २५, १२०; २०-१९, ११५, ११७, ११८, १२१, १२२, १२४; २३-५३, ५४, ७६.
28. द्व्यक्षरमन्त्रः, ९-२१६.
29. नरसिंहमन्त्रः, ५-३२, ३५.
30. नेत्रमन्त्रः, ५-९९.
31. पञ्चोपनिषन्मन्त्रः, ५-९१, ९२, ९३; ११-९४; १७-३५, ४०, ५८; १८-७०; १९-४६; २०-११६.

# अनुबन्धः–२

## नारदीयसंहितायां निर्दिष्टानां मुद्राणामकाराद्यनुक्रमः

### ना. सं. अ. ६.

| मुद्रानाम | श्लोक-संख्या | ना. सं. क्रमः |
|---|---|---|
| अग्निमुद्रा | ३२–३४ | ३४ |
| (क) अनिरुद्धमुद्रा | ५ | ४ |
| (ख) अनिरुद्धमुद्रा | १९ | २० |
| अस्त्रमुद्रा | १०–११ | ९ |
| ईशानमुद्रा | ३२–३३ | ४० |
| उदरमुद्रा | १२–१३ | ११ |
| ऊरुमुद्रा | १५ | १४ |
| कल्किमुद्रा | ४८–४९ | ५३ |
| कवचमुद्रा | ९–१० | ८ |
| कुबेरमुद्रा | ३२–३४ | ३९ |
| कुमुदादिमुद्रा | ३४ | ४१ |
| कूर्ममुद्रा | ४० | ४५ |
| कृष्णमुद्रा | ४५–४६ | ५१ |
| खड्गमुद्रा | २९ | ३० |
| गदामुद्रा | २६ | २७ |
| चक्रमुद्रा | २५ | २६ |
| जङ्घामुद्रा | १६ | १५ |
| जामदग्न्यमुद्रा | ४४ | ४९ |
| दाशरथिराममुद्रा | ४५ | ५० |
| नृसिंहमुद्रा | ४२–४३ | ४७ |
| नेत्रमुद्रा | ११–१२ | १० |
| नैर्ऋतिमुद्रा | ३२–३४ | ३६ |
| पद्ममुद्रा | २७ | २८ |
| पादमुद्रा | १६ | १६ |
| पृष्ठमुद्रा | १३ | १२ |
| (क) प्रद्युम्नमुद्रा | ३ | ३ |
| (ख) प्रद्युम्नमुद्रा | १९ | १९ |
| बाहुमुद्रा | १४ | १३ |
| बुद्धमुद्रा | ४६–४७ | ५२ |
| मत्स्यमुद्रा | ३९–४० | ४४ |
| मुसलमुद्रा | २८ | २९ |
| यममुद्रा | ३२–३४ | ३५ |
| रतिमुद्रा | २२ | २४ |
| वनमालामुद्रा | ३१–३२ | ३२ |
| वराहमुद्रा | ४१ | ४६ |
| वरुणमुद्रा | ३२–३४ | ३७ |
| वामनमुद्रा | ४३–४४ | ४८ |
| वायुमुद्रा | ३२–३४ | ३८ |
| वासवमुद्रा | ३२–३४ | ३३ |
| (क) वासुदेवमुद्रा | २ | १ |
| (ख) वासुदेवमुद्रा | १७–१८ | १७ |
| विष्वक्सेनमुद्रा | ३७–३८ | ४३ |
| वैनतेयमुद्रा | ३५–३६ | ४२ |
| शङ्खमुद्रा | २३–२४ | २५ |
| (क) शार्ङ्गमुद्रा | २०–२१ | २१ |
| (ख) शार्ङ्गमुद्रा | ३० | ३१ |
| शिखामुद्रा | ८–९ | ७ |
| शिरोमुद्रा | ७–८ | ६ |
| श्रीमुद्रा | २१ | २२ |
| (क) सङ्कर्षणमुद्रा | ३ | २ |
| (ख) सङ्कर्षणमुद्रा | १८ | १८ |
| सरस्वतीमुद्रा | २२ | २३ |
| हृदयमुद्रा | ६ | ५ |

1243—67

# अनुबन्धः–३

## विशिष्टानां शब्दानां विवरणात्मकः अकाराद्यनुक्रमः

### अग्नयः

1. आहनीयः 2. सभ्यः 3. गार्हपत्यः
२८.१३-१४

### अग्निकुण्डानि

1. चतुष्कोणम् 2. अर्धचन्द्राकारम् 3. वर्तुलम् 4. पद्माकारम्
७.२९-३० ; १९.८-९

### अग्निजिह्वाधिदेवताः

1 कालरूपिणी 2. ब्रह्मरूपिणी 3. सोमदेवत्या 4. याम्या 5. वैष्णवी 6. सूर्यदेवता 7. सर्वदेवत्या ७.६६-७३

### अग्निजिह्वाः

1. नीलवर्णा 2. ताम्रवर्णा 3. शुक्ला 4. कृष्णाभा 5. अतसीकुसुमप्रभा 6. शुक्लवर्णा ७. ६५-७१

### अग्निसंस्काराः

1. गर्भाधानम् 2. पुंसवनम् 3. सीमन्तः 4. जातकर्म 5. नामकरणं 6. अन्नप्राशनम् 7. चौलम् 8. व्रतबन्धनम् 9. वेदव्रतम् 10. समावर्तनम् 11. पत्नीयोगः ७.५८-६०

### अङ्कुरबीजानि

1. व्रीहिः 2. मुद्गः 3. श्यामतिलः 4. शिम्बः 5. निष्पावः 6. सर्षपः 7. प्रियङ्गुः 8. माषः 9. कौलुत्थः
१९.२१-२२

### अन्नानि

1. पायसान्नम् 2. गौल्यान्नम् 3. कृसरान्नं 4. हरिद्रान्नम् 5. यवान्नम् 6. मिश्रान्नम् १२-३१-३७

### अर्पणार्हपुष्पाणि

1. कमलम् 2. मालती 3. तुलसी 4. यूथिका 5. कुमुदम् 6. सिन्दुवारम् 7. कुन्दम् 8. उत्पलम् 9. कुब्जकम् 10. वणिज्या 11. प्रियङ्गुः 12. वनमाला 13. कुटजम् 14. चम्पकम् 15. मदनम् 16. पिण्डितकद्वयम् 17. कुरवकद्वयम् 18. केतकीवनमाला 19. भृङ्गराजः 20. सिहंतिका 21. अशोकद्वयम् 22. केण्डम् 23. करवीरम् 24. नन्द्यावर्तद्वयम् 25. कर्णिकारः 26. वकुलम् 27. पुन्नागम् 28. सुवर्चलम् 29. शिरीषम् 30. द्रोणपुष्पम् 31. मल्लिकावनमाला 32. कुरण्डकम् 33. फलिनी 34. सदाभद्रा 35. कुन्दली 36. नीलिका 37. सिंहिका 38. केसरी 39. वनजाती 40. स्थलपद्मम् 41. विष्णुपर्णी 42. सहदेवी 43. वृहण्णलम् 44. शतपत्रम् 45. श्रीबेरम् 46. दूर्वा 47. काशः 48. कुशः 49. कदली 50. कुमुदम् 51. माधवी 52. श्वेतरोहितम् 53. बिल्वपत्रम् 54. सितार्कम् 55. पलासः 56. खदिरः 57. वैडूर्यवर्तिनी २१.3-११

### अर्पणार्हफलानि

1. कदली 2. पनसम् 3. आम्रम् 4. द्राक्षा 5. खर्जूरम् 6. नालिकेरम् 7. करीरम् 8. कपित्थं 9. जम्बू 10. चिद्धिकम् 11. बालुकम्

12. पारावतम् 13. बदरम्
14. मातुलुङ्गम् 15. दाडिमः
16. बिल्वम् 17. आमलकम्
18. कारवल्ली 19. वृन्ताकः
20. पनसम् ? 21. क्षुद्रपनसम्
22. करीरम् 23. करवर्द्दम्
24. कर्णाटकफलम् 25. बल्लीत्रयम्
26. पिण्डा 27. क्षुद्रपिण्डा 28. गङ्गाद्वयम् 29. आद्रम् 30. महासूरणम्
२१.१२-१६

### अर्घ्यद्रव्याणि

1. गन्धः 2. पुष्पम् 3. फलम् 4. यवः 5. सिद्धार्थकः 6. तिलः 7. कुशः 8. अक्षतः २०.९५-९६

### अवताराः

1. मत्स्यः 2. कूर्मः 3. वराहः 4. नृसिंहः 5. वामनः 6. परशुरामः 7. रामः 8. कृष्णः 9. बुद्धः 10. कल्की १.५७-६१; १३.२४९-३०५

### अश्विनीपरिवारः

1. आयुर्वेदः 2. धनुर्वेदः 3. धन्वन्तरिः 4. आत्रेयः 5. चिकित्सा 6. रोहिणी 7. दीपिनी 8. विशाला २८.९८-९९

### अष्टमङ्गलानि

1. शङ्खः 2. चक्रम् 3. पताका 4. श्रीवत्सः 5. दर्पणः 6. वृषः 7. मत्स्ययुग्मम् 8. कुंभः २७.५५

### अष्टमङ्गलानि (पक्षान्तरम्)

1. शङ्खः 2. चक्रम् 3. स्वस्तिकम् 4. कलशः 5. श्रीवत्सः 6. चामरः 7. सिंहः 8. तार्क्ष्यः २७.५६-५७

### आचमनीयद्रव्याणि

1. लवङ्गः 2. जातिः 3. तक्कोलः
२०.९६

### आभासनिवासिनः

1. सङ्कुकर्णः 2. अनन्तगुलिकाद्याः 3. विकटः 4. शूलदन्तः 5. लोहिताक्षादयः ९.७०-७२

### आलयचातुर्विध्यम्

1. वृत्तम् 2. चतुरश्रम् 3. आयतवृत्तम् 4. आयतचतुरश्रम् १४.८८

### आसनानि

1. योगासनम् 2. स्नानासनम् 3. अलङ्कारासनम् 4. भोजनासनम् 5. यात्रासनम् २७.६१-६२

### आहुतिद्रव्याणि

1. घृतम् 2. क्षीरम् 3. मधु 4. दधि 5. गौल्यान्नम् 6. परमान्नम् 7. कृसरान्नम् 8. अन्नम् 9. कृसरम् 10. गुल्गुलः 11. तिलादयः 12. फलम् 13. पुष्पम् 14. लवणम् 15. सर्षपः 16. पत्नम् 17. अङ्कुरम्
२७.१९-२५

### इन्द्रपरिवारः

1. त्रिदशाचार्यः 2. शुक्रः 3. ऐरावतः 4. उच्चैः श्रवा 5. शची 6. उपश्रीः 7. अहिल्या 8. कुलिसम्
२८.७३-७५

### उत्सवभेदः (कालकृतः)

1. द्वादशाहोत्सवः 2. नवाहोत्सवः 3. सप्ताहोत्सवः 4. पञ्चाहोत्सवः 5. त्र्यहोत्सवः 6. एकाहोत्सवः
१८.११

### उत्सवभेदः

1. नित्योत्सवः 2. नैमित्तिकोत्सवः 3. काम्योत्सवः १८.३

### उत्सवयात्रदेवाः

1. वराहः 2. नृसिंहः 3. वामनः

4. परशुराम: 5. राम: 6. राम:
7. कृष्ण: 8. कल्की 9 मत्स्य:
10. कूर्म: 11. अनन्त:
12. नारायण:
१९.४७-५०

उत्सवरात्रबलिदेवा:

1. सर्वभूत: 2. पैत्रिक: 3. यक्ष:
4. नाग: 5. ब्रह्मा 6. शिव:
7. विष्णु: १९.३२-३६

उत्सवबलिद्रव्याणि

1. निशाचूर्णम् 2. पललम् 3. दधि
4. सक्तु: 5. सतिलशालितण्डुल:
6. लाजा 7. मधु 8. बीजम्
9. नारिकेलपय: 10. पद्माक्षतम्
11. यव: 12. चरु 13. अपूप:
14. गुलान्नम् 15. पायस:
16. कृसरम् 17. शुद्धान्नम् 18. मुद्गान्नम् 19. क्षीरम् १९.३६-४१

कन्दर्पपरिवार:

1. वसन्त: 2. मदन: 3. मार:
4. सोम: 5. रति: 6. वारुणी
7. उषा 8. मकर: २८.९३-९५

कन्दर्पशरा:

1. तापिनी 2. मोहिनी 3. मर्दनी
4. प्रमाथिनी 5. हारिणी २८.९२-९३

कर्मेन्द्रियाणि

1. वाक् 2. पाणि: 3. पाद: 4. पायु:
5. उपस्थ: १५.१०४

कलातत्त्वस्थतत्त्वानि

1. सर्वात्मा 2. निवृत्यात्मा 3. विश्वात्मा 4. पुरुषात्मा 5. परमेष्ठ्यात्मा
९.२२८

कषायोदकार्थवृक्षा:

1. शमी 2. उदुम्बर: 3. बिल्व:
4. पलाश: 5. वट: 6. खदिर:
7. अश्वत्थ: 8. विकङ्कत: २०.९८-९९

काम्या: देवा:

1. अग्नि: 2. ब्रह्मा 3. धनद:
4. गजास्य: 5. श्री: 6. स्कन्द:
7. सूर्य: 8. रुद्र: 9. दुर्गा 10. यम:
11. इन्द्र: 12. विष्णु: 13. काम:
14. अश्विनी 15. चन्द्र: २८.८-१२

केसराचला:

1. निषध: 2. हेमकूट: 3. हिमवान्
4. नीलगिरि: 5. श्वेतगिरि:
6. शृङ्गवान् ९.१२२-१२३

क्षिति: (चतुर्विधा)

1. वारुणी 2. ऐन्द्री 3. वायवी
4. आग्नेयी १३.१७

गन्धोदकद्रव्याणि

1. चन्दनम् 2. कुसुमम् 3. मांसी
4. ह्रीबेरम् 5. मुरम् 6. उशीरम्
7. कुष्ठम् 8. अगरु: २०.१०४-१०५

गभस्तिमत्तृतीयखण्डनिवासिन:

1. महोदर: 2. महाकाय: 3. महोत्कट:
९.८१

गभस्तिमद्द्वितीयखण्डनिवासिन:

1. कार्कोटक: 2. पद्मराग: 3. खण्डक:
९.८०

गभस्तिमत्प्रथमखण्डनिवासिन:

1. महिषादय: ९.८०

गर्भागारपदानि

1. ब्राह्मम् 2. दैवतम् 3. मानुषम्
4. पैशाचम् १५.१५७

चतुर्मूर्तय:

1. वासुदेव: 2. सङ्कर्षण: 3. प्रद्युम्न:
4. अनिरुद्ध: १.३४-४०

### चतुर्मूर्तिदेव्यः

1. शान्तिः 2. श्रीः 3. सरस्वती 4. रतिः १.५२-५४

### चतुष्कालार्चनम्

1. प्रातः 2. मध्याह्नम् 3. सायम् 4. निशीथः २.१५९

### चतुष्पत्रीभुवनकर्णिकाः

1. अनिलः 2. निषधः 3. माल्यवान् 4. गन्धमादनः ९.१३६

### चतुष्पत्रीभुवनपत्राणि

1. भारतम् 2. केतुमालः 3. भद्राश्वः 4. कुरवः ९.१३७

### चन्द्रपरिवारः

1. रोहिणी 2. रेवती 3. ज्योत्स्ना 4. ह्लादिनी 5. वैकृती 6. वायवी 7. वारुणी 8. ऐन्द्री २८.१०७

### जम्बूद्वीपस्थद्वीपानि

1. अङ्गद्वीपम् 2. मलयद्वीपम् 3. शङ्ख-द्वीपम् 4. कुमुदद्वीपम् 5. वराह-द्वीपम् 6. लङ्काद्वीपम् ९.१६३-१६५

### जलतत्त्वस्थतीर्थानि

1. अमरेशः 2. प्रभावः 3. नैमिषः 4. पुष्करः ९.१९०

### जातयः (मन्त्रे)

1. नमः 2. स्वाहा 3. वषट् 4. वौषट् 5. हूँ 6. फट् ५.१००

### जीर्णसंस्कारः (त्रिविधः)

1. मानुषम् 2. आर्षकम् 3. स्व-व्यक्तम् १७.२-३

### ज्ञानकतृशक्तयः

1. शब्दः 2. स्पर्शः 3. रूपम् 4. रसः 5. गन्धः १५.१०३

### ज्ञानेन्द्रियाणि

1. श्रोत्रम् 2. त्वक् 3. चक्षुषी 4. जिह्वा 5. घ्राणम् १५.१०४

### तत्त्वशोधनपदानि

1. दामोदरपदम् 2. पद्मनाभपदम् 3. हृषीकेशपदम् 4. श्रीधरपदम् 5. वामनपदम् 6. त्रिविक्रमपदम् 7. मधुसूदनपदम् 8. विष्णुपदम् 9. गोविन्दपदम् 10. माधवपदम् 11. नारायणपदम् 12. केशवपदम् ९.२७९-९१

### तत्त्वानि

1. पृथ्वी 2. आपः 3. तेजः 4. वायुः 5. व्योम 6. गन्धतन्मात्रा 7. रसत-न्मात्रा 8. रूपतन्मात्रा 9. स्पर्श-तन्मात्रा 10. शब्दतन्मात्रा 11. वाक् 12. पाणिः 13. पादः 14. पायुः 15. उपस्थः 16. श्रोत्रं 17. त्वक् 18. नेत्रे 19. जिह्वा 20. घ्राणम् 21. अहंकारः 22. बुद्धिः 23. मनः 24. तमः 25. रजः 26. सत्त्वम् ९.१५-२४

### तन्त्राणि

1. वैखानसम् 2. शैवम् 3. पाशुपतम् 4. पाञ्चरात्रम् २५.३३८

### तिलपद्मपार्श्वे अर्चनीयाः देवाः

1. विष्णुः 2. ब्रह्मा 3. शिवः २४.७०

### तिलपद्मेऽर्चनीयाः देवाः

1. इन्द्रः 2. पुरुषः 3. अग्निः 4. सनः 5. सत्यः 6. यातुधानः 7. अधिपः 8. नारायणः 9. वरुणः 10. अच्युतः 11. सदागतिः 12. अनिरुद्धः 13. धनदः 14. हरः 15. शशि-शेखरः 16. कृष्णः २४.६६-६९

**तिलाः (पञ्च)**

1. श्वेताः 2. कृष्णाः 3. पीताः 4. वन्याः 5. महातिलाः १२.८

**तीर्थानि (ब्राह्मादीनि)**

1. ब्राह्मम् 2. दैवतम् 3. पैत्रिकम् ११.५९-६०

**तीर्थानि (क्षेत्राणि)**

1. सालग्रामः 2. द्वारवती 3. चक्रदानम् 4. कुरुप्रियः 5. रङ्गः 6. सौकरः 7. कण्ठः 8. काञ्ची 9. शिवप्रियः ९.१५०-१५१

**तीर्थेष्वाराध्याः देवाः**

1. मुकुन्दः 2. केसवः 3. चक्रधरः 4. माधवः 5. वासुदेवः 6. सौकरानन: 7. जनार्दनः 8. वरदः 9. हरिः ९.१५२-१५४

**तोरणध्वजदेवाः**

1. कुमुदः 2. कुमुदाक्षः 3. पुण्डरीकः 4. वामनः 5. शङ्कुकर्णः 6. सर्वनेत्रः 7. सुमुखः 8. सुप्रतिष्ठः १५.१९-२२

**त्रिकालार्चनम्**

1. प्रातः 2. मध्याह्नः 3. सायं २.१५८

**दक्षिणा**

1. उत्तमा 2. मध्यमा 3. अधमा १९.१३६

**दिक्पालाः**

1. इन्द्रः 2. यमः 3. वरुणः 4. धनदः 5. वह्निः 6. नैर्ऋतिः 7. वायुः 8. ईशानः १३.३१८-३१९

**दीक्षिताः (सप्त)**

1. समयी 2. दीक्षितः 3. चक्रवर्ती 4. अभिषिक्तः 5. गुरुः 6. आचार्यः 7. भगवान् ११.१७-१८

**दुर्गापरिवारः**

1. जया 2. विजया 3. पूर्णा 4. पुष्कला 5. पुष्टिः 6. तुष्टिः 7. इष्टिः 8. प्रीतिः २८.६२-६३

**देवपुर्यः**

1. अमरावती 2. तेजोवती 3. वैवस्वती 4. रक्षोवती 5. शुद्धवती 6. गन्धवती 7. महोदया 8. यशस्विनी ९.१०८-११२

**द्वादशारदेवाः**

1. धाता 2. अर्यमा 3. विधाता 4. मित्रः 5. वरुणः 6. भगः 7. इन्द्रः 8. विवश्वान् 9. सविता 10. पूषा 11. त्वष्टा 12. विष्णुः ८.७०-७१

**द्वारकुंभदेवाः**

1. पूर्णः 2. पुष्करः 3. आनन्दः 4. नन्दः 5. वीरसेनः 6. सुषेणः 7. संभवः 8. प्रभवः २३.३७-३९

**द्वारकुंभरत्नानि**

1. पद्मरागः 2. प्रवालः 3. वैडूर्यम् 4. पुष्यकम् 5. नीलम् 6. मरकतम् 7. मुक्ताफलम् 8. स्फटिकम् २३.३९-४१

**द्वारपालाः**

1. चण्डः 2. प्रचण्डः 3. जयः 4. विजयः 5. पूर्णः 6. पुष्करः 7. गरुडः 8. विष्वक्सेनः 9. आनन्दः 10. नन्दः 11. वीरसेनः 12. सुषेणः 13. संभवः 14. प्रभवः १३.३२०-३२९

**धनदपरिवारः**

1. नरः 2. यक्षप्रियः 3. नलकूवरः 4. धनप्रियः 5. धनाध्यक्षः 6. धनी

7. धनिनायकः 8. कूप्यः २८.३१-३२

धान्यानि (ग्राम्याणि)

1. तिलः 2. व्रीहिः 3. यवः 4. माषः 5. गोधूमः 6. प्रियङ्गुः 7. मुद्गाः १२.२-३

धान्यानि (वन्यानि)

1. वेणुः 2. श्यामाकः 3. नीवारः 4. जर्तिला 5. गवीधुकाः 6. कर्कटः 7. श्रुतकः १२.३-४

नितलद्वितीयखण्डनिवासिनः

1. कम्बलास्वतरादिः 2. यमदंष्ट्रः 3. उग्रदंष्ट्रः 4. विषलाभः ९.७८-७९

नितलप्रथमखण्डनिवासिनः

1. शिंशुमाराण्डकादयः ९.७७

नियमाः (दश)

1. शौचः 2. इज्या 3. तपः 4. सत्यम् 5. स्वाध्यायः 6. उपस्थनिग्रहः 7. व्रतम् 8. उपवासः 9. मौनम् 10. ध्यानम् ३०.११-१२

निषेकादिसंस्काराः

1. गर्भाधानम् 2. पुंसवनम् 3. सीमन्तः 4. जातकर्म 5. गुह्यनामकरणम् 6. स्तनपानम् 7. नामकरणम् 8. उपनिष्क्रमणम् 9. भानुनिरीक्षणम् 10. अन्नप्राशनम् 11. चूडाकरणम् 12. उपनयनम् 13. वेदाभ्यासः 14. दीक्षा 15. समावर्तनम् 16. विवाहः 17. अग्न्याधानम् 18. वानप्रस्थः 19. सन्यासः 20. शरीरत्यागः 21. दाहसंस्कारः 22. श्राद्धकर्म २९.२-३३

न्यासः (त्रिविधः)

1. स्थितिन्यासः 2. सृष्टिन्यासः 3. संहृतिन्यासः १५.२१०

पञ्चकालः

1. अभिगमनकालः 2. उपादानकालः 3. इज्याकालः 4. स्वाध्यायकालः 5. योगकालः ३०.२-४

पञ्चकालार्चनम्

1. प्रातः 2. मध्याह्नम् 3. अपराह्नम् 4. सायम् 5. निशीथः २.१५९

पञ्चगव्यम् (त्रिविधम्)

1. प्रोक्षणार्थम् 2. प्राशनार्थम् 3. स्नपनार्थम् २७.४१-४४

पञ्चगव्यद्रव्याणि (प्राशने)

1. शकृद्रसः 2. मूत्रम् 3. दधि 4. आज्यम् 5. पयः २७.४२

पञ्चगव्यद्रव्याणि (स्नपने)

1. गोमूत्रम् 2. गोक्षीरम् 3. गोदधि 4. गोघृतम् 5. गोशकृत् २०.९७

पञ्चगव्यद्रव्याणि (स्नपने)

1. घृतम् 2. शकृत् 3. रसः 4. दधि 5. क्षीरम् २७.४३-४४

पञ्चज्ञानशक्तयः

1. सूक्ष्मा 2. सुसूक्ष्मा 3. मृता 4. अमृता 5. व्यापिनी ९.२३१

पञ्चतत्त्वानि

1. पृथ्वी 2. वायुः 3. आकाशः 4. आपः 5. ज्योतिः ९.४६-४७

पञ्चभूतानि

1. पृथ्वी 2. आपः 3. तेजः 4. वायुः 5. आकाशः १५.१०५

पना 4. प्रस्थापना 5. प्रतिष्ठा
१५.२०१-२०२

प्रतिष्ठायागशालातोरणानि

1. सुशोभनम् 2. सुभद्रम् 3. सुकर्म
4. सुगोलम् १५.१५-१७

फलांभोद्रव्याणि

1. कदली 2. मातुलुङ्गम् 3. बिल्वः
4. आमलकः 5. पनसम् 6. नालिकेरम् 7. चूतः 8. बीजपूरकम्
२०.९९-१००

बिम्बमृद्भेदाः

1. शुक्ला 2. रक्ता 3. पीता
4. कृष्णा १३.१०९-११०

बिम्बानि (षड्विधानि)

1. मूलम् 2. कौतुकम् 3. बलिबिम्बम्
4. तीर्थयात्राबिम्बम् 5. उत्सवबिम्बम् 6. स्नपनबिम्बम्
१३.३४६-३५१

बुद्धिः

1. अहंकारः 2. मनः 3. संकल्पः
१५.१०१-१०२

बेरचातुर्विध्यम्

1. आसनम् 2. शयनम् 3. स्थानकम्
4. यानगम् १३.३३९

ब्रह्मपरिवारः

1. सावित्री 2. गायत्री 3. कपिलः
4. काश्यपः 5. दक्षः 6. रुद्रः
7. अग्निः 8. मरुत् 9. भृगुः
10. नारदः २८.२६-२७

भक्ष्यभेदाः

1. भोज्यम् 2. लेह्यम् 3. चोष्यम्
4. पेयम् १९.७०

भद्राश्वादिदेशाः

1. भद्राश्वः 2. केतुमालः 3. भारतम्
4. कुरवः ९.१२६

भद्राश्वादिदेवाः

1. हयशीर्षः 2. वराहः 3. कूर्मः
4. मत्स्यः ९.१२९-१३०

भारतविभागाः

1. इन्द्रः 2. कसेरुः 3. ताम्रः
4. गभस्ती 5. सौम्यकः 6. गन्धर्वः
7. चारणाः 8. कन्यकाद्वीपम्
9. वारुणः ९.१४२-१४३

भारतस्थसरांसि

1. अनन्तम् 2. पङ्कजम् 3. चन्द्रम्
4. आगस्त्यम् 5. पुष्करम् ९.१४९

भारतीयवैष्णवतीर्थानि

1. शालग्रामः 2. द्वारवती 3. चक्रदानम्
4. कुरुप्रियः 5. रङ्गः 6. सौकरम्
7. कण्ठम् 8. काञ्ची 9. शिवप्रियम्
९.१५०-१५१

भारतीयशिवक्षेत्राणि

1. वाराणसी 2. कालाकः 3. चक्रदानम्
4. वासुकीश्वरः 5. वटचिह्नितम्
6. आदिमुक्तीश्वरः ९.१५६-१५७

भारतीयाः नद्यः

1. भागीरथी 2. यमुना 3. नर्मदा
4. सरस्वती 5. कावेरी 6. ताम्रपर्णी
7. गोदा 8. वेगा 9. महानदी
९.१४७-१४८

भारतीयाः महाचलाः

1. महेन्द्रः 2. मलयः 3. सह्यः 4. कीर्तिमान् 5. ऋक्षपर्वतः 6. विन्ध्यः
7. परियात्रः 8. कन्यका ९.१४५

भूमण्डलविभागः

1. जम्बूद्वीपः 2. शाकद्वीपः 3. कुशद्वीपः 4. क्रौञ्चद्वीपः 5. शाल्मलीद्वीपः 6. गोमेदद्वीपः 7. पुष्करद्वीपः
९.९८-९९

### यमाः (दश)

1. आनृशंस्यम् 2. क्षमा 3. सत्यम् 4. अहिंसा 5. दमः 6. आर्जवम् 7. दानम् 8. प्रसादः 9. माधुर्यम् 10. मार्दवम् ३०.१०-११

### यागाः (सप्त)

1. यागः 2. स्तोमः 3. महायागः 4. अध्वरः 5. सवः 6. क्रतुः 7. हरिस्तोमः ११.१८-२०

### यागोपकरणानि

1. समित् 2. इध्मः 3. परिधिः 4. आज्यपात्रम् 5. प्रणीता 6. प्रोक्षणी 7. अर्घ्यादिपात्राणि 8. धूपपात्रम् 9. सर्वपात्राधारः 10. घटः 11. वर्धनी 12. कटाहः 13. कर्परः 14. जलपात्रम् 15. स्थाली 16. मकुटादिभूषणानि 17. स्नपनद्रव्याणि 18. पञ्चगव्यम् 19. वस्त्रम् 20. ध्वजः 21. छत्रम् 22. अष्टमङ्गलम् 23. तालवृन्तम् 24. पाद्यप्रतिग्रहपात्रम् 25. आचमनप्रतिग्रहपात्रम् 26. आसनानि 27. पीठः 28. विष्टरः 29. पादुका 30. दर्पणम् 31. ओदनपात्रम् 32. खट्वा २७.२५-७०

### योगपीठगात्रम्

1. अधर्मः 2. अज्ञानम् 3. अवैराग्यम् 4. अनैश्वर्यम् २.५०

### योगपीठपादाः

1. धर्मः 2. ज्ञानम् 3. वैराग्यम् 4. ऐश्वर्यम् २.४८-४९

### यौवनशिलाभेदः

1. स्त्रीशिला 2. पुंशिला 3. नपुंसकशिला १३.५५

### रत्नोदकद्रव्याणि

1. माणिक्यम् 2. पद्मरागम् 3. नीलम् 4. वज्रम् 5. पुष्यम् 6. प्रवालम् 7. मुक्तकम् 8. मरकतम् 9. वैडूर्यम् २०.१०२-१०३

### रसातलतृतीयखण्डनिवासी

1. हाटकः ९.९१

### रसातलद्वितीयखण्डनिवासिनः

1. लोहिताक्षादयः ९.९०

### रसातलप्रथमखण्डनिवासिनौ

1. सालवन्ध्यः 2. तक्षकः ९.८९-९०

### रुद्रपरिवारः

1. गङ्गायमुने 2. वृषभः 3. सनकः 4. स्कन्दः 5. सनत्कुमारः 6. ब्रह्मा 7. चन्द्रः 8. आदित्यः २८.५७-५८

### लोहचतुष्टयम्

1. सुवर्णम् 2. रजतम् 3. ताम्रम् 4. आरकूटं १३.९४

### लोहोदकद्रव्याणि

1. रुक्मम् 2. रूप्यम् 3. ताम्रम् 4. आयसम् 5. त्रपु २०.१०३-१०४

### वर्षपर्वताः

1. मन्दरः 2. गन्धमादनः 3. विपुलः 4. सुपार्श्वः ९.११२-११७

### वायुतत्त्वस्थतीर्थानि

1. कुरुक्षेत्रम् 2. विमलम् 3. प्रभासः ९.१९२-१९३

### वास्तुपददेवाः

1. ब्रह्मा 2. गुरुः 3. पर्जन्यः 4. जयः 5. माहेन्द्रः 6. आदित्यः 7. सत्यः 8. भृगुः 9. अन्तरिक्षः 10. वह्निः 11. पूषा 12. गृहक्षता 13. भृगुः 14. यमः 15. गन्धर्वः 16. भृङ्गः

मादनः 10. मेरुः 11. सह्यः
12. विन्ध्यः 13. पारियालः
14. अर्बुदः 15. श्रीपर्वतः
16. जयन्तः 17. श्वेतपर्वतः
१३.६-८

## श्रीपरिषद्देवाः

1. पद्महस्ता 2. कमला 3. वासुदेवी 4. हरिप्रिया 5. पद्मासना 6. पद्मभवा 7. महोदध्यात्मजा 8. इला
२८.३९

## षट्कालार्चनम्

1. प्रातः 2. मध्याह्नम् 3. अपराह्नम् 4. सायम् 5. निशीथः 6. प्रत्यूषः
२.१६०

## षड्द्वीपानि

1. प्लक्षद्वीपम् 2. कुशद्वीपम् 3. क्रौञ्चद्वीपम् 4. शाल्मलीद्वीपम् 5. गोमेदद्वीपम् 6. पुष्करद्वीपम् ९.१६६-१७१

## सप्तलोकाः

1. भूः 2. भुवः 3. स्वः 4. महः 5. जनः 6. तपः 7. सत्यः
९.१८१-१८४

## सप्तसमुद्राः

1. क्षारः 2. क्षीरः 3. सर्पिः 4. इक्षुः 5. सुरा 6. दधि 7. स्वच्छोदः
९.१००-१०१

## समरसाः

1. मन्त्रसमरसः 2. नाडीसमरसः 3. भूतसमरसः 4. तत्त्वसमरसः
२.२४७-२५१

## सुतलतृतीयखण्डनिवासिनः

1. मेघनादः 2. भीमः 3. भीमबलः
९.८६

## सुतलद्वितीयखण्डनिवासिनः

1. नागराजः 2. श्वेतभद्रः 3. सुदर्शनः 4. दुर्मुखः ९.८५-८६

## सुतलप्रथमखण्डनिवासी

1. शङ्खोदरः ९.८५

## सूर्यकला

1. तपनी 2. तापनी 3. धूम्रा 4. ज्वलिनी 5. ज्वालिनी 6. पावनी 7. हव्यवाहा 8. तेजोवती 9. शतधा 10. वामा 11. पद्मप्रबोधिनी 12. तमोपहा ९.३२९-३३२

## सूर्यपरिवारः

1. उषा 2. सन्ध्या 3. चन्द्रः 4. अङ्गारः 5. बुधः 6. वृहस्पतिः 7. शुक्रः 8. शनैश्चरः 9. राहुः 10. केतुः २८.४९-५१

## सोमकला

1. पूषा 2. अर्यमा 3. सुमना 4. पुष्टिः 5. प्रीतिः 6. रतिः 7. सृष्टिः 8. धृतिः 9. मतिः 10. मेधा 11. मनीषा 12. अंशुमालिनी 13. शङ्खिनी 14. स्वच्छा 15. सम्पूर्णमण्डला
९.३२६-३२८

## स्कन्दपरिवारः

1. मयूरः 2. शक्तिः 3. मेधा 4. प्रज्ञा 5. द्विरदः 6. ककुदः 7. देवसेना 8. विद्या २८.४३-४५

## स्नपनद्रव्याणि

1. घृतम् 2. उष्णोदकम् 3. रत्नवारि 4. फलोदकम् 5. लोहांभः 6. मार्जनांभः 7. गन्धांभः 8. अक्षतवारि 9. यवोदकम् 10. पाद्यम् 11. अर्घ्यम् 12. आचमनम् 13. पञ्चगव्यम् 14. दधि 15. पयः 16. मधु

17. कषायं 18. गुलोदकम् 19. इक्षुरसः 20. नालिकेररसः 21. शान्तिवारि 22. मङ्गलोदकम् २०.४५-८१

### स्नपनद्रव्यदेवाः

1. विष्णुः 2. दिवाकरः 3. ब्रह्मा 4. कुबेरः 5. वसवः 6. विश्वेदेवः 7. गन्धर्वः 8. निर्ऋतिः 9. आर्या 10. पितृदेवः 11. श्रीः 12. वाग्देवी 13. दक्षः 14. शुक्रः 15. सोमः 16. महेन्द्रः 17. यमः 18. वराहः 19. नृसिंहः 20. श्रीधरः 21. भवः 22. वासुदेवादिः 23. शान्त्यादिः 24. अश्विनौ 25. शेषः 26. परब्रह्म 27. मातरः 28. विष्णुः

२०.१०६-११४

### हविरादिनिवेदनपात्रद्रव्याणि

1. सुवर्णम् 2. लौहम् 3. दारु 4. शिला 5. पर्णम् 6. मृत् 7. शाखः 8. जलजम् 9. फलमयम् २१.२९

### हविर्भेदाः

1. नित्यम् 2. नैमित्तिकम् 3. काम्यम्

१२.१४

### हविर्भेदाः (आलयार्चने)

1. उत्तमोत्तमम् 2. उत्तममध्यमम् 3. उत्तमाधमम् 4. मध्यमोत्तमम् 5. मध्यममध्यमम् 6. मध्यमाधमम् 7. अधमोत्तमम् 8. अधममध्यमम् 9. अधमाधमम् १२.१९-२४

### हविर्भेदाः (गृहार्चायाम्)

1. उत्तमम् 2. मध्यमम् 3. अधमम्

१२.२५-२६

### हुताशनकलाः

1. उद्भवा 2. विरजा 3. विश्वा 4. विमला 5. बिन्दुमालिनी 6. सुप्रभासा 7. जलदा 8. क्षीरदा 9. सुवर्चसा 10. आज्यभागा 11. हविर्भागा 12. आहुतिः 13. यज्ञोद्भवा 14. व्यापिनी 15. पूर्णा 16. निर्वाणा ९.३३४-३३७

### हेतिपरिवारः

1. शङ्खः 2. चक्रम् 3. गदा 4. पङ्कजम् 5. मुसलम् 6. खड्गम् 7. शार्ङ्गम् 8. वनमाला

१३.३१५-३१७

विशेषः—'वास्तुपददेवाः' इति शीर्षके कोष्ठे निर्दिष्टानां सप्तदेवानां नामानि यद्यपि उपलब्धासु नारदीयसंहितामातृकासु न दृश्यन्ते प्रायः ग्रन्थपातकारणात्, तथापि पूर्वापरसंदर्भपर्यालोचनया मूलनारदीयसंहितायामेतेषामुल्लेखः भवेदिति विभाव्य ग्रन्थान्तरसाहाय्यात् अत्र कोष्ठे (27–33) एतानि सप्तनामानि निर्दिष्टानि ।

# अनुबन्धः–४

## विशिष्टानां प्रातिपदिकानामकाराद्यनुक्रमः

### अ

ऋ



ए

### घ



### च

**ध**



**न**

स

---

## नारदीयसंहितायां वर्णितत्रिविधस्नपनपीठेषु स्थाप्यमानानां द्रव्यकलशानां निर्देशः

**1. अधमस्नपनपीठे – कोष्ठसंख्या–81**

(1) घृतोदकम् (2) उष्णोदकम् (3) रत्नोदकम् (4) फलोदकम् (5) लोहोदकम् (6) मार्जनोदकम् (7) गन्धोदकम् (8) अक्षतोदकम् (9) यवोदकम् (10) पाद्योदकम् (11) अर्घ्योदकम् (12) आचमनोदकम् (13) पञ्चगव्यम् (14) दधि (15) पयः (16) मधु (17) कषायोदकम्।

[ना. सं. २०. श्लो० ४६-४९]

**2. मध्यमस्नपनपीठे कोष्ठसंख्या–277**

अत्र अधमस्नपनापेक्षयाधिकानि द्रव्याणि

(18) गुलोदकम् (19) इक्षुरसः (20) नालिकेररसः (21) शान्तिवारि।

[ना. सं. २०. श्लो. ७०-७४]

**3. उत्तमस्नपनपीठे कोष्ठसंख्या–473**

अत्र मध्यमस्नपनापेक्षया अधिकं द्रव्यम्

(22) मङ्गलोदकम् [ना. सं. २०. श्लो. ७९-८१]

[अत्र द्रव्यैः सह निर्दिष्टाः संख्याः पीठेषु कोष्ठस्थाः संख्याः अनुसरन्ति। स्नपनत्रयपीठेषु संख्यारहितकोष्ठेषु शुद्धोदकयुक्तानां घटानां स्थापनं निर्दिष्टम्।]

---



हृदयमुद्रा ६.६-७



शिरोमुद्रा ६.७-८



शिखामुद्रा ६.८-९



कवचमुद्रा ६.९-१०



नेत्रमुद्रा ६.११-१२



उदरमुद्रा ६.१२-१३



पृष्ठमुद्रा ६.१३



बाहुमुद्रा ६.१४



ऊरुमुद्रा ६.१५



जङ्घामुद्रा ६.१५-१६



पादमुद्रा ६.१५-१६




भद्रकमण्डलम् ८.८-१८; २१-२८; ३३; ५१; ६३

1. कर्णिकाक्षेत्रम्
2. केसरक्षेत्रम्
3. दलसंधिक्षेत्रम्
4. दलाग्रक्षेत्रम्
5. पीठम्
6. वीथिः
7. द्वारम्
8. शोभा
9. उपशोभा
10. कोणः
11. बहिरावरणरेखा



स्थानकवासुदेवः १३.१७७-१८२



दुर्गा १३.३३२-३३४

उ-

16 13 17

प- 12

| 7 | 8 | 9 |
|---|---|---|
| 6 | 1 | 2 |
| 5 | 4 | 3 |

10 पू-

15 11 14

द-

अधमस्नपनपीठम् २०.३१-३५

कलशसंख्या–81.

(कोष्ठस्थसंख्याविवरणं अनुबन्धे द्रष्टव्यम्)




उत्तमस्नपनपीठम् २०.७९-८१

कलशसंख्या-473

(कोष्ठस्थसंख्याविवरणं अनुबन्धे द्रष्टव्यम्)

# शुद्धिपत्रम्

| अशुद्धः पाठः | शुद्धः पाठः | अध्यायः | श्लो० पादः |
|---|---|---|---|
| स्थाप्य | सिंच्य | २ | ९२ a : |
| पत्रैगः | पत्रगैः | ७ | २६ b : |
| अर्ध | अर्थ | ८ | २१ c : |
| मिलुम्पेत् | विलुम्पेत् | ८ | २६ b : |
| तः | ततः | ८ | २६ d : |
| द्वर्ाँ | द्वर्ा | ८ | ३७ d : |
| व्यस्थितः | व्यवस्थितः | ८ | ३९ d : |
| दद्म | पद्म | ८ | ८० b : |
| वर्णर्ध्वँ | वर्णध्वं | ९ | ३८ b : |
| अतन्तम् | अनन्तम् | ९ | १४९ a : |
| ग्राम्याः | मुद्राः | १२ | ३ a : |
| प्रसृताम्यां | प्रसृताभ्यां | ,, | १७ a : |
| मघ्या० | मध्या | १३ | ३३३ b : |
| तस्मात् | ततस्तस्मात् | १४ | १०४ a : |
| पूर्वास्यां | पूर्वस्यां | १४ | १०७ a : |
| आग्नेऽयां | आग्नेय्यां | १४ | १३१ b : |
| | | | १३५ c : |
| न्यग्रधो | न्यग्रोधो | १५ | ३६ a : |
| प्राक् | वाक् | १५ | १७५ c : |
| विमान | ऽभिमान | १५ | १८० a : |
| ०कोतोमः | कोत्तमः | १५ | १८५ b : |
| पृष्ट | पृष्ठ | १५ | १९५ c : |
| राष्टौ | राष्ट्रौ | १७ | ५६ b : |
| शकृता | शकृदा | १९ | ९ b : |
| धटिका | घटिका | १९ | १४ a : |
| ब्रह्मं | ब्रह्म | १९ | ३९ b : |
| तौर्थ | तीर्थ | १९ | ९२ c : |
| वहेर्युः | वहेयुः | १९ | १३३ b : |

